श्रीशरणदेवकृता श्रीसर्वरक्षितप्रतिसंस्कृता

# दुर्घटवृत्तिः

श्रीनारायणमिश्रः



रत्ना पब्लिकेशन्स, कमच्छा, वाराणसी

रत्नभारती-ग्रन्थमाला—१२

सप्रेम भेंट

7/5/86

श्रीशरणदेवकृता श्रीसर्वरक्षितप्रतिसंस्कृता

# दुर्घटवृत्तिः

काशीस्थहिन्दूविश्वविद्यालयीयसंस्कृतविभागे

प्राध्यापकेन

**श्रीनारायणमिश्रेण**

कृतया विवृत्या

परिशिष्टादिना च समेता



**रत्ना पब्लिकेशन्स, कमच्छा, वाराणसी**

प्रकाशकः
रत्ना पब्लिकेशन्स
बी० २१।४२ ए०
कमच्छा, वाराणसी

प्रथम संस्करणम् १९८५

मूल्यम् : ५०.००

मुद्रकः
रत्ना प्रिंटिंग वर्क्स
कमच्छा, वाराणसी

Ratnabharati Series—12

# THE DURGHAṬAVṚTTI

*by*

ŚARAṆADEVA

*Revised by*

ŚRĪ SARVARAKṢITA

*With*

THE VIVṚTI

and Appendices

*by*


ŚRĪNĀRĀYAṆA MIŚRA,

*Reader*

Department of Sanskrit

Banaras Hindu University, Varanasi.





RATNA PUBLICATIONS, KAMACHHA, VARANASI

# प्रस्तावना

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं सुमेधाम् ॥

सर्वार्थसाधकस्य वाग्ब्रह्मणो विवर्त्तभूतेऽस्मिञ्जगति वचोज्योतिरन्तरेणान्धं तम एवावरीवर्त्स्यतेति हेतोर्वाचो महत्त्वं सर्वातिशायि । सैषा तत्त्वतः प्रतिपन्ना सर्वान् कामान् प्रसवित्री हिनस्त्येव तानन्यथेति शब्दानुशासनं नाम शास्त्रमुत्सर्गापवादलक्षणान्वितं पदसाधुत्वज्ञापकमवश्यमेवाध्येयं सर्वैरपि प्रेक्षावद्भिरिति निर्विप्रतिपन्नम् । तत्र सत्स्वपि बहुविधेषु व्याकरणेषु पाणिन्युपज्ञमेवैतद् व्यापकत्वादतिशयितमिति सर्वैरभ्युपगतमेव । ऐन्द्रव्याकरणस्योत्कर्षश्रुतिस्त्वर्थवाद एवेत्यस्माभिरुपेयते । वाक्तत्त्वस्य चापरिमेयत्वात् सन्त्येव भूयांसः शब्दास्तत्र तत्र शिष्टैः प्रयुक्ता येषु केचनापाततोऽन्ये च परमार्थत एव बहुविषयस्याप्यस्य पाणिनीयतन्त्रस्य विषयतामतिक्रान्ताः । अतोऽर्वाचीनैः पाणिन्यनुयायिभिर्यथायथमुपक्रान्तमापाततोऽविषयाणां शब्दानां पाणिनिमतेनापि साधुत्वप्रतिपादनाय । तत्र शरणदेवेन मूलत उपनिबद्धा सर्वरक्षितेन च संक्षिप्य प्रतिसंस्कृता दुर्घटवृत्तिरुपलब्धेष्वेवंविधेषु ग्रन्थेषु प्राचीनतमा ।

इतः पूर्वमपि मैत्रेयरक्षितेन पुरुषोत्तमदेवेन च रचिते दुर्घटवृत्ती आस्ताम्, ये सम्प्रत्यनुपलभ्यमाने स्त इति युधिष्ठिरमीमांसकमहाशयादीनांनिर्णयः । शरणदेवश्च मैत्रेयपुरुषोत्तमाभ्यामतीव प्रभावित इति तत्र तत्र प्रकृतवृत्तिदर्शनेन स्पष्टं ज्ञायत एव । काशिकान्यासानुन्यासादीनामाधमर्ण्यं च पदे पदे दृश्यत एवात्र ।

**प्रकृतवृत्तिरचयिता—**

सामान्यत इयं प्रसिद्धिर्यदियं वृत्तिः शरणदेवेन निर्मितेति । अत्र चारम्भे—

वाक्याच्छरणदेवस्यच्छात्रावग्रहपीडया ।
श्रीसर्वरक्षितेनैषा संक्षिप्य प्रतिसंस्कृता ॥

इति स्पष्टं निर्देशादियमुपलभ्यमाना वृत्तिर्न शरणदेवोपनिबद्धा, अपि तु तद्वृत्त्यनुसारं सर्वरक्षितेनेति निश्चयः । अत एव वृत्तावस्याम् सर्वरक्षितस्य नाम निर्दिष्टमास्ते । श्रीसर्वरक्षितेति श्रीघटितनिर्देशात् सर्वरक्षितः शरणदेवस्य गुरुरिति गणपतिशास्त्रिकल्पनं नातीव समञ्जसमिति विद्वांसो विवेचयन्तु ।

**रचनाकालः—**

अस्या रचना १०९५ शकाब्दे ११७२ खैस्ताब्दे कृतेति ग्रन्थादौ ग्रन्थकृतैवोक्तम्—

शाकमहीपतिवत्सरमाने एकनभोनवपञ्चविताने ॥ इति ।
अतोऽत्र न कश्चिदवसरो विवादस्य ।

**प्रकृतदुर्घटवृत्तेर्वैचित्र्यम्—**

इयं वृत्तिरतीव महत्त्वपूर्णेत्यत्र न विवादः । गीतगोविन्दे 'शरणः श्लाघ्यो दुरूहद्युतेः' (प० ४) इत्युक्त्यास्या महिमा गीयते । परवर्त्तिभिर्वैयाकरणैरप्यस्याः क्वचिन्निराकरणेऽपि गौरवमङ्गीकृतमेवेति ज्ञायत एव सर्वैः ।

अस्यां वृत्तौ विविधेभ्यो ज्ञाताऽज्ञातग्रन्थेभ्यो वाक्यानि पदानि बोद्धृत्य पूर्वपक्षोपस्थापनपुरस्सरं तेषां समर्थनं विहितम् । क्वचिच्चापाणिनीयत्वमपि निर्दिष्टं तस्य तस्य शब्दस्य । परमिदमतीव विस्मयकरं यद्बहुषूदाहरणेषु प्रसिद्धं शुद्धं पाठमुपेक्ष्याऽप्रसिद्धमशुद्धं वा पाठमादाय पूर्वपक्षयित्वा सिद्धान्ते क्वचित्तस्यैव युक्त्यन्तरेण समाधानं क्वचिच्च प्रसिद्धशुद्धपाठप्रतिपादनं कृतं वृत्तिकृतेति । यथा—

१. 'लभन्ति पुनरुत्थानम्' इति (पृ० २२) ।
२. 'परापवादसस्येषु' । इति (पृ० ४३) ।
३. 'चतुर्दिशीशानवमन्य' इति (पृ० ८८) ।
४. 'महाँ हि यत्नस्तव देवदारौ' इति (पृ० २१४) ।

शैली चास्या दुरूहा, विशेषेण वाक्यशैथिल्यहेतोरिति तत्र तत्राध्येतॄणां दर्शनपथमागच्छत्येव । सन्ति चात्र बहवो विषया येऽनेकशः परामृष्टाः । तत्र शिष्याणां दृढप्रतिपत्तिरेव प्रायेण प्रयोजिका ।

**सम्पादनम्—**

वृत्तिरियं पूर्वं त्रिवेन्द्रमसंस्कृतग्रन्थमालायां (६) प्रकाशिता १९०९ खैस्ताब्दे । परस्ताच्च म० म० गणपतिशास्त्रिभिः संशोध्य १९४२ खैस्ताब्दे द्वितीयं संस्करणमपि प्रकाशितम् । अत्र सम्पादकमहाशयैः क्वचित् पाठः संशोधितः, क्वचिच्च टिप्पण्यपि समायोजिता ग्रन्थार्थस्फोरणाय । प्राध्यापकेन लोइ रेनो ( Louis Ronous. ) महोदयेन चेषा वृत्तिः १९४१-४५ खैस्ताब्दमध्ये प्रकाशिता । परमिदं संस्करणं कृतप्रयत्नेनाऽपि मया नासादितमिति दौर्भाग्यमेत्र । यत्र पूर्वसंशोधनमुचितमनुभूतं तत्र तस्य समावेशः कृतः, यत्र पुनरयुक्तं तत्परामृष्टं तत्र प्रकारान्तरं चाश्रितम् अन्यत्रापि यथासम्भवं संशोधनादि विहितम् । उद्धरणानि कियन्ति सन्ति निर्दिष्टानि येषां मूलं न दर्शितम् ।

तत्र येषां मूलं ग्रन्थमुद्रणकालेऽन्विष्टं तेषां शुद्धं रूपम्, परस्ताच्चोपलभ्यमान-मूलानामुद्धरणानां निर्देशः शुद्धिपत्रे कृतः, तानि संशोध्यैव वृत्तिरियं पठितव्येति भूयो भूयो निवेदनम्। अन्यथा ग्रन्थतात्पर्यविबोधे महान् क्लेशः स्यात्। मूलानु-पलम्भात् कानिचिदुद्धरणानि न संशोधितानि।

अस्या एकं संस्करणमधुनेव कृतप्रकाशनमास्ते दिल्लीस्थभारतीप्रकाशनाध्य-क्षेण। अत्र दिल्लीविश्वविद्यालयप्राध्यापकेन डॉ० श्रीरणजीतसिंहसैनीमहाशयेन प्रस्तावना लिखिता, अन्ते चोद्धरणसूच्यपि निवेशिता। परमत्र न प्रथमसंस्करणाद् भेदः कश्चन मूले। स एव ग्रन्थः प्रतिबिम्बितोऽत्रापि मूले। उद्धरणसूच्यामपि सन्ति तादृश्योऽशुद्धयो याः खेदावहाः।

**विवृतिः—**

अस्या दुर्घटवृत्तेः काऽपि व्याख्याऽद्ययावदश्रुतपूर्वैव। अतोऽस्या अतिदुरू-हतया शिष्याणां सुखप्रतिपत्तये विवृतिर्विरचिता। तत्र पूर्वाचार्यवचसामेव यथा-सम्भवं समावेशः। सन्ति च क्वचिद् विप्रतिपत्तयोऽपि वृत्तिकृन्मते नव्यानाम्, ताश्च यथासम्भवं संक्षिप्तं निर्दिष्टाः। क्वचित् क्वचिदुद्धृतवचसामशुद्धेर्व्याख्यानकाले तानि न परामृष्टानि, क्वचिच्चोक्तमपि किञ्चित्परस्तान्मूलवाक्यलाभेऽनावश्यकमिव विवृताविति न्यूनता परिहरिष्यतेऽग्रे यथावसरम् इत्यभिलाषो वर्त्तते। अतः परं विश्वनाथ एव प्रमाणम्। वृत्तो विवृतौ च सन्ध्यभावोऽर्थविबोधसौकर्यार्थं कृतः क्षन्तव्यो विपश्चिद्भिः।

अन्ते चास्य ग्रन्थस्याधुना क्रय्यत्वाभावात्स्वपुस्तकालयग्रन्थप्रदानेनोपकृतवद्भ्यः पार्श्वनाथविद्याश्रमशोधसंस्थाननिदेशकेभ्यो विद्वद्वरेभ्यः डॉ० श्रीसागरमलजैन-महाशयेभ्यः, ग्रन्थग्रन्थिमुद्ग्रथयितुं दत्तावसरेभ्यः पूज्यचरणेभ्यो वाराणसेय-संस्कृतविश्वविद्यालयीयव्याकरणविभागाध्यक्षचरेभ्यो वैयाकरणशिरोमणिभ्यः प्रो० श्रीकालिकाप्रसादशुक्लमहानुभावेभ्यः, अस्मद्विभागीयेभ्यः कृतसाहायकेभ्यो विद्वद्वरेभ्यः प्रो० श्रीवीरेन्द्रकुमारवर्ममहाशयेभ्यः प्रो० श्रीविश्वनाथभट्टाचार्य-महाभागेभ्यश्च प्रणामाञ्जलीन् समर्पयन् रत्नाप्रकाशनाध्यक्षस्य श्रीविनयशङ्कर-शर्मणश्च साधुवादं कुर्वन् विदुषश्च ग्रन्थाऽशुद्धिसूचनार्थं सम्प्रार्थयन् काशीपुरा-धीश्वराय परमेश्वराय स्वकीयां कृतिमिमामर्पयति—

संस्कृतविभागः, का० हि० वि० वि०
गुरुपूर्णिमा—१९४२ वि० स०

विद्वद्विधेयः—
श्रीनारायणमिश्रः

# शुद्धिपत्रम्

| | | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| पृ० ३ | पं० १७ | तुलल्यास्य० | तुल्यास्य० |
| ,, ११ | ,, २ | प्रत्ययत्वस्याव्याहतत्व | प्रत्ययत्वमस्याव्याहत- |
| ,, १२ | ,, ९ | ····गन्धलुब्धैरधिक० | गन्धलब्धेरधिक० |
| ,, १३ | ,, १८ | ····वार्त्तिकेणै- | वार्त्तिकेनै- |
| ,, १३ | ,, १७ | ईन्धिभवतिभ्यां | इन्धिभवतिभ्यां |
| ,, २७ | ,, २४ | ····नाथे विजहिहि संरम्भम्' ····सङ्गरसंरम्भं···· | ····नाथे प्रसीद विजहीहि सङ्गरारम्भम्'····सङ्गरारम्भं···· |
| ,, ३४ | ,, ८ | प्रोयाभ्यां···· | प्रोपाभ्यां···· |
| ,, ३५ | ,, २१ | 'अन्वेषमाणं मुहुः' | 'अन्वेषमाणो मुहुः' |
| ,, ३५ | ,, २१-२२ | 'प्रेषे तत्क्षणमास्यानाम्' | 'पर्येषेत क्षयात् स्थानम्[१]' |
| ,, ३६ | ,, १८ | इत्येत्यर्थः । | इत्यस्येत्यर्थः । |
| ,, ३६ | ,, २१ | इति जान्तः, | इति डान्तः, |
| ,, ३७ | ,, ८ | 'शिरः कम्प्यते' | 'शिरः कम्प्ययते' |
| ,, ३७ | ,, १० | ····वृत्तौ | ····वृत्तौप्रथमाध्याये तृतीयः पादः॥ |
| ,, ३९ | ,, २३ | पति समास···· | पतिः समास···· |
| ,, ४३ | ,, १ | ग्रन्था | ग्रन्थः |
| ,, ४४ | ,, १३ | ऊस्मान्द्वेष्टि ? | अस्मान् द्वेष्टि ? |
| ,, ४६ | ,, ९ | पृतनाषाड्द्विषो | पृतनाषाड्द्विषो |
| ,, ४८ | ,, ६ | ····मयावि····विवा | ····मथावि····विव |
| ,, ४८ | ,, १३ | एवेत्यधारणम्' | एवेत्यवधारणम्' |
| ,, ४९ | ,, २६ | 'पितौ घः' इति | 'पितौ घः' इति वा |
| ,, ५९ | ,, १७ | सक्तत्यशालिनः' | सत्कृत्यशालिनः' |
| ,, ६१ | ,, ४ | जैनेन्द्रो····दुष्टाः····शब्दाः | जैनेन्द्रोक्तः कालदुष्ट एवापशब्दः[२] |
| ,, ६८ | ,, १८ | निधिर्जलानाम्' | निधेर्जलानाम्' |
| ,, ८५ | ,, ११ | यदि तु 'अमोदं | यदि तु 'आमोदं |

१. अर्थशास्त्रे 'पर्येषेत क्षयात् स्थानम्' ( ७।१९।१ ) इति पठ्यते । मन्ये तस्यैव स्खलितं रूपं पूर्वं मुद्रितमासीत् ।

२. अयं जैनेन्द्रो देवनन्दी एव, तस्य च शब्दावतारन्यासो बहुषु ग्रन्थेषु निर्दिष्टः ।

| | | | | |
|---|---|---|---|---|
| पृ० ९० | पं० २० | ''''मंमन्ये' | | ''''मंमन्थे' |
| ,, ९५ | ,, २६ | ''''शब्दात् (साव'''' | | ''''शब्दे साव'''' |
| ,, १०३ | ,, १५ | पाणायानिति । | | पणायानिति । |
| ,, १०४ | ,, २ | तीर्णलौहित्य' | | तीर्णलौहित्यः' (इति पाठो यदि रघुवंशस्य पाठान्तरमेतत्) |
| ,, १०७ | ,, १८ | लज्जा कुती | | लज्जा कुतो |
| ,, १०८ | ,, ६ | दव दावो वनानलः' | | 'दवदावौ वनारण्य' |
| ,, ११५ | ,, १५ | स्यात् । | | स्यात् ? |
| ,, ११६ | ,, २३ | 'दन्तिः (?)'''' | | '''''दत्तिः |
| ,, ११८ | ,, १७ | कस्तूरिकाद्रं | | कस्तूरिकाऽस्त्रं |
| ,, ११८ | ,, १९ | 'परिमयः कस्तूरिकाद्रं | | परिमलः कस्तूरिकाऽस्त्रं[1] |
| ,, १२० | ,, २६ | 'मादो मदः' | | 'मादो मदे' |
| ,, १२२ | ,, ३ | कैयटे । आद्युदात्तत्वमिति । | | कैयटे । क्विन्प्रत्यय आद्युदात्तत्वमिति |
| ,, १२७ | ,, ६ | 'माच्छादयामि' | | 'माच्छादयति' |
| ,, १३५ | ,, ५ | 'ईक् कृष्यादिभ्यः' | | 'इक् कृष्यादिभ्यः' |
| ,, १४३ | ,, १२ | ममात्रे | | भमात्रे |
| ,, १४७ | ,, ४ | 'पञ्चनीयः' | | 'पञ्चजनीयः' |
| ,, १४९ | ,, ७ | तद्भागकर्मणोः' | | तद्भागकर्मणी' |
| ,, १५२ | ,, ८ | सामा सर्जत्विलजिति (?) | | सा मा रमा जलधिजा' इति |
| ,, १५२ | ,, १५ | 'इव व्याप्तौ' | | 'इवि व्याप्तौ' |
| ,, १५७ | ,, १४ | 'चाधीनो निघ्न | | च 'अधीनो निघ्न |
| ,, १५९ | ,, १८ | विगतनासिकः' | | विगतनासिके' |
| ,, १६२ | ,, १५ | 'व्यधौ वेधे' | | 'व्यधो वेधे' |
| ,, १६३ | ,, १० | मरतकाह्वयः' | | मरकताह्वयः' |
| ,, १७० | ,, १० | लोपलक्षितौ' | | नोपलक्षितौ' |
| ,, १७० | ,, १६ | यतस्तौ च | | जगतुस्तौ |
| ,, १७० | ,, २० | कुशलवयो''''सम्वन्घश्च । | | जनितकुशलवयो''''सुबन्धुश्च । |
| ,, १७६ | ,, ८ | ग्रहणे सति । इत्यतः परम्- | | "''''नखिशब्दस्येकारान्तत्वात्तत्र दीर्घ इत्याशङ्कायामाह-" इति पूरणीयम् । |

---

१. विवृतिलेखनावसरे उद्धरणस्यालाभात्तदनुसारेणोक्तं तत्र । सम्प्रति ११९ पृष्ठे विवृतौ यथोचितं संशोधनं कृपया विधेयम् । एरजन्तत्वाभावेऽपि परिमलशब्दस्य पचाद्यजन्तत्वेनात्रोपन्यासो विहितो वृत्तिकृतेति ध्येयम् । एषा च शैली वृत्तिकृतोऽन्यत्रापि दृश्यते ।

| | | | |
|---|---|---|---|
| पृ० १७८ | पं० २६ | संख्येयम्' | संख्यातम्' |
| ,, १८४ | ,, १३ | पथि''''वीथिको | पथि विचरतः को |
| ,, १८८ | ,, २२ | गच्छन्ति' | गच्छति' |
| ,, १९१ | ,, १९ | (दैवारुतो''''रुचकेन' | 'दैवात्ततो विगलितो गिलितो बकेन' |
| ,, १९८ | ,, २ | पदपाः' | पादपाः' |
| ,, १९८ | ,, १८ | प्रतीयते । | अतः परम् ''आपिशल्यादि पाठे श्राम इत्येव पठितमपि'' इति पूरणीयम् । |
| ,, १९८ | ,, २४ | शाश्चतिकः' | शाश्वतिकः' |
| ,, २०२ | ,, २१ | जाहिहि | जहिहि |
| ,, २०९ | ,, २२ | '(अर्थ + य?)रजोपमा' | 'अर्थाः पादरजोपमाः' |
| ,, २१६ | ,, १९ | नाज्झकलाविति | नाज्झलाविति |
| ,, २२० | ,, २४ | बहुवचने प्रकृतं | बहुवचनेऽपि । अत्र प्रायः रामायणस्थं षष्ठ्येकवचने प्रकृतं |
| ,, २२१ | ,, ८-९ | कृतकर्मणेत्यादौ | कृतकर्मण इत्यादौ |
| ,, २२४ | ,, २० | वाग्मीति | वाग्ग्मीति |

एतदतिरिक्ता अप्यत्र सन्ति कियत्योऽशुद्धयो वर्णमात्रादि-विषयिण्यः। उद्धरणचिह्न-मपि क्वचित् स्खलितं क्वचिच्चास्थाने पतितम् । एकतकारस्थाने तकारद्वयं तद्विपर्ययः, नकारणकारयोर्विपर्यासः, वकारवकारयोर्व्यत्यासश्च जातः। सर्वाश्चैता अशुद्धीः कृपया स्वयं संशोध्य पठितव्येयं वृत्तिः सविवृतिरित्यभ्यर्थना ॥

——

श्रीशरणदेवकृता

# दुर्घटवृत्तिः

श्रीनारायणमिश्रकृतविवृत्युपेता

## प्रथमाध्याये प्रथमः पादः ।

नत्वा शरणदेवेन सर्वज्ञं ज्ञानहेतवे ।
बृहद्भट्टजनाम्भोजकोशवीकासभास्वते ॥१॥
शाकमहीपतिवत्सरमाने एकनभोनवपञ्चविताने ।
दुर्घटवृत्तिरकारि मुदे वः कण्ठविभूषणहारलतेव ॥२॥
वाक्याच्छरणदेवस्य च्छात्रावग्रहपीडया ।
श्रीसर्वरक्षितेनैषा संक्षिप्य प्रतिसंस्कृता ॥३॥

### विवृतिः

श्रीगुरुचरणसरोजद्वन्द्वं प्रत्यानतः कुरुते ।
श्रीनारायणमिश्रो दुर्घटवृत्तेर्विवृतिमेताम् ॥ १ ॥
मुनित्रितयसन्दृब्धाऽवदातवचनोज्ज्वले ।
शब्दानुशासने कोऽर्थमपूर्वं कल्पयेन्नरः ॥ २ ॥
तत्सामान्यविशेषवर्णनपरैः पूर्वोदितैर्वाङ्मयै-
रेकीकृत्य निवेदितैरिह यथाबोधं विधातुं यते ।
सन्तोषं विदुषां भगीरथहृतैर्गङ्गाजलैर्निर्मलै-
र्लोकः किं कृतकृत्यतां न भजते सन्तर्प्य देवान् पितॄन् ॥ ३ ॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—नत्वेति । ज्ञानहेतव इति । फलमत्र हेतुशब्दार्थः । वीकासेति । उपसर्गस्य घञ्यमनुष्ये बहुलम् इति दीर्घः । एकेत्यादि । १०९५ शकाब्द इत्यर्थः । यद्यप्यङ्कस्य वामा गतिः प्रसिद्धा तथाप्यसम्भवादत्र सा नाश्रयितुं शक्यते ॥

## क्ङिति च ।। १।१।५ ।।

कथं 'ह्रु ह्वरेश्छन्दसि' (७।२।३१) इति, ह्वृधातोरिकि गुणनिषेधादुच्चारणार्थेकारेणानङ्गत्वाद् गुणाभावात् ? उच्यते । अत एव निर्देशादिति रक्षितः । शबन्तस्यैकदेशस्योच्चारणार्थेकारेण वा निर्देशः ।। कथं नित्यं तुन्दपरिमृजः, 'तुन्दशोकयोः परिमृजापनुदोः' (३।२।५) इति कप्रत्यये 'मृजेरजादौ सङ्क्रमे विभाषा वृद्धिरिष्यते' इति वृद्धिप्रसङ्गात् ? उच्यते । व्यवस्थितविभाषया न वृद्धिः । अचीति वाच्येऽजादिग्रहणं मुख्याजादिपरिग्रहार्थम् । तेन तुन्दपरिमृज इति । तत्रैवं[1] बोध्यम्—'यस्मिन् विधिस्तदादौ' इत्यादिना आद्यर्थे सिद्धे आदिग्रहणाद् 'द्विर्बद्धः सुबद्धो भवति' इति अजादिरेव ग्राह्यः । कप्रत्ययेऽनुबन्धसत्त्वे नाजादित्वम् । मार्जन्तीत्यत्र त्वादेशस्याजादित्वमेव । एकमुनिपक्षे तु 'अचो ञ्णिति' (७।२।११५) इत्यत्राच इति योगं विभज्य 'मृजेर्वृद्धिः', 'जराया जरसन्यतरस्याम्' (७।२।१०१) इत्यस्मादन्यतरस्यांग्रहणानुवृत्तेर्व्यवस्थितविभाषाऽत्रोक्ता । रक्षितेन च धातुप्रदीपे तुन्दपरिमृजस्तुन्दपरिमार्ज इत्युभयं दर्शितम् । भाष्ये तु व्यवस्थितविभाषाया अनुदाहृतत्वादुभयप्रयोगो लक्ष्यते ।। कथं जिष्णुः, 'ग्लाजिस्थश्च क्स्नुः' (३।२।१३९) इत्यत्र स्थास्नुरिति सिद्धये गिच्चायं न किदिति व्याख्यातम् ? उच्यते । गकारप्रश्लेषादत्र सूत्र इति वृत्तिः । तदुक्तम्—

'स्नोर्गित्वान्न स्थ ईकारः क्ङिद्ङितोरीत्वशासनात् ।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः ।।'

अन्ये तु स्थास्नुसिद्धये स्था आ इत्याकारप्रश्लेषाद् 'घुमास्था०' (६।४।६६) इति नेत्वमिति च वर्णयन्तः कित्त्वाद् गुणाभावमाहुः ।। क्ङित्त्वेवं 'दंशेश्छन्दस्युपसङ्ख्यानम्' इति 'दङ्क्ष्णवः पशवः' इति न सिध्यति, अनुनासिकलोपप्रसङ्गात् ? उच्यते । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्यदोषः ।।

---

१. 'तत्रेदं' इति मुद्रितः पाठः ।

अनङ्गत्वादिति। इकारस्य प्रत्ययत्वाभावेन इवृ इत्यस्यानङ्गत्वादिति भावः। शबन्तस्येत्यादि। तथा चाह हरदत्तोऽपि—'आगन्तुकेकारेण गुणेन निर्देशः' इति। मृजेरजादाविति वैयाकरणान्तरमतमिति स्पष्टम् इको गुणवृद्धी इति सूत्र-भाष्ये। अत्र संक्रम इति गुणवृद्धिप्रतिषेधविषयक्ङितः प्राचां संज्ञा। व्यवस्थित-विभाषयेति। एतदेव न्यासकारादिमतम्। तथा च यूयं ममृजेत्यादौ वृद्धिविकल्पा भवत्येवेत्याशयः। हरदत्तादिसम्मतं समाधयन्तरमाह—अचीत्यादि। उक्तवचन इति शेषः। वाच्य इति। 'यस्मिन् विधिः' इत्यादिनैव तदर्थलाभादिति भावः। परिग्रहार्थमिति। तथा चानजादौ के परे तुन्दपरिमृज इत्यादौ न विकल्पेन वृद्धिः। आलस्यभिन्नेऽर्थे तु तुन्दपरिमार्ज इति प्रयोगोऽणन्त एवेति बोध्यम्। एकमुनीत्यादि। एतच्च इको गुणवृद्धी इति सूत्रभाष्ये, तुन्दशोकयोः इति सूत्रस्य प्रकृतसूत्रस्य च न्यासे स्पष्टम्। इत्युभयमिति। आत्रेयोऽप्येवमेवाह। तथा च माधवः—'आत्रेयस्त्वत्रापि भवति' इति। भाष्य इति। एतच्च इको गुण० इति सूत्रस्थभाष्यादापाततो लभ्यते। तुन्दशोकयोः इति सूत्रस्थभाष्येण तु नैतल्लभ्यते।

जयादित्यमतेन समाधानमाह—गकारप्रश्लेषादिति। वामनमतेनाह—अन्ये त्विति। किन्त्वेवमिति। ग्लाजिस्थश्च क्स्नुः इति सूत्रे गकारप्रश्लेषाभाव इत्यर्थः। इत्यदोष इति। यद्वा नाञ्चेः पूजायाम् इत्यत्र नेति योगविभागेनेष्टसिद्धिः॥

## तुल्यास्यप्रयत्नं सवर्णम् ॥१।१।९॥

कथं प्रक्लृप्यमानः, 'ऋकारलृकारयोः सवर्णसंज्ञा वक्तव्या' इति 'ऋवर्णाच्च' इति णत्वप्रसङ्गात्? उच्यते। उरिति वक्तव्ये वर्णग्रहण-मस्यानित्यत्वार्थम्। तेन। यद्वा 'ऋलृक्' इत्यत्र प्रत्याहारे लृग्रहणं शक्यमकर्तुम्। यथा सावर्ण्यादृकार ऋकारं गृह्णाति, तथा लृकारमपि ग्राहयिष्यति, किं लृकारेण। तज्ज्ञापयति ऋकारलृकारयोः सावर्ण्यम-नित्यमिति। तेन यथा क्लृप्तशिख इति 'गुरोरनृतः' (८।२।८६) इति प्लुतो भवति, न त्वनृत इति प्रतिषेधः, तथा प्रक्लृप्यमान इति णत्वा-भावः॥

प्रक्लृप्यमान इति। अत्र क्लृप्यमान इति प्रकृत्यैव प्रश्नोत्तरनिर्वाहसम्भवे सत्युपसर्गपर्यन्तानुधावनं ग्रन्थकृतो निरर्थकमेव। सावर्ण्यमनित्यमिति। एतच्चोद्-भाष्यं समाधानम्। णत्वाभाव इति। असत्यपि सावर्ण्ये प्रक्लृप्यमान इत्यादौ कृत्यचः इति प्राप्तस्य णत्वस्य निषेधाय यथा वर्णैकदेशस्य वर्णग्रहणेनाग्रहणमिति

पक्षे क्षुम्नादित्वं कल्प्यते तथैव वल्प्यमान इत्यत्राप्युपपत्तौ सावर्ण्यानित्वज्ञापनमुद्भाष्यं न रोचयामहे। वर्णैकदेशस्य वर्णग्रहणेन ग्रहणे त्वाद्ये 'चुटुतुलशर्व्यवाये न' इत्यनेनेष्टसिद्धिरिति विशेषः॥

## ओत् ॥ १।१।१५ ॥

कथमगौर्गौः समपद्यतेति गोऽभवदिति, च्व्यन्तत्वान्निपातत्वेन प्रगृह्यत्वात् पूर्वरूपत्वाभावात्? उच्यते। च्व्यन्तेऽध्यारोपितगोत्वाद् गौणत्वम्। 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति यथा 'गौरनुबन्ध्योऽजोऽग्नीषोमीयः' इत्यत्र न वाहीकोऽनुबध्यते॥ एवञ्च गौर्वाहीकः, गां बाहीकमिति वृद्ध्यात्वे न स्याताम्? उच्यते। पदसंस्कारपक्षे बाहीकाद्यर्थानपेक्षया वृद्ध्यात्वे भविष्यत इति भाष्यभागवृत्ती॥

प्रगृह्यत्वादिति। ऊर्यादिच्विडाचश्च इति सूत्रेण निपातत्वादित्यर्थः। संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणप्रतिषेधात् च्यन्तस्य कथं निपातत्वमिति न शङ्क्यम्, केवलप्रत्ययस्य क्रियायोगाभावेन सामर्थ्यात्तदन्तविधिस्वीकारादिति च्व्यन्तस्यैवान्ततो निपातत्वमिष्टमिति। अध्यारोपितेत्यादि। जाड्यादिना गोत्वस्यारोप इत्यर्थः। गौणमुख्ययोरिति। लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाहः, गमेर्डो इति साक्षादोकारस्योच्चारितत्वेनास्य प्रतिपदोक्तत्वात्। लाक्षणिकत्वं तु तत्रैव यत्र आद्गुणः इत्यादिसामान्यलक्षणेन रूपनिष्पत्तिरिति भावः। शङ्कते—एवञ्चेति। पदसंस्कारपक्ष इति। प्रयोगार्हस्य पदस्यार्थबोधे पदार्थान्तरान्वयबाधप्रतिसन्धाने गौणत्वावगतेरिति तात्पर्यम्॥

## न बहुव्रीहौ ॥ १।१।२९ ॥

कथं त्वकत्पितृकः, मकत्पितृक इति, बहुव्रीहौ सर्वनामत्वाभावादकचोऽप्रवृत्तेः? उच्यते। गोनर्दीयमतेनान्तरङ्ग एवाकच्। यथाह—'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' इति। प्रत्यङ्गावन्तरङ्गावित्यनुन्यासकारः। धातुवृत्तावुक्तम्—त्वत्कपितृकः, मत्कपितृक इति बहुव्रीह्यर्थे वृत्तत्वात् समानकाल एव निषेधादकचोऽप्रवृत्तिः। प्रागिवात् क एव भवति। तथा च भाष्यम्—'विधिनिषेधौ च समानकालौ' इति॥

गोनर्दीयमतेनेति । गोनर्दीयो भाष्यकारः । एतन्मते हि त्वकत्पितृक इत्यादौ निषेधाऽप्रवृत्तेः समुदाये च प्रियविश्वादौ महासंज्ञाकरणसामर्थ्यादेव सर्वनामत्वाप्रसक्त्या सूत्रमिदं नारब्धव्यम्, महासंज्ञासिद्धार्थप्रपञ्चकं वा बोध्यम् । अकृतव्यूहपरिभाषा तु नास्त्यवेति न तदनित्यत्वज्ञापनायेदम् । अनुन्यासकार इति । प्रत्यङ्गशब्दस्यायमर्थस्तु अचः परस्मिन्० इतिसूत्रभाष्याद्यनुसारेण लभ्यते । अन्ये पुनर्बहुव्रीहिशब्दस्यात्र सूत्रे बहुव्रीह्यर्थकालौकिकप्रक्रियावाक्यार्थकत्वं मन्यन्ते । तत्र च वाक्ये संज्ञाया अप्राप्त्या तत्स्थपदार्थकत्वं लक्षणया गम्यते । तथा चालौकिकविग्रहावस्थायामेव सर्वनामत्वं तत्प्रतिषेधश्च सामर्थ्याज्जायते । ततश्चान्तरङ्गस्याप्यकचोऽभावे प्रागिवीये कप्रत्यये सति प्रत्ययोत्तरपदयोश्च इति त्वमादेशयोः कृतयोस्त्वत्कपितृको मत्कपितृक इति रूपे भवतः । अन्त्यश्च कः प्रत्ययो नद्यृतश्च इति समासान्तः । एतन्मतेऽपि समुदाये नार्थवान् प्रतिषेधः, उपसर्जनत्वेनैव सर्वनामत्वाप्रसक्तेः । एतत्सर्वं संगृह्याह—धातुवृत्ताविति । बहुव्रीह्यर्थं इति । प्रकृतसूत्रस्थबहुव्रीहिपदस्य तादर्थ्यात्ताच्छब्द्येन लक्षणया तत्स्थपदे वृत्तत्वात् प्रवृत्तत्वादित्यक्षरार्थः । तथा च भाष्यमिति । यद्यपि वाक्यमिदमत्राद्धृतं सम्प्रति भाष्ये नोपलभ्यतेऽपि तु प्रदीप एव, तथापि 'मन्यत इति सूचितामरुचिमेवाह—'अयं खल्वपि' इत्यनेन छायासन्दर्भेण वाक्यमिदं भाष्यस्थमेवेति प्रतीयते । ग्रन्थोऽप्यत्रार्थेऽनुकूल इति विवेचनीयं सुधीभिः ॥

## विभाषा जसि ॥ १।१।३२ ॥

कथं 'व्यथां द्वयेषामपि मेदिनीभृताम्' इति माघः । द्वयशब्दस्य जस्येव सर्वनामताविकल्पात् ? उच्यते । व्यवस्थितविभाषयान्यत्रापीष्यते । अथवा इष गतावित्यतः क्विपि । द्वयं द्वैधं गच्छन्तीति द्वयेषस्तेषाम् । सर्वादावुभयशब्दः पठ्यते । तस्यार्थग्रहणाद् द्वयशब्दस्यापि सर्वादित्वमित्यन्यः ॥

[ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥१।१।३५॥ ]

द्वयशब्दस्य प्रथमचरम० इत्यनेनैव स्थानिवत्त्वप्रयुक्ततयप्प्रत्ययान्तत्वेन संज्ञाप्रसक्त्या मूले प्रथमचरम० सूत्रमप्यस्माभिः स्थापितम् । द्वयेषामित्यत्र बहुवचनं यद्यपि न प्रसज्यते, अवयवसमुदायस्यैकस्यैव तयबर्थत्वात्तथापि प्रकृततयब्ग्रहणेनैवोद्भूतावयवभेदविवक्षासिद्धेर्बहुवचनमुपपद्यते । अन्यथा हि सर्वत्रैव तयप्प्रत्ययान्तस्य समुदायवाचकस्य बहुत्वानुपपत्तेर्जस एवासम्भवेन तत्र विकल्पविधानं व्यर्थमेव स्यात् । उभयशब्दं प्रकृत्य हरदत्तस्त्वाह—'यदा तु वर्गद्वयारब्धे समुदायिनि वर्तमानो वर्गभेदानुगतं समुदायमाचष्टे तदा बहुवचनम्' इति । तद्वत्

प्रकृतेऽपि व्यवस्था । अन्यत्रापीष्यत इति । एवञ्चाव्यवस्था, बहुप्रयोगानुपपत्तिश्चेत्य-रुचेः समाधानान्तरमाह—अथवेति । अन्य इति । अत्राऽप्यरुचिः, तथाऽऽचार्य-व्याख्यानाभावात् ॥

**अचः परस्मिन् पूर्वविधौ ॥ १।१।५७ ॥**

**कथं** वैयाकरणः, 'न य्वाभ्याम्' (७।३।३) इत्यैचि कर्तव्ये यणः स्थानिवत्त्वाद्यकारपूर्वाभावादैज् न स्यात् ? उच्यते । यो ह्यनादिष्टा-दचः पूर्वः तस्य विधिं प्रति स्थानिवत्त्वमिति न स्थानिवत्त्वम् । 'असिद्धपरिभाषयान्तरङ्गे आयादेशे कर्तव्ये बहिरङ्गस्यैचोऽसिद्धत्वाद्' इति न्यासः ॥ **कथं** भवतीति, निमित्तापेक्षपूर्वत्वे ओकारस्य स्थानि-वत्त्वादवादेशाप्रसङ्गाद्, यथा तन्वन्तीत्यत्रेडभावः ? उच्यते । निमित्ता-पेक्षं पूर्वं लक्ष्यवशात् क्वचिदेव । तन्वन्तीत्यत्रासिद्धपरिभाषया वेडभावः ॥

कथमिति । निमित्तभूतादाकारात्पूर्वत्वेन दृष्टस्य यकारस्यैजागमप्रसक्तिरित्या-शयेन प्रश्नः । स्थानिनः पूर्वत्वेन दृष्टस्य विधौ स्थानिवत्त्वमिति भाष्यानुसारेणोत्त-रमाह—अनादिष्टादिति । आदेशनमादिष्टम्, भावे क्तः, तद् यस्य नास्ति सोऽनादिष्टः । अकृतादेशादचः स्थानिभूतादेव पूर्वत्वेन दृष्टस्य विधौ कर्त्तव्य एव स्थानिवदित्यर्थलाभेन नात्र स्थानिवत्त्वम्, प्रकृते कृतयणादेशस्यैवाचः स्थानिनः प्रसक्तेरैजागमस्येति निष्कर्षः । अत एवायादेशोऽपि न, कृतयणादेशात्पूर्वस्यैवैचस्तत्-प्रसक्तेः । पूर्वत्वस्य व्यवहिताऽव्यवहितसाधारणत्वेन निमित्तभूतादचः पूर्वत्वेन दृष्टस्याप्यैकारस्य यथा नायादेशप्रसक्तिस्तथाह—असिद्धेति । अस्मिन्नर्थे तत्वन्ती-त्यत्रेट्काले स्थानिवत्त्वं यणादेशस्य सुलभमित्यपि ज्ञेयम् । अयं च पक्षो विकल्पेन हरदत्तस्यापि सम्मतः । क्वचिदेवेति । तन्वन्तीत्यादावेवेत्यर्थः । अधुना निमित्ता-पेक्षपूर्वत्वं निरस्यन्नाह—तन्वन्तीत्यत्रेति । आर्धधातुकस्येड् वलादेः इत्यत्र एकाच उपदेश इत्यत उपदेशग्रहणानुवृत्त्याऽपि निर्वाह इत्यपि मतम् ।

पूर्वस्माद्विधिरिति पञ्चमीसमासपक्षे तु उकारात् पूर्वमिण्निमित्तत्वेनानाश्रितं यदङ्गं ततः परस्य यण इटि कर्त्तव्ये स्थानिवत्त्वमिति तत्वन्ति, धिन्वन्तीत्यादौ नेट्प्रसक्तिः । वैयाकरण इत्यादौ तु न स्थानिवत्त्वम्, इकारात्पूर्वस्य वकारस्य निमित्तत्वेन क्वचिदप्यनाश्रयणादिति तत्त्वम् । आयादेशस्तु ऐज्विधानसामर्थ्यादपि निवारयितुं शक्य इत्यपि मतान्तरम् ॥

**द्विर्वचनेऽचि ।। १।१।५९ ।।**

कथमधिजगे, इङादेशस्य स्थानिवद्भावादिकारस्य द्विर्वचनप्रसङ्गात् ? **उच्यते** । 'गाङ् लिटि' (२।४।४९) इत्यत्र लिण्मात्राश्रयत्वादन्तरङ्गत्वात् प्राक् प्रवर्त्तते । एशादेशस्तु लिडादेशविशेषाश्रय इत्युभयाश्रयो बहिरङ्गः । एवं च द्विर्वचननिमित्तेऽचि नायमजादेश इति कुतः स्थानिवत्त्वमिति न्यासः ।। कथं निन्यतुः, प्रागियङि द्वित्वे हि निनियतुरिति स्यात् ? **उच्यते** । 'उपजातनिमित्तोऽप्युत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बाध्यते' इति यणा बाधितत्वान्नेयङ् । भाष्यभागवृत्त्योस्त्वेतदर्थं नञित्यनुवृत्तौ द्विर्वचननिमित्तेऽचि द्विर्वचन एव कर्तव्येऽप्यजादेशो न भवति । कृते द्विर्वचने यथास्वम् इयङाद्यादेशो भवतीति सूत्रार्थः ।।

परत्वात्प्रागेशादेशे जाते गाङादेशः । इङो ङकारस्यानुबन्धत्वादिकारमात्रस्य अचः परस्मिन्० इत्यत्रैव स्थानित्वमिति भवति गाङादेशोऽजादेश इति मत्वा पृच्छति—कथमधिजग इति । गाङ् ल्लिटि इति द्विलकारको निर्देशः । तत्र प्रथमं ल् इति लुप्तसप्तम्यन्तं लिटीत्येतद्विशेषणम् । तथा च लकारादौ लिटीत्येतदर्थकत्वेन लावस्थायामेव गाङादेशः, लिण्मात्रापेक्षत्वेनान्तरङ्गत्वात् । लिडादेशविशेषाश्रयस्य चैशादेशस्य बहिरङ्गत्वमिति गाङादेशो न द्विर्वचननिमित्तेऽचि परतोऽजादेश इति समाधानाशयः । न्यास इति । गाङ्लिटि इति सूत्रवृत्ताविति शेषः ।

निन्यतुरिति । द्वित्वात् पूर्वमेकाच्त्वादियङि कृते स्थानिवद्भावाद्द्विर्वचने कृतेऽपि पूर्वप्रवृत्त इयङादेशः स्यादेवेत्याशयवानाह–प्रागियङीति । पूर्वप्रवृत्तोऽपीयङ् स्थानिरूपातिदेशादपहृत इति पुनः प्रवर्तयितव्यः । तथा च नी-नी इत्यवस्थायामनेकाच्त्वाद् एरनेकाच० इति यणा बाधितत्वान्न प्रवर्त्तत इति कैयटादिसम्मतं समाधानम् । अत्र तु उपजात० इति परिभाषया पूर्वमियङः प्राप्तिरेव नेत्याशयः समाधातुः प्रतीयते । नञित्यनुवृत्ताविति । न पदान्त० सूत्रादिति शेषः । स्थानिवत्तु लक्ष्यानुरोधान्नानुवर्त्तत इत्याशयः । इयङादेश इति मुद्रितपाठस्थाने इयङाद्यादेश इत्युचितम् । वस्तुतस्तु यणाद्यादेश इति पठनीयम्, इष्टान्वाख्यानौचित्यात् ।।

**अदर्शनं लोपः ।। १।१।६० ।।**

कथं वृक्षः, प्लक्षः, विसर्जनीये रेफस्यादर्शनाल्लोपसंज्ञायां 'ढ्रलोपे

पूर्वस्य' (६।३।१११) इति दीर्घसम्भवात् ? न च लोपभावितस्य संज्ञा, 'चादिलोपे' (८।१।६३) इत्यत्र यत्र चार्थो गम्यते, न चादिशब्दः प्रयुज्यते स चादिलोप इत्युक्तम्; तथा 'ल्यब्लोपे कर्मण्युपसङ्ख्यानम्' इति च गम्यमाने ल्यपि लोपशब्दः प्रयुक्तः ? उच्यते । सामर्थ्यादौपचारिको गौणाऽत्र लोपः । अथवा ढ्रयोर्लोपो यस्मिन्निति बहुव्रीहिः कार्यः । अवसानस्याभावरूपत्वान्न परत्वम् ॥ एवमपि वृक्षस्तिष्ठतीत्यत्र प्रसङ्गः ? किञ्चावसानस्यापि बुद्धिकल्पितं परत्वमस्त्येव । वर्णानां परत्वं बाध्यमेवोच्चरितप्रध्वंसित्वात् ? एवं तर्हि ढलोपसाहचर्याद् 'रो रि' (८।३।१४) इति रेफलोपो ग्राह्यः । वृक्षस्तिष्ठतीत्यत्र 'तस्मिन्निति' (१।१।६६) परिभाषया विसर्जनीयव्यवधानादपि दीर्घाभावात् ॥

कथमिति । अदर्शनमात्रस्य लोपसंज्ञा ढ्रलोप इति च विषयसप्तमी सत्सप्तमी वेत्यभिमानः । लोपभावितस्येति । लोपशब्देन विहितस्यादर्शनस्येत्यर्थः । चार्थ इति । चकरार्थं इत्याशयः । एतत्सर्वं भाष्यवृत्त्यादौ स्पष्टम् । अत्रेति । चादिलोपे० इत्यादिसूत्रेष्वित्यर्थः । तथा च प्रकृतसूत्रे लोपशब्दभावितस्यैव ग्रहणमिति फलति । भाष्योक्तं समाधानान्तरमाह—अथवेति । ढ्रलोप इति परसप्तमी । न चैतावतैवाव्यवहितस्य पूर्वस्य ग्रहणसम्भवे पूर्वग्रहणं व्यर्थमिति शङ्क्यम्, उत्तरपदाधिकारेणोत्तरपदस्य च समासचरमावयव एव रूढत्वेन उत्तरपदे ढलोपस्यासम्भवेन वचनसामर्थ्यादनुत्तरपदेऽपि ढलोपे दीर्घसम्भवेऽपि नीरक्तमित्यादावुत्तरपद एव रेफलोपे दीर्घः स्यात्, 'औदुम्बरी राजा', 'हरी रम्यः' इत्यादौ तु न स्यात् । अतः परसप्तमीपक्षेऽपि पूर्वग्रहणमावश्यकमेव । सर्वं चैतद्भाष्यवृत्त्यादितट्टीकादिषु स्फुटम् । तदेवं ढ्रलोप इति परसप्तमीति स्थिते 'वृक्षः' इत्यत्र न दीर्घप्रसक्तिः, परस्याभावात् । येन हि विसर्गेण रेफोऽपहृतस्तस्य परत्वमसम्भवम् । अवसानगतं परत्वमपि न युक्तमित्याह—अवसानस्येति । अयमाशयः—तस्मिन्निति निर्दिष्टे० इति सूत्रे निर्दिष्टग्रहणस्यैतत्प्रयोजनमुक्तं शब्दे सप्तमीनिर्दिष्टे परिभाषोपस्थानं यथा स्यात्, अर्थे मा भूदिति । तथा च शब्दे शब्दापेक्षमेव पौर्वापर्यमिति शब्दाभावस्वरूपावसानेन शब्दस्य पौर्वापर्यमसम्भवमिति । अत एव विसर्जनीयविधिसूत्रे वृत्तिकृता खरवसानयोरित्येकाऽपि सप्तमी विषयभेदाद् भिद्यत इति मत्वा 'खरि परतोऽवसाने च·····' इति व्याचक्षाणेनावसाने विषयसप्तम्युक्ता ।

एवमपि परस्य खरो विद्यमानत्वाद्दोष इत्याशङ्कते—एवमपीति । अदर्शनविषयस्थानापन्नस्य साक्षात्परम्परया वा व्यवधानं कथञ्चित्सहनीयमेवेत्यभिमानः ।

'वृक्षः' इत्यादावपि दोषोऽस्त्येवेत्याह—किञ्चेत्यादि। वर्णानां परत्वमिति। वास्तवमित्यर्थः। प्रध्वंसित्वादिति। सर्वं चैतत् संहितासंज्ञासूत्रादिभाष्यादौ स्पष्टम्। अत एव दीक्षितादिभिः 'खरि अवसाने च परे' इति व्याख्यातम्। ग्राह्य इति। एलच्च ढ्र्योः प्रतिपदोक्तत्वेन गृह्यते। एतदभिप्रेत्यैव कौमुद्यादौ 'ढरेफौ लोपयतीति ढ्रलोपः' इत्यभिहितम्। प्रकारान्तरेण समाधानमाह—वृक्ष इति। व्यवधानादिति। आद्ये विसर्जनीयेनान्त्ये च सकारेणेति शेषः। तथा चादर्शनातिरिक्तद्विषय-स्थानापन्नादिव्यवधानं न सह्यमेव, अदर्शनमात्रव्यवहितोदाहरणान्तरसद्भावा-दिति निष्कर्षः॥

## प्रत्ययलोपे प्रत्ययलक्षणम् ॥ १।१।६२ ॥

कथं भवतीति, क्विपोऽदर्शने लोपसंज्ञायाः प्रत्ययलक्षणे सती-वर्णस्य तुक्प्रसङ्गात्। न च लोपश्रुत्या विहितस्य प्रत्ययलक्षणम्, यत 'आयादय आर्धधातुके' (३।१।३१) इत्यत्र न्यास उक्तम्—'आयादीनां पक्षे निवृत्तिः प्रवृत्तिर्वा। तत्र यदि वाग्रहणेनायादीनां निवृत्तिः स्यात्, तदा प्रत्ययलक्षणेन अ प्रत्ययाद् (३।३।१०२) इत्यकारः स्याद्' इति? उच्यते। तथा हि अदर्शनसूत्रे (१।१।६०) त्रपुजतुभ्यां स्वमोर्लुकि कृते क्विपो लोपस्य प्रत्ययलक्षणेन तुकमाशङ्क्य न्यासकृता स्थानि-वत्सूत्रात् स्थानिग्रहणमनुवर्त्य स्थानी प्रसङ्गवान् इति प्रसक्तस्यादर्शने प्रत्ययलक्षणमुक्त्वा धात्वधिकारात् क्विपोऽप्रसङ्गेन तुगभाव उक्तः।

ननु यदि प्रत्ययप्रसङ्गे प्रत्ययलक्षणं, तदा ग्रामणीरित्यत्राणः प्रसङ्गे 'सत्सूद्विष' (३।२।६१) इत्यादिना क्विपि प्रसक्तस्याणः प्रत्यय-लक्षणेन वृद्धिः स्यात्? **उच्यते**। 'पूर्वमपवादाः प्रवर्तन्ते पश्चादुत्सर्गाः' इत्यणः प्रसङ्ग एव नास्ति॥ **कथं** गोहितम्, प्रत्ययलक्षणेन चतुर्थ्येक-वचनाश्रयावादेशात्? **उच्यते**। 'प्रत्ययलोपे तल्लक्षणम्' इति वक्तव्ये प्रत्ययग्रहणेन ज्ञापितं वर्णाश्रयविधौ प्रत्ययलक्षणं नास्तीति। तेन गवे हितं गोहितमिति नावादेशः॥ **यद्येवं** कथमतृणेडिति लोपे हलि विधीयमानः 'तृणह इम्' (७।३।९२) इतीम्? उच्यते। स हि हलादौ (पिति) सार्वधातुके, न तु वर्णमात्रे॥ एवं हि मोदत इति मुदित्यत्र

क्विपि वलाद्याश्रय इट् स्यात् ? उच्यते । 'शास इदङ्हलोः' (६।४। ३४) इत्यत्र न्यास उक्तम्—परिभाषेयमनित्येति ॥

भवतीति । लडन्तं सप्तम्यन्तं वा भवच्छब्दस्येदं रूपम् । अदर्शन इति । तत्त्वं चाप्राप्तत्वादेव । आयादीनामिति । एतच्चार्थतः संगृहीतं न्यासादिति बोध्यम् । इदानीं प्रसक्तादर्शनं लोपसंज्ञं भवतीति लोपसंज्ञासूत्रार्थं भाष्यादिसमर्थितमभिप्रेत्य समाधत्ते—तथा हीति । स्थानिवत्सूत्रादिति । कैयटस्तु षष्ठी स्थाने योगा इत्यतः स्थाने-ग्रहणमनुवर्त्य व्याचष्टे । हरदत्तोऽप्येवम् । युक्तं चैतत्, अत एवाग्रे भाष्य एव षष्ठीग्रहणानुवृत्तिसूचकं 'प्रसक्तादर्शनं लोपसंज्ञं भवति षष्ठीनिर्दिष्टस्य' इति संगच्छते । स्थानिवत्सूत्रात् स्थानिग्रहणमात्राऽनुवृत्तौ क्लेशाधिक्यं च स्पष्टमेव । उक्त इति । तथा च प्रकृतेऽपि भवतिशब्दस्य धातुत्वाभावेन क्विपोऽप्रसङ्ग इति न तददर्शनं लोप इति न प्रत्ययलक्षणापत्तिरित्याशयः । क्विपो लोपस्येति । अदर्शनमात्रमत्र लोपशब्दार्थः । अणो लोपस्येति तु नोक्तम्, तस्य प्रत्ययलक्षणेनापि फलाभावात् । न च अचो ञ्णिति इत्यनेन वृद्धिः प्रसक्ता, ञ्णिति परे ऋप्वादिशब्दस्याङ्गत्वाभावात् । यस्मिन् सौ परेऽङ्गत्वं न स ञ्णित्, यश्च तथा न तत्परेऽङ्गत्वम् । अतः विवबदर्शननिमित्तकोऽनाङ्गस्तुगागमः प्रत्ययलक्षणेनाङ्कितः ।

अणः प्रसङ्ग इति । निमित्तसद्भावादित्याकूतम् । इत्यादिनेति । अपवादत्वादिति शेषः । प्रसक्तस्येति । पूर्वप्रसक्तस्येत्यर्थः । परस्तात्तु क्विबन्तत्वेन धातुत्वाभावे तदप्राप्तेः । वृद्धिः स्यादिति । यद्यपि प्रत्ययविधिप्रतिबद्धाऽङ्गसंज्ञाऽणोऽविधाने न प्राप्नोतीति कथमङ्गस्य जायमाना वृद्धिः तथापि प्रत्ययविधिस्तत्प्रसङ्ग एव निविष्ट इत्यङ्गत्वमस्तीत्यभिमानः । नास्तीति । स्पष्टं चैतत्सर्वं लोपसंज्ञासूत्रभाष्यादिषु । वर्णाश्रयविधाविति । वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तकविधावित्यर्थः । प्रत्ययलक्षणमिति । प्रत्ययत्व तद्व्याप्यसुप्त्वाद्यन्यतरधर्मावच्छिन्नलक्षणमिति तदर्थः । अधिकं परिभाषेन्दुशेखरादिभ्यो ज्ञेयम् । नास्तीति । स्पष्टीकृतश्चायमर्थो भाष्यकृता प्रकृतसूत्रस्थद्वितीयप्रत्ययग्रहणप्रयोजनं प्रतिपादयता 'प्रत्ययलक्षणं यथा स्यात्, वर्णलक्षणं मा भूदिति' इत्यादिना प्रबन्धेन । तृणह इम् इतिसूत्रवृत्तिन्यासादिष्वप्ययमर्थं उक्तः । यद्येवमिति । वर्णाश्रयविधौ प्रत्ययलक्षणाभाव इत्यर्थः । अतृणेडिति । हिंसार्थकाद्रौधादिकात्तृहधातोर्लङि तिपि सिपि वा इतश्च इतीकारलोपे हल्ङ्यादिलोपे ढत्वजश्त्वचर्त्वेषु रूपम् । अत्र प्रत्ययलक्षणोपस्थितस्य तकारस्य सकारस्य वा वर्णरूपत्वेन कथं प्रत्ययलक्षणमिति शङ्कार्थः । स इति । इमागम इत्यर्थः । हलादाविति । एतच्च वृत्त्याद्यनुसारि व्याख्यानम् । प्रत्ययलक्षणसूत्रस्थभाष्यानुसारेण तु हलीति (६।३।८९) नानुवर्त्तते । केवलं

'पिति सार्वधातुके' (६।३।८७) इत्येव। प्रसङ्गस्तु 'अचि न' (६।३।८७) इत्यनुवृत्त्या वारणीय इति निष्कर्षः। तकारादेर्वर्णमात्रत्वेऽपि प्रत्ययत्वस्याव्याहत्वमेव, इमागमश्च प्रत्ययनिमित्तक इत्याशयः। परिभाषेयमनित्येति। तथा च न्यासग्रन्थः—'वर्णाश्रये प्रत्ययलक्षणं नास्ति—इत्येतत्तु प्रायिकम्' इति। वस्तुतस्तु मुदित्यत्र प्रत्ययलक्षणाभावः कथं साध्योऽनित्यत्वेनास्या इति न विद्मः॥

न लुमताऽङ्गस्य ॥ १।१।६३ ॥

कथम्—

'अभिमुखमुपयाति मास्म किञ्चित् त्वमभिदधाः पटले मधुव्रतानाम्।
मधुसुरभिमुखाब्जगन्धलुब्धैरधिकमधित्वदनेन मा निपाति॥'

इति माघः। त्वय्यधीत्यव्ययीभावे स्वादेर्लुकि त्वादेशाभावात्? उच्यते। 'इकोऽचि विभक्तौ' (७।१।७३) इत्यत्राज्ग्रहणेनास्यानित्यत्वज्ञापनात् प्रत्ययलणेन त्वादेशात्। त्वदिति विभक्तिप्रतिरूपमव्ययं त्वय्यर्थं इति वा। यौ तु सर्वादौ त्व, त्वदिति पठ्येते, तावन्यार्थौ॥

इति शरवणदेवविरचितदुर्घटवृत्तौ प्रथमाध्याये प्रथमः पादः॥

अजग्रहणेनेत्यादि। इकोऽचि० इत्यादि सूत्रेऽचीति त्रपो इत्यादौ नुमभावार्थं ग्रहणम्। परन्तु लुका श्रूयमाणायाः प्रकृतसूत्रेण च प्रत्ययलक्षणप्रतिषेधेनोपचरिताया अपि विभक्तेरभावान्नुमः प्राप्तिरेव तेति व्यर्थमचीति पूर्वपक्षे 'एवं तर्हि सिद्धे सति यदज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो भवतीह कश्चिदन्योऽपि प्रकारः प्रत्ययलक्षणं नामेति' इति भाष्यसन्दर्भेणायमर्थो ज्ञाप्यत इत्याशयः। कैयटादिभिः स्पष्टीकृतं च नुम्सूत्रे प्रत्ययोत्तरपदयोश्च इत्यत्र च। समाधानान्तरमाह—त्वदितीत्यादि। बल्लभदेवस्तु माघव्याख्यायां चिन्त्यमिमं प्रयोगमाह। मल्लिनाथेन त्वित्थमुक्तम्—'त्वमावेकवचने (६।२।९७) इत्यत्रैकवचन इत्यर्थनिर्देशादिह विभक्त्यभावेऽप्येकार्थवृत्तेर्युष्मदो मपर्यन्तस्य त्वादेशः' इति। एतच्च भाष्यवृत्त्याद्यनुरोध्येव॥

इति दुर्घटवृत्तिविवृतौ प्रथमाध्याये प्रथमः पादः॥

## अथ द्वितीयः पादः।

गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १।२।१ ॥

कथं 'धवित्रं व्यजनम्', 'अत्तिलूधू' (३।२।१८४) इत्यादिना

इत्रचि 'धू विधूनने' इत्यस्य कुटादित्वाद् गुणाभावात् ? उच्यते। 'ओरोद्' इति वक्तव्ये 'ओर्गुणः' (६।४।१४६) इति गुणग्रहणेन ज्ञापितः संज्ञापूर्वको विधिरनित्यः। तथा कुटस्यादिः कुटादिरित्येकशेषेणान्तर्भावाल्लिखेः कुटादित्वम्। कथं तर्हि मधुप्रसूर्लेखनीति ? 'अपाच्चचतुष्पाच्छकुनिष्वालेखने' (६।१।१४२) इति निर्देशात्, 'रद विलेखने' इति निर्देशाच्च।

'व्यचेः कुटादित्वमनसि' इति वक्तव्यम्। कथं विव्यचिथेति, सम्प्रसारणप्रसङ्गात् ? उच्यते। अनसीति पर्युदासात् तिङो ङित्वाभावादिति धातुपारायणे। धातुवृत्तौ तु सम्प्रसारणमाश्रित्य विविचिथेत्युक्तमिति रक्षितः॥

धवित्रं व्यजनमिति। तथा चाहामरः—

'धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा' (२।७।२३) इति। अनित्य इति। तेन स्वायम्भुवमित्यादौ गुणाभावादुवङ्सिद्धिः। नव्यास्तु स्वायम्भुवमित्यादयोऽसाधव एवेति मन्यमानाः परिभाषामिमां खण्डयन्ति। तन्मते धुवित्रमित्येवोचितम्। कल्पसूत्रादिप्रयोगश्च छान्दसः। अथवा आतिदेशिकं ङित्वमनित्यमिति गुणोपपत्तिरिति पदमञ्जरी। पुनरपि शङ्कते—तथेत्यादिना। एकशेषेणेति। कुटस्यादिः कुटादिः; कुट आदिर्येषां ते कुटादयः इति तत्पुरुषबहुव्रीह्योः सहविवक्षायां द्वन्द्वे 'स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते' इति सरूप० सूत्रस्थवार्त्तिकेनैकशेषविधौ बहुव्रीहेः शेषः। तदुक्तम्-अन्तर्भावादिति। लेखनीति गुणो नोचितः। निर्देशाच्चेति। वस्तुत एतेनैव ज्ञापकेन रलो व्युपधाद० इत्यत्र 'लिखित्वा, लेखित्वा' इत्यादिवृत्तिग्रन्थेन लिखेः कुटादित्वं चिन्त्यम्।

प्रसंगादिति। थलः प्रकृतसूत्रेण ङित्वादिति भावः। पर्युदासादिति। तथा च असुन्भिन्नस्य कृत्प्रत्ययत्वेन तत्सदृशस्य कृत एव ग्रहणमिति न तिङो ङित्वम्। प्रसज्यप्रतिषेधमङ्गीकुर्वतो मतमाह—सम्प्रसारणमिति। वस्तुतस्त्वत्र वाक्यभेदप्रसङ्गोऽसमर्थसमासकल्पनं चेत्युपेक्ष्यमिदं मतमिति माधवादयः॥

### विज इट्॥ १।२।२॥

कथम् 'उद्वेजिता वृष्टिभिराश्रयन्ते' इति कुमारसम्भवः ? उच्यते। ण्यन्तादिति भागवृत्तिः॥ 'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्' इति चेत् ? न ह्यन्यविषयोऽयं 'न भाभूपूकमिगमि' (८।४।३४) इत्यादौ

'ण्यन्तानां च भादीनामुपसङ्ख्यानम्' इति वचनात् । णिच्यन्तरङ्गत्वात् पूर्वं प्रत्ययाद् गुण इति वा ॥

ण्यन्तादिति । निष्ठायामिटि प्रयोग इति शेषः । एतदेव माधवादयोप्याहुः । प्रत्ययात् = क्तप्रत्ययात् ॥

**असंयोगाल्लिट् कित् ॥ १।२।५ ॥**

कथं 'न सम्पपृच्छे गमनाय सत्वरा' इति घोषः, संयोगान्तत्वात् कित्त्वाभावात् ? उच्यते । अपशब्द एवायम् । अथवा 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (३।३।९०) इति नङो ङित्त्वेनागमशासनानित्यत्वात् तुकोऽभावे कित्त्वात् सम्प्रसारणे कृते ऋकाराश्रयस्तुक् ॥

संयोगान्तत्वादिति । अन्तरङ्गत्वात्पूर्वं छे च इति तुकि संयोगान्तत्वमित्यर्थः । कित्त्वाभावादित्यतः परं सम्प्रसारणमिति शेषः । आगमशासनेत्यादि । यदि तु आगमशासनं नित्यं स्यात्तर्हि अन्तरङ्गत्वापूर्वं तुकि विच्छ्धातौ तुक एवोपधात्वेन लघूपधगुणस्याप्राप्तेर्नङो ङकारानुबन्धस्तत्प्रतिषेधार्थमारभ्यमाणो व्यर्थ एव स्यात् । ज्ञापिते त्वस्मिन् अतुक्के धाताविकारस्य लघूपधगुणवारणाय सोऽर्थवानिति तात्पर्यम् । एतत्सर्वं विस्तरेण नङ्सूत्रन्यासे स्पष्टीकृतम् । प्रकृतमुपपादयति—कित्त्वादित्यादिना ॥

**ईन्धिभवतिभ्यां च ॥ १ । २ । ६ ॥**

कथमस्तेर्भूभावे बभूवेति, भवतीति श्तिपा निर्देशात् ? उच्यते । नित्यशब्दान्वाख्याने 'अस्तेर्भूः' ( २।४।५२ ) इत्यनेनास्तेः प्रसङ्गे भवतेः प्रयोगः साध्यते । अथवा 'भवतेरः' ( ७।४।७३ ) इत्यत्र यदुक्तमनुन्यासकृता—'अवश्यं हि यथा कयाचिद् व्यक्त्या निर्देशः कर्तव्य इति भूव्यक्त्या निर्देशः कृतः; कोऽत्र प्रद्वेषः, कुतः ॥

निर्देशादिति । तथा च भू सत्तायामित्यस्यैवात्र ग्रहणमुचितमिति कथमस्तेर्भूभावस्य विषये प्रकृतसूत्रेणाकित्त्वम् येन गुणवृध्योर्निषेधे वुगागमे बभूवेति रूपं सिध्येदिति प्रश्नाशयः । उत्तरं तु स्पष्टमेव ।

वार्त्तिककारस्तु 'इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्' इति मन्यमानः सूत्रमिदं प्रत्याचख्यौ । नित्यत्वं च वुगागमस्य कृताकृतप्रसंगित्वात् । तत्त्वं च भुवो वुग्० इति सूत्रे ओः सुपि इत्यतः 'ओः' इत्यस्याननुवृत्तेः । विस्तरस्तु भाष्यादितोऽवसेयः ॥

**हलन्ताच्च ॥ १ । २ । १० ॥**

**कथं** दिदृक्षते, सिसृक्षते, कित्त्वात् परत्वात् 'सृजिदृशोर्झल्यमकिति' ( ६।१।५८ ) इत्यम् स्यात् ? **उच्यते ।** पूर्वविप्रतिषेधात् कित्त्वम् ॥

पूर्वविप्रतिषेधादिति । एतच्च विप्रतिषेधसूत्रे परशब्दस्येष्टवाचित्वाल्लभ्यते । अत्र गाङ्कुटादि० सूत्रस्थं भाष्यमपि दर्शनीयम् ॥

**निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥ १।२।१९ ॥**

**कथम्** उड्डयितम्, डीङोऽत्रापाठादकित्त्वाभावात् ? **उच्यते ।** 'भौवादिकस्य डीङो निष्ठायामकित्त्वम्' इति धातुपारायणः । दैवादिकस्य डीङ ओदितां मध्ये पाठसामर्थ्यादनिट्त्वं नत्वं च । तेनोड्डीन इति ॥

न क्त्वा सेट् इत्यतो 'न सेट्' इत्यनुवृत्तेः कित्त्वनिषेधोऽनेन सूत्रेण । तथा च पूर्वपक्षोत्थानम्—कथमिति । अकित्त्वाभावादिति । तथा च कित्त्वाद् गुणो न युक्त इति शङ्कार्थः । अकित्त्वमिति । एतच्च निष्ठेति योगविभागात् साधितम् इति माधवः । सीरदेवादयोऽप्येवम् । ओदितामिति । दैवादिकानां 'षूङ् प्राणिप्रसवे' इत्यारभ्य व्रीङ् वृणोत्यर्थे इत्यादीनां 'स्वादय ओदितः' इति वाचनिकमोदित्वं निष्ठानत्वार्थम् ओदितश्च इति सूत्रेण । ततश्च दैवादिकस्य डीङ् धातोर्निष्ठायां सेट्त्वे इटा व्यवधानेन नत्वाप्रसक्तेरोदिन्मध्ये पाठो व्यर्थ एव स्यादिति तस्यानिट्त्वं ततश्च नत्वमुपपन्नम् । इटा व्यवधानेऽपि नत्वं पाठसामर्थ्यान्न कल्प्यते, लक्ष्यानुरोधात् । केचित्तु सत्यपीडागमे सवर्णदीर्घे पूर्वान्तवद्भावेन व्यवधानं नेति नत्वमुपपन्नमेवेत्याहुः ।

यदि तु न क्त्वा सेट् इतिसूत्रस्थक्त्वाग्रहणखण्डनावसरे 'निष्ठायामवधारणात्' इतिभाष्यानुरोधेन शीङादिभ्य एव परा निष्ठा न किदिति नियमार्थत्वमस्य सूत्रस्याभ्युपेयते तदा तु उड्डयितमित्यसाधुरेवेति मन्तव्यम् ॥

**रलो व्युपधाद्धलादेः संश्च ॥ १।२।२६ ॥**

**कथं** नित्यं कुटित्वा, परत्वादनेनेव विकल्पितकित्वात् ? उच्यते । पूर्वविप्रतिषेधेनान्तरङ्गत्वाच्च कुटादित्वमात्रम् ॥

अन्तरङ्गत्वाच्चेति । एतच्चाल्पापेक्षत्वाल्लभ्यम् । प्रतिपदोक्तत्वं च समुच्चीयते । तथा च गाङ्कुटादिभ्यः० इति नित्यङित्त्वेन नित्यमेवोपधागुणप्रतिषेध इति न कित्त्वविकल्पप्रयुक्तं कोटित्वेत्यपि भवति ॥

## ह्रस्वो नपुंसके प्रातिपदिकस्य ।। १ । २ । ४७ ।।

कथं वनाय, वनेभ्य इति, दीर्घत्वैत्वयोः कृतयोर्ह्रस्वत्वप्रसङ्गात् ? उच्यते । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति ह्रस्वे कर्तव्ये दीर्घत्वादेरसिद्धत्वात् । अथार्थधर्मस्य नपुंसकलिङ्गस्याश्रयणाद्ध्रस्वोऽपि बहिरङ्गः ? एवं तर्हि परस्मैपदेष्विति निर्देशान्न ह्रस्वः ।। वने इति द्विवचनान्तस्य सप्तम्यन्तस्य च पूर्वं प्रत्यन्तवत्त्वेन ह्रस्वत्वम् ? उच्यते । उक्तकर्मादिशक्तिकत्वेनानपुंसकत्वात्, प्रथमाद्विवचनस्य तु 'अर्थवदधातुः'० (१।२।४५) इत्यतः प्रातिपदिकग्रहणानुवृत्तौ पुनः प्रातिपदिकग्रहणान्निष्कृष्टप्रातिपदिकाश्रयणात् । अपरं बहुत्वान्नोक्तम् ।।

वनायेत्यतः परं वनार्थमित्यपि योज्यम् । असिद्धत्वादिति । एतच्च 'यत्रैकादेशदीर्घत्वेषु बहिरङ्गलक्षणत्वात्सिद्धम्' इत्यादिना भाष्ये कथितम् । बहिरङ्गत्वं च दीर्घादेर्यञादिसुबपेक्षम् । ह्रस्वे कृते पुनर्दीर्घप्रवृत्तिस्तु 'लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते' इति न्यायेन वारणीया । द्विवचनान्तस्येति । द्वितीयाद्विवचनान्तस्येत्यर्थः । एकवचनान्ते फलाभावाद् द्विवचनान्ते प्रश्नः । पूर्वं प्रत्यन्तवत्त्वेनेति । प्रातिपदिकत्वादिति शेषः । अनपुंसकत्वादिति । विभक्त्यन्तस्यावयवद्वारा नपुंसकवृत्तित्वेऽपि साक्षात्तथाऽभावादिति तात्पर्यम् । प्रथमाद्विवचनस्येति । प्रातिपदिकार्थमात्रविहितस्येत्यादिः । कर्तृप्रथमायास्तु पूर्वोऽपि परिहारः, तस्याः तिङभिहितकर्तृस्वशक्तिबोधकत्वेन शक्तिप्रधानत्वादित्याशयः । निष्कृष्टेति । मुख्यं प्रातिपदिकत्वं न त्वातिदेशिकमित्यर्थः । आश्रयणादिति । एतच्च समाधानं विभक्त्यन्तमात्रसाधारणं सूत्रकृदभिमतमिति स्पष्टं कैयटे ।।

## गोस्त्रियोरुपसर्जनस्य ।। १ । २ । ४८ ।।

कथम् अर्धपिप्पलीति, 'एकविभक्ति च०' ( १।२।४४ ) इत्युपसर्जने ह्रस्वत्वप्रसङ्गात् ? उच्यते । 'एकविभक्तावषष्ठ्यन्तवचनम्' इति कात्यायनवार्तिकेनोपसर्जननिषेधादिति भाष्यम् । 'एकविभक्ति च' इत्यत्र विभाषानुवृत्तेर्व्यवस्थितविभाषात्वाद् इति न्यासः । 'उभयगतिरिह शास्त्रे सम्भवति' इति लौकिकोपसर्जनत्वान्न ह्रस्वः शास्त्रीयोपसर्जनस्य, लौकिकोपसर्जननिवृत्त्यर्थं यत्नसामर्थ्यात् । ह्रस्वे वा परवल्लिङ्गतया स्त्रीप्रत्ययः प्रत्युज्जीव्यत इत्यनुन्यासः ।।

अषष्ठ्यन्तेति । तेन षष्ठ्यन्तस्य समासे विधातव्ये समासार्थे वा वाक्ये एकविभक्तिकत्वेऽपि नोपसर्जनत्वम् । एतच्च वचनमेकदेशिसमासमात्रविषयकमेवेति नागेशः । विभाषाऽनुवृत्तेरिति । विभाषाच्छन्दसि (१।२।३६) इत्यतो मण्डूकप्लुत्येत्यर्थः । एतत्सर्वम् एकविभक्ति० इति सूत्रे अर्धं नपुंसकम् इति सूत्रे च न्यासे स्पष्टम् । शास्त्रीयेत्यादि । पिप्पलीशब्दस्यैकविभक्तिकत्वेन शास्त्रीयमुपसर्जनत्वमिति न ह्रस्व इत्याशयः । यत्नसामर्थ्यादिति । एतच्च न विद्मः कुत्र लौकिकोपसर्जननिवृत्त्यर्थं शास्त्रे यत्नः कृतः । बहुश्रेयस्यादौ तु शास्त्रीयमेवोपसर्जनत्वम्, प्रथमानिर्दिष्टत्वादेकविभक्तिकत्वाद्वा । प्रत्युतात्र लौकिकोपसर्जनग्रहणे कुमारीवाचरन् ब्राह्मणः कुमारीत्यत्र ह्रस्वत्वापत्तिरपि । तस्मान्नैतत्समाधानं युक्तम् । ह्रस्वेत्यादि समाधानमपि यथा न युक्तं तथा स्पष्टं प्रथमानिर्दिष्टम्० इतिसूत्रे प्रदीपोद्योतयोः । तस्मात्प्रथमं समाधानमेवात्र युक्तमिति वेद्यम् ॥

**अस्मदो द्वयोश्च ॥ १ । २ । ५९ ॥**

'सविशेषणानां प्रतिषेधो वक्तव्यः' इत्युक्तम् । कथं पुनर्न वयं वैयाकरणा इति ? उच्यते । ईश्वरादिवदेकत्वे बहुत्वारोपात् ॥

सविशेषणानामिति । एतच्च अस्मदः सविशेषणस्य प्रयोगे न इति जात्याख्याम्० इति सूत्रस्थभाष्यसिद्धार्थानुवादरूपम् । व्यवहारानुसारेणैकत्वेऽपि पाक्षिकं बहुवचनमित्याशयेन समाधत्ते—ईश्वरादिवदिति । एतच्च प्रकृतसूत्रे कैयटे स्पष्टम् । सूत्रं चैतदन्ततः प्रत्याख्यातम् । 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाऽभिमानोन्नताः' इत्यत्र च विधेयत्वेनोन्नतत्वस्य न विशेषणत्वमिति हरदत्तः । अवयवगतबहुत्वाभिप्रायं बहुत्वमित्यपि कश्चित् ॥

**फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ १ । २ । ६० ॥**

कथं पूर्वफल्गुनी, नक्षत्रद्वित्वबहुत्वातिदेशात् ? उच्यते । पूर्वोत्तरफल्गुन्यौ द्वे प्रोष्ठपदे च द्वे इत्यत्र सूत्रे बहुवचननिर्देशाद् बहुत्वं विवक्ष्यते; द्वयोरित्यनुवृत्तेर्द्वित्व एव बहुत्वारोपात् । इयमल्पिका । आतिदेशिकं कार्यमनित्यमिति वाच्यम् ॥

नक्षत्रद्वित्वेत्यादि । नक्षत्रद्वित्वे प्रकृतसूत्रेण बहुत्वातिदेशादित्यर्थः । एतच्च सूत्रस्थचकारेण पूर्वसूत्राद 'द्वयोः' इत्यस्यानुवृत्तेर्लभ्यते । एवञ्च द्वित्वं स्वाभाविकम्, बहुत्वं चातिदेशिकमिति फलति । तथाचैकवचनं कथमिति प्रश्नः । द्वित्वं एवेति । तथा च यदा फल्गुनोपदवाच्यतारकाद्वयान्यतरविवक्षा तदैकवचनमुपपन्नमेवत्यर्थः । युक्तिमेतां निरस्यन्नाह—इयमल्पिकेति । अतः समाधानान्तरमाह—आतिदेशिक-

मति। किन्तु बहुत्वस्यानेन न्यायेनातिदेशिकत्वान्निवृत्तावपि द्वित्वस्य कथं निवृत्तिरिति न जानीमहे। सर्वं चात्र वृत्त्याद्यनुसारेण वर्णितं ग्रन्थकृता। भाष्यमते तु, सूत्रमिदं नास्त्येव। तथा च यदा फल्गुनीद्वयसहिततत्समीपस्थचन्द्रमसोऽभिधानमिष्टं तदाऽर्थबहुत्वाद्बहुवचनम्, तारकाद्वयमात्रार्थकत्वे तु द्विवचनम् इति बोध्यम्॥

## पुमान् स्त्रिया॥ १। २। ६७॥

**कथं** भवश्च भवानी च भवौ, रुद्रावित्यादि, 'तल्लक्षणश्चेदेव विशेषः' इत्यनुवृत्तेः; अस्तीह हि पुंयोगकृतो भेदः; इन्द्रेन्द्राण्यावित्यत्र प्रत्युदाहृतम्? **उच्यते**। 'पुमान् स्त्रिया' (१। २। ६७) इत्यत्र न्यासकृता 'पुमान्' इति योगविभागः कृतोऽस्य सिद्धये। यद्यप्यानुक् पुंयोगमपेक्षते, तथापि स्त्रियां विधानात् स्त्रीकृत एवायं भेदः॥ **कथं** वा दासीदासं कुटीकुटम्? **उच्यते**। 'गवाश्वादिषु पाठसामर्थ्यान्नैकशेषः' इति न्यासः॥

**इति शरणदेवविरचितदुर्घटवृत्तौ प्रथमाध्याये द्वितीयः पादः॥**

रुद्राविति। रुद्रश्च रुद्राणी चेति विग्रहः पूर्ववत्। अनुवृत्तेरिति। वृद्धो यूना० इति सूत्रादिति भावः। प्रत्युदाहृतमिति। तथा च जयादित्यः—"एवकारः किमर्थः? इन्द्रश्च इन्द्राणी चेन्द्रेन्द्राण्यौ। 'पुंयोगादाख्यायाम्' इत्यपरो विशेषः" इति। यद्यपीत्यादिना समाधानान्तरमुक्तम्॥

इति दुर्घटवृत्तिविवृतौ प्रथमाध्याये द्वितीयः पादः॥

## अथ तृतीयः पादः।

## भूवादयो धातवः॥ १। ३। १॥

**कथं** भवतीति, ऊकारस्येत्संज्ञाप्रसङ्गात्? **उच्यते**। निरनुनासिकत्वान्नेत्त्वम्, 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' इति। प्रयोजनाभावाद्वा। न 'स्वरतिसूति०' (७। २। ४४) इत्यादिना इड्विकल्पः प्रयोजनम्, 'भू सत्तायां परस्मैभाष उदात्तः' इति उदात्तोपदेशानर्थक्यात्। तन्नित्यमिडर्थम्। न च गाप्रभृतीनामिवोदात्तत्वमनुदात्तनिवृत्त्यर्थं वाच्यम्, निरच्कत्वादनुदात्तत्वाप्रसङ्गात्॥

प्रतिज्ञेत्यादि । एतच्च उपदेशे० इति सूत्रभाष्यन्यासादिषु स्पष्टम् । तदिति । उदात्तत्वमित्यर्थः । निरच्कत्वादिति । अकारस्येत्संज्ञायां लोपे सतीत्यादिः ॥

## हलन्त्यम् ॥ १ । ३ । ३ ॥

**कथं** पुष्टिः, अनेन हि षकारस्येत्संज्ञया भाव्यम् । तथा च पुष्णातीत्यादि न सिध्यति ? **उच्यते** । अनभिधानान्नैतत् । एवञ्च प्रयोजनाभावान्नेत्त्वम् ॥ कथमटतीत्यादि, अनेन तु टकारलोपात् । प्रयोजनं तु टित्त्वात् ङीप्, यथा 'नासिकास्तनयोर्ध्माधेटोः' ( ३ । २ । २९ ) इत्यत्रोक्तम्—स्तनन्धयीति धेटष्टित्त्वात् ङीप् ? **एवमादीनामकार** इत्संज्ञापरित्राणार्थो नोच्चारणार्थः । यथा 'इदमस्थमुः' ( ५ । ३ । २४ ) इत्यत्रोकारः ॥

**कथं** भवतीति, वकारस्येत्त्वप्रसङ्गात् ? **उच्यते** । प्रयोजनाभावान्नेत्त्वम् । न च 'वान्तो यि प्रत्यये' ( ६ । १ । ७९ ) इति विशेषणं प्रयोजनम्; अन्यथा गव्यति नाव्यतीत्यत्र यान्तादेशोऽपि स्यात् । 'वान्तो यि०' इत्यत्र 'अयान्तो यि०' इति कर्तव्यं स्यात् ॥

अनभिधानादिति । तच्च षकाररहितस्य शब्दरूपस्येति बोध्यम् । प्रयोजनाभावादिति । षकाररहितप्रयोगनिष्पादननिमित्तेत्त्वप्रयोजनस्याभावादित्यर्थः । वस्तुतस्तु पुष पुष्टावित्यस्योपदेशेऽदन्तत्वेन षकारस्य व्यवसितान्त्यत्वाभावादेव नेत्त्वप्रसङ्ग इति वाच्यम् । अत एवाटतीत्यत्रैवमेव समाधानमुक्तम्—इत्संज्ञापरित्राणार्थ इति । इत्संज्ञायाः परित्राणमिति पञ्चमीतत्पुरुषः । एतच्चाग्रे स्पष्टयिष्यते । नोच्चारणार्थ इति हकारादिष्वकारवदिति भावः । तथा च तकारस्य विवक्षिताऽन्त्यत्वाभावादेव नेत्त्वमिति तात्पर्यम् ।

प्रयोजनाऽभावादिति । उच्चारणसामर्थ्याद् वकारस्य लोपाभावे इत्संज्ञायाः प्रयोजनं नास्तीत्यर्थः । लोपो हीत्संज्ञायाः प्रयोजनम् । विशेषणमिति । असति वकारघटित आदेशे 'वान्तः' इत्यनुपपन्नं स्यादिति भावः । ननु मास्तूत्तरसूत्रे वान्तग्रहणमित्यत आह—अन्यथेति । वान्तग्रहणाभावे सति । वस्तुतस्तु गव्यतीत्यादौ पूर्वसूत्रानुरोधेन अन्तरतमतया वा स्वतो वान्तादेशस्यैव प्राप्तेश्चेयमित्यादावयादेशप्रसक्तिर्दूषणं वाच्यम् । अयान्त इति । यकारान्तभिन्न इत्यर्थः । भाष्ये तु क्षय्यजय्यौ शक्यार्थे इति सूत्रस्य नियमार्थत्वेन रायेश्छान्दसत्वेन चानिष्टापत्तिनिवार्यं वान्तग्रहणं प्रत्याख्यातमेव । विस्तरस्तु स्थानेऽन्तरतमः, वान्तो यि० इति सूत्रभाष्ययोर्द्रष्टव्यः ॥

## न विभक्तौ तुस्माः ।। १ । ३ । ४ ।।

कथं क्व, यजेयेति । 'किमोऽत्' ( ५ । ३ । १२ ) 'इटोऽत्' ( ३ । ४ । १०६ ) इत्यत्र स्थानिवद्भावादनेनेत्त्वनिषेधात् ? उच्यते । 'अनित्यत्वादस्य विधेः' इति वृत्तिः । 'इटोऽत्' इत्यत्रोक्तम् 'नायमादेशावयवस्तकारः । किन्तर्हि मुखसुखार्थन्तदुच्चार्यते' । एवञ्च 'अनित्यत्वादस्य विधेः' इत्यत्रायमर्थो वेदितव्यः—'किमोऽत्' इत्यत्रेत्त्व-निषेधस्यानित्यत्वात्, 'इटोऽत्' इत्यत्र **अस्य विधेः** = अकारस्य विधानाद् इति केचित् ।।

अत्र 'किमोऽत्' इत्यतः परम् 'इत्यत्र प्राग्दिशीयत्वात्' इति योज्यम्, स्थानि-वद्भावेनास्य विभक्तित्वानुपपत्तेः । अनित्यत्वादिति । अनित्यत्वं चास्य इदमस्थमुः इत्यत्रेत्संज्ञापरित्राणार्थेनोकारानुबन्धेन ज्ञाप्यते । अन्यथाऽनेनैव मकारस्येत्संज्ञा-प्रतिषेधे उकारोच्चारणं व्यर्थमेव स्यात् । प्रकृतसूत्रभाष्ये तु प्रकृतोकारानुबन्धेनास्य प्राग्दिशीये तद्धितेऽप्रवृत्तिर्ज्ञापिता । अत एव दानीमो मकारस्येत्संज्ञापरित्राणार्थं सूत्रे मकारोत्तरं यकारप्रश्लेषः कृतः । अश्रवणं च संयोगान्तलोपेन, लोपो व्योः० इति सूत्रेण वोपपद्यते । तथा च यलोपस्य पूर्वत्राऽसिद्धत्वाद् बहिरङ्गासिद्धत्वाद्वा मकारस्यानन्त्यत्वेन नेत्संज्ञाप्रसक्तिरिति ।

तत्रानित्यत्वस्यान्यत्र फलाभावाद्भाष्योक्तं ज्ञापनमपि युक्तमेव । अनित्यत्व-ज्ञापनं तु वरम् । अत एव ङिस्यानिकस्यौत् इत्यत्र तकारस्येत्त्वमुपपद्यते । भाष्योक्तपक्षे तु ओदादीनां संज्ञात्वकल्पने गौरवम् । तथा च दानीमो मकारस्यापि इष्टानुरोधेनैवानित्यत्वात् परित्राणसम्भवे तत्र यकारप्रश्लेषोऽपि न कर्त्तव्यो भवति ।

उच्चार्यत इति । तथा च तकारस्य स्वयमेव निवृत्तत्वेन नेत्संज्ञया प्रयोजनम्, न वा तत्र निषेधावश्यकतेति तद्विषयानित्यत्वज्ञापनं किमोऽत्-सूत्रे वृत्तिकृतां वृथैवेत्याशङ्क्य तद्वृत्तिमन्यथा व्याचष्टे—एवञ्चेति । विधानादित्यतः परं निषेधा-प्रसक्तिरिति शेषः । अकारमात्रस्यादेशे सवर्णग्रहणेन दीर्घाद्यादेशप्रसंगस्तु भाव्य-मानपरिभाषयाऽन्तरतमपरिभाषया वा वारणीयः । भाष्योक्तपक्षे तु तपरकरणात् । उच्चारणार्थानामपीत्संज्ञयैव निवृत्तिरिति पक्षे तु इटोऽत् इत्यादावनित्यत्वादेव निषेधाऽप्रवृत्तिः । केचिदिति । एतेनास्वरसः सूचितः, 'अनित्यत्वादस्य प्रतिषेधस्य' इति पाठस्यैव वृत्तौ सर्वसम्मतत्वात्तथाऽर्थकरणासंगतेः ॥

**यथासङ्ख्यमनुदेशः समानाम् ॥ १ । ३ । १० ।**

**कथं** भवतीति । अत्रायादेशः कस्मान्न भवति, यथासङ्ख्याभावात् । तद्धि दिशेरुच्चारणार्थत्वाच्छ्रुतानुमितन्यायाच्च श्रुतयोरुद्देशानुदेशिनोर्युक्तं यथा 'तूदीसलातुर०' (४।३।९४) इत्यादौ ? **उच्यते** । श्रुतन्यायफलस्यान्तरङ्गस्यानित्यत्वाद्दिशेः प्रतिपादनवृत्तित्वाच्च सामान्येन यथासङ्ख्यम् । 'परस्मैपदानाम्०' (३।४।८२) इत्यादौ यथासङ्ख्यार्थं स्वरितत्वसामर्थ्याद्वा । तथा च रक्षितः—'स्वरितत्वसामर्थ्यात् क्वचिदर्थतः क्वचिच्छब्दात् सामान्यमाश्रीयते' इति । एवं च परस्मैपदादिसंज्ञानुमितस्य तिप्तसादेर्यथासङ्ख्यं णलादिः । एकत्वाद्यभिधानादान्तरतम्याच्च 'लुटः०' (१।४।८५) इत्यत्र डादिः । संज्ञानुमितयोः क्तक्तवत्वोः 'ङसिङसोश्च' (६।१।११०) इत्यत्रैङ एकारौकारयोश्चास्वरितत्वान्न यथासङ्ख्यम् ।

अथवा आन्तरतम्यादयादयो भविष्यन्ति । तथा हि—एकारादीनां सन्ध्यक्षरत्वादकारेकारात्मक एकारः, अकारोकारात्मक ओकारः, अकारैकारात्मक ऐकारः, अकारौकारात्मक औकारः । एवं च संवृताकारवत एकारस्य ओकारस्य चायवौ विवृताकारवत ऐकारस्य औकारस्य चायावौ भविष्यतः । तदुक्तम्—'संवृताकारस्य संवृताकारो विवृतावर्णस्य विवृतावर्णः' इति । **ननु कथमेतद्**, यतो वर्णेषु ये वर्णैकदेशास्तेषु तत्कार्यं न भवतीत्युच्यते ? **सन्ध्यक्षरवर्जं** हि तत्, सन्ध्यक्षरेषु प्रयत्नभेद एव । तथा 'ऐऔच्'इत्यत्र भर्तृहरिः—सन्ध्यक्षरेषु (प्रयत्नस्य) विरामोपादानाभ्यां पृथग्भावः'[1] इति । अत एव 'ए ऐ कण्ठतालव्यौ', 'ओ औ कण्ठोष्ठ्यौ' इति कालविच्छेदाभावेऽपि पृथक्प्रयत्नत्वात् 'हे गौः' इत्यत्र न सम्बुद्धिलोपः ॥

---

१. अत्र 'लक्ष्यः प्रयत्ना वा' इति मातृका भ्रष्टा, लेखकप्रमादात् । अत एव 'लक्ष्यौ प्रयत्नौ द्वौ' इति संशोधनं गणपतिशास्त्रिकृतमयुक्तम्, पृथग्भावस्यैव प्रतिपिपादयिषितत्वात् । एतत्स्थाने 'प्रयत्नावा' इति लेखकभ्रंशः पाठकभ्रंशो वा सुकरः । अत एव भर्तृहरिटीकायाम् उपलभ्यमानः पाठ उपात्तः ।

यथासंख्याभावादिति। एचोऽयवायावः इत्यत्रेति भावः। अत्र यथासंख्याभावमुपपादयति—तद्धीत्यादिना। अनित्यत्वादिति। सीरदेवादिप्रतिपादितमिदम्। प्रतिपादनेति। तथा चैच्प्रतिपाद्यानां चतुष्टेनादेशानां च तथात्वेन समत्वमिति भवति यथासंख्यमित्यर्थः। सामान्येन समसंख्यकत्वेन। यथासंख्यार्थमिति। परस्मैपदानामित्येक उद्देशी णलादयो नवानुदेशिन इति शब्दतः साम्याभावादित्यादिः। स्वरितत्वेत्यादि। यथासंख्यमनुदेशः समानां स्वरितेन इत्येको योगः, अधिकारः इत्यपरः। स्वरितेनेत्यनुवृत्तेरधिकारः स्वरितेन भवतीति द्वितीययोगार्थः। क्वचिदुपलभ्यमानं स्वरितत्वं यथासंख्यार्थमधिकारार्थं वेति संशये व्याख्यानतो निर्णयः। तथा च यत्र स्वरितत्वप्रतिज्ञाविशेषस्तत्रैव शब्दतोऽर्थतो वा साम्ये यथासंख्यम् भवतीति निष्कर्षः। स्यतासी लृलुटोः इत्यादौ शब्दतः एचोऽयवायावः, परस्मैपदानाम्० इत्यादौ त्वर्थतः स्वरितत्वबलाद् यथासंख्यम्। क्व शब्दतः चार्थतः साम्यं विवक्षितमित्यत्रापि इष्टानुरोधिनी व्यवस्था। एकत्वाद्यभिधानादिति। एकत्वाद्यभिधानरूपादित्यर्थः। एकार्थस्यैकार्थो द्व्यर्थस्य तसातामूरूपस्य द्व्यर्थः, बह्वर्थस्य झिझरूपस्य बह्वर्थ इत्यान्तर्यं स्थान्यादेशयोरिति भावः। यदि तु डारौरसश्च डारौरसश्चेत्येकशेषनिर्देशोऽभ्युपेयते तर्हि स्थान्यादेशयोः संख्यासाम्यमर्थतो वर्तत इति यथासंख्येनापि निर्वाहः। संज्ञाऽनुमितयोः क्तक्तवत्वोः रदाभ्यां निष्ठातो नः इत्यत्र।

शब्दतः साम्याश्रयणेऽपि एचोऽयवायावः इत्यादौ यथासंख्याभावेऽपि भाष्योक्तं समाधानान्तरमाह—अयत्रेति। एवं चेत्यादिसन्दर्भस्यायमाशयः—एचः सन्ध्यक्षराणि कथ्यन्ते। ततश्च संवृताकारतालव्यस्य एकारस्य संवृताकारतालव्यः 'अय्' इत्यादेशः, संवृताकारौष्ठ्यस्य आकारस्य संवृताकारौष्ठ्यः 'अव्' इति, विवृताऽऽकारतालव्यस्य ऐकारस्य तादृश एव 'आय्' इति, विवृताऽऽकारौष्ठ्यस्य च औकारस्य तादृश एव 'आव्' इत्यादेशोऽन्तरतमत्वादिति। एकारौकारयोरकारांशे संवृतत्वं प्रकृतसूत्रभाष्यप्रामाण्यादेव लभ्यते। अत्र बहु वक्तव्यमपि विस्तरभयान्नोच्यते।

ननु कथमेतदित्यादिशङ्कासमाधाने पक्षान्तरेणेति स्पष्टम् ऐऔच्-सूत्रभाष्ये। पृथक्प्रयत्नत्वादिति। एङो विवृततरत्वेन ऐचश्च विवृततमत्वेनेति न तयोः सावर्ण्यमिति भावः॥

**अनुदात्तङित आत्मनेपदम् ॥ १ । ३ । १२ ॥**

**कथम्—**

कर्णपुच्छं मया त्यक्तं भग्नो दन्तस्तथैव च।
एष कालः समुत्पन्नो यः पलाति स जीवति॥

इति । पलायत इति स्यात् ? **उच्यते** । 'पल गतौ' इत्यस्य लेटि आडागमे रूपम् । छान्दसा अपि भाषायां क्वचित् प्रयुज्यन्ते । अध्वर्यु-शब्देन 'क्याच्छन्दसि' ( ३।२।१७० ) इत्युप्रत्ययान्तेन ज्ञापितम् । अथवा 'अय गतौ' इत्यस्मादात्मनेपदानित्यत्वात् तिपि दिवादौ 'ध्या चिन्तायाम्' इति कर्त्तव्ये भूवादौ 'ध्यै चिन्तायाम्' इति ज्ञापकात् गणकार्यानित्यत्वाच्छपोऽभावे रूपं 'लोपो व्योर्वलि' ( ६।१।६६ ) इति यलोपे पलातीति ।

**कथमुच्चुकुटिषतीति**, कुटादित्वेन सनो ङित्त्वात् तङ्प्रसङ्गात् ? **उच्यते** । उपदेशाधिकारादिति गाङ्कुटादौ न्यासः ।। **कथं** तर्हि बोभूयते ? "'**तपसः** परस्मैपदं च' इति ज्ञापकात् सनाद्यन्तानामप्युप-देशोऽस्ति" इति ज्ञापकसमुच्चयः । स चायुक्तः, 'भावकर्मणोः' ( १।३।१३ ) इत्यात्मनेपदनिवृत्त्यर्थत्वात् । ततश्च 'पुच्छभाण्डचीव-राण्णिङ्' ( ३।१।२० ) इति ज्ञापकम् ।। **कथं** 'शिञ्जद्वलयसुभगैः' इति मेघः ? **उच्यते** । चक्षिङो युजर्थमात्मनेपदार्थं चेकारानुबन्धे कर्त्तव्ये द्व्यनुबन्धत्वं ज्ञापयति अनुदात्तङित आत्मनेपदमनित्यमिति । एवं च—

काशे स्यन्द कुशे स्यन्द स्यन्द त्वं शत्रुमस्तके ।
अस्माकं तु तथा स्यन्द यथा स्यन्दसि (षेणव ?) ।।

तथा—'नीचं समृद्धमपि सेवति नीच एव दूरेण तं परिहरन्ति पुनर्महान्तः', 'अनुक्तमप्यूहति पण्डितो जनः', 'लभन्ति पुनरुत्थानम्', 'तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न', 'त्राहि मामुरुदुःखितम्', 'त्राहि मां हि तथागतम्' । त्राहीत्यत्रेदमपि वाच्यम् । त्रायत इति त्राः । 'अन्येभ्योऽपि दृश्यते' ( ३।२।७५ ) इति विचि आचारे क्विपि धातुत्वे लोटि रूपम् । मां त्राहि त्रातेवाचरेत्यर्थः । तथा 'मण्डपे शयामि किमतः परम्' इति; 'गणकार्यमनित्यम्' इति गणकार्या-नित्यत्वाच्छपोऽलुग् भवेत् ।

'आदध्यादन्धकारे रतिमतिशयिनोमावहन्वीक्षणानाम्' इति मयूरः ? उच्यते—'धा धारणे' इत्यस्य धातोर्नायं प्रयोगः; किन्तु 'दध धारणे' इत्यस्याशिष्यार्धधातुकत्वे । आदधातीत्यादधः । ततश्चाचार-क्विबन्तादाशिषि लिङ्यकारलोपे यासुटि रूपम् । तथा 'सर्वमापोम-यञ्जगद्' इति चन्द्रिकायां 'सर्वं जगदापोऽमयन्निति विलोक्य' इति व्याचक्षाणा 'अय वय पय मय तय णय गतौ' इत्यस्माल्लङि रूप-माहुः । यस्यायं वैदिकप्रयोगः—'आपोभिर्मार्जनं कृत्वा' इति । तथा च कोशः—

कमलं सलिलं भुवनमुदकं धावकनीरकबन्धम् ।
धवनवारिजीवनाः सुजले ब्रुवते कतमेऽपि नपुंसकमापः ?

इति । व्याख्यानान्तरं बहुत्वान्नोक्तम् । तथा—'प्रत्यूषकाले जगदङ्गनानां मुखेषु कामः प्रतिजृम्भति' इति ।

माता शत्रुः पिता वैरी येन बाल्ये न पाठितः ।
न शोभति सभामध्ये हंसमध्ये बको यथा ॥
अरिं मित्रमुदासीनं मध्यस्थं स्थविरं गुरुम् ।
यो न बुध्यति मूढात्मा सर्वथासौ विनश्यति ॥

इति । तथा—'परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनम्' इत्यादि । 'स सहेन्न कथं तुषारम्' इत्याधृषीयस्य सहेः । तथा—'ग्रसति तव मुखेन्दुं चन्द्रबिम्बं विहाय', 'पिण्डं ग्रसतीति पिण्डग्रः' इति 'अत्वसन्तस्य (६।४।१४) इत्यत्र वृत्तौ 'ग्रसु ग्रहणे' इत्याधृषी-यस्य रूपमिति रक्षितः ॥

अध्वर्युशब्देनेत्यादि । छान्दसोकारप्रत्ययान्तस्याध्वर्युशब्दस्य अध्वर्युक्रतुर-नपुंसकम् इत्यादिसूत्रे, 'एकशतमध्वर्युशाखाः' इत्यादिभाष्ये च प्रयोगदर्शनादिति भावः । अनित्यत्वादिति । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्य चक्षिङो ङित्करणाज्ज्ञा-पकादनित्यत्वं केचिन्मन्यन्ते । तदनुसारेणायं ग्रन्थः । यद्वा अयधातुं स्वरितेतं केचि-दिच्छन्ति । तन्मतेऽकर्त्रभिप्राये परस्मैपदमित्याशयेन ग्रन्थो योजनीयः । अत एव 'उदयति विततोर्ध्वरश्मिरज्जौ' इति माघः । यद्वा नपुंसकमनपुंसकेन० इति

सूत्रान्मण्डूकप्लुत्याऽन्यतरस्यांग्रहणानुवृत्तेरनित्यत्वमस्येति न्यासे।

भृशादिष्वितराणि' इतिवार्तिकभाष्ये 'ङित इति नित्यमात्मनेपदम्' इत्यादि-भाष्यविरोधस्तु व्यवस्थितविभाषया समाधेयः। वस्तुतस्तु प्रामादिक एवायम्।

उपदेशेति। उपदेशेऽजनुनासिक० इत्यतः। एतच्च भाष्ये 'सिद्धं तु पूर्वस्य कार्यातिदेशात्' इति वार्त्तिकव्याख्यानसन्दर्भे कैयटेनाप्युक्तम्। औपदेशिकङितो ग्रहणे दोषमाशङ्कते—कथमिति। ज्ञापकादिति। प्राप्ते ह्यात्मनेपदे परस्मैपदविधानं सार्थकम्, प्राप्तिश्चौपदेशिकङित्त्वादेव तपस्यधातोरिति सिद्धं तपस्यप्रभृतीनामौप-देशिकत्वम्। निवृत्त्यर्थत्वादिति। एतच्च न्यासादिविरुद्धम्। ज्ञापकम् इति। णिङो ङित्त्वमात्मनेपदार्थम्। ज्ञापकत्वं तु पूर्ववत्। हरदत्तमाधवादयस्तु अनुदात्तङित० इत्यादौ धातुग्रहणाभावान्ङिन्मात्रात्परस्य लस्यानुदात्तत्वम्। 'अनुदात्तेतो ये धातवो ङितश्च' इति वृत्तिग्रन्थस्तु प्रायिकाभिप्रायः, 'शब्दाः' इत्यध्याहारेण वा योजनीयः। चङ्ङङ्भ्यामतिप्रसंगस्तु विकरणेभ्यः प्रागेवात्मनेपदविधिप्रवृत्तेः परिहरणीय इति वदन्ति। तन्मते सन्नन्तादीनां नौपदेशिकत्वम् इति प्रतीयते। भाष्ये तु धातु-ग्रहणानुवृत्तिरुक्ता। यङन्तस्यौपदेशिकत्वं तु सनाद्यन्ता धातवः इत्यनेन धातुत्वात्। यङादिविधानन्तु कल्पनामात्रमर्थविबोधार्थं प्रदर्शितम्। युजर्थमिति। अनुदात्ते-तश्च हलादेः इति सूत्रेणेति शेषः। इकारानुबन्ध इति। अनुदात्त इत्यादिः। ज्ञापयतीति। अत्रानुदात्तेत्त्वादेवात्मनेपदे सिद्धे ङकारोऽन्तेदित्त्वविघाताय, अन्यथा नुम्प्रसङ्ग इति केचित्। एतत्तु न युक्तम्, एवं हि सति चक्ष इत्यकारमेवानुदात्त-मितमासजेत्। तस्मादनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति ज्ञापनार्थ एव ङकारानु-बन्धः। आत्रेयस्तु ङित्करणमेकानुबन्धस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम् इत्याह। न चेदमपि युक्तम्, युजर्थमनुदात्तेत्त्वस्यावश्यकर्त्तव्यत्वात्। अत एव गणकृतात्मनेपदा-नित्यत्वज्ञापनार्थो ङकारानुबन्ध इति तरङ्गिण्युक्तमपि निरस्तम्। सम्मताकारस्तु इकार उच्चारणार्थं इति वदति। तन्मते विचक्षण इति ल्युटा साध्यम्। अन्नवधक० इत्यत्र न्यासकारोऽप्येवमेवाह। एतदपि नोचितम्, तथा सति मध्योदात्तत्व-प्रसङ्गात्। दृश्यते पुनरन्तोदात्तत्वम्—'सूर्या उभा चन्द्रमसा विचक्षणाः' इति। अन्नवधकगात्रविचक्षण० इति निर्देशस्तु ल्युट्येव ख्याञाभावबोधनेनापि चरितार्थः। तस्माङ्ङकारानुबन्धोऽनुदात्तेत्त्वलक्षणात्मनेपदाऽनित्यत्वज्ञापनार्थः। इकारानुबन्धस्तु युजर्थं इति माधवः। ग्रन्थकृत्तु शयामीत्यादिसिध्यर्थं ङित्त्वप्रयुक्तमात्मनेपदमप्यनित्य-मितीकारानुबन्धेन ज्ञापितमिति मन्यते। अलमधिकेन।

अनुदात्तेत्त्वलक्षणात्मनेपदानित्यत्वस्योदाहरणान्तरमाह—आदध्यादित्यादिना। उभयपदिनो धात्रो नैतद्रूपम् विधिलिङ्येवैतद्रूपसम्भवात्, ततश्चाशीरनवबोधात्। अतोऽनुदात्तेतो दध धारणे इतिभौवादिकेस्यैवात्मनेपदानित्यत्वेन साधनीयम्,

तदाह—धा धारण इत्यादिना। वस्तुतस्तु प्रार्थनायां लिङित्येव सुवचम्। बल्लभदेवस्तु आदेयात् इति पठति। आध्रेयादिति च स्वयं पठिष्यत्यग्रे। उपपत्त्यन्तरमाह—आदधातीत्यादि। कप्रत्ययान्तोऽयम्, शप्रत्ययस्यानुपसर्गादेव विधानात्। अयादयोऽनुदात्तेत उक्ताः। प्रयोग इति। मयट्प्रत्ययान्त इत्यर्थः। प्रतिजृम्भतीति उदाहरणान्तरम्। एवमन्यान्यपि। शोभतीति। अत्र 'शोभते' इत्येवपञ्चतन्त्रे प्रचलितः पाठः। आधृषीयस्य सहेरिति। सहेराधृषीये यद्यपि पाठो वृत्तिकाराद्यनभिमतस्तथापि कैयटादिसम्मत एव। अतश्च 'सहिश्चुरादौ मृग्यः' इति गणपतिशास्त्रिवचनमयुक्तम्। सहेदिति भौवादिकस्य रूपे तु भवत्यात्मनेपदानित्यत्वोदाहरणम्। पिण्डं ग्रसतीति। हरदत्तादिसम्मतस्तु 'ग्रसते' इत्येव पाठः। आधृषीयस्येति। आधृषादौ ग्रसधातुर्न पठ्यते पाणिनीयैः। आस्वदीये तु पठ्यते। तत्रानित्यण्यन्ताश्चुरादय इति दर्शनेनात्मनेपदानित्यत्वेन वा ग्रसतीति समर्थनीयम्॥

## कर्त्तरि कर्मव्यतीहारे ।। १।३।१४ ।।

कथं 'सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्' इति रघुः? उच्यते। 'प्रतिषेधे हसादीनामुपसङ्ख्यानम्' इति रक्षितः। अत्रादिशब्दः प्रकारे सादृश्ये तद्वद्यप्राप्तात्मनेपदाभावत्वेन, न तु शब्दक्रियत्वेन। एवं च यदुक्तं भागवृत्तिकृता—'प्रकारस्तु शब्दक्रियत्वाद्' इति, तन्न। विनिमयशब्देन कर्मव्यतीहारस्योक्तत्वादिति तु न वाच्यम्, 'इतरेतरान्योन्योपपदाच्च' इति वचनात्। अपशब्द एवायमित्यनुन्यासः। "'ततः सम्प्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ' इति कर्मव्यतीहारो न विवक्षितः, किं तर्हि युध्यमानौ" इति कैयटः॥

प्रकार इत्यस्यैव विवरणं सादृश्य इति। सादृश्यं विवृणोति—तद्वीत्यादिना। तन्नेति। वस्तुतस्तु व्यतिपठन्तीतिभाष्योदाहरणात् शब्दक्रियत्वेनैव सादृश्यं बोध्यमिति कैयटोक्ते रक्षितोक्तं न युक्तम्। यदि तु अशब्दहासेऽपि निषेधो भवतीति मन्यते तर्हि तदपि युक्तमेवेति विवेचनीयं सुधीभिः। उक्तत्वादिति। तथा चोक्तार्थानामप्रयोग इति न्यायेनात्मनेपदं न भवतीति भावः। वचनादिति। तथा चेतरादिशब्देनोक्तस्य विनिमयस्य पुनरात्मनेपदेनोक्तौ जायमानं गौरवं नादरणीयम्, प्रयोगानुरोधादिति भवत्युक्तार्थत्वेऽप्यात्मनेपदम् इति तात्पर्यम्। अनुन्यास इति। माधवस्त्वत्र सम्पदो विनिमयाद्धात्वर्थस्य च तदभावात्तङः प्राप्तिरेव नेति प्राह। हरिवह्योरप्रतिषेधः इति वार्त्तिकेन प्रतिप्रसवात्कथं परस्मैपदं 'सम्प्रहरिष्यन्तौ' इत्यत्रेत्याशङ्कायामाह—तत इत्यादि। कैयट इति। प्रकृतसूत्र इति शेषः। माधवोऽप्यत्रानुकूलः॥

### नेर्विशः ।। १।३।१७ ।।

**कथम्** 'अङ्के निविशती भयाद्' इति रघुः ? नेरुपसर्गस्य ग्रहणम् मधुनि[1] विशन्तीति व्यावृत्त्यर्थम् । इह तु उपसर्गप्रतिरूपको निपातः । पदसंस्काराश्रयणाद्वा ।।

ग्रहणमिति । उत्तरसूत्रोपात्तैः पर्यादिभिः साहचर्यादिति भावः । निपात इति । एतच्च माधवादिग्रन्थेपि स्पष्टीकृतम् । वेति । अत्रारुचिः । तद्बीजन्तु 'वा लिप्सायाम्' इत्यादेरेवं सति वैयर्थ्यापत्तिः, त्वं करोतीत्यादेः साधुत्वापत्तिश्च । अतः 'अङ्कानि विशतीम्' इति पाठ्यम् इति केचित् । मल्लिनाथस्तु 'अङ्कं निर्विशतीं भयात्' इति पठति । निर्विशत इति निविशः, इगुपधत्वात् कः । स इवाचरन्तीमित्यर्थ इत्यपि केचित् ।।

### आङो दोऽनास्यविहरणे ।। १।३।२० ।।

**कथं** 'किं [2]वाऽऽदत्से विहग ! वदनम्[3]' ? उच्यते । कर्त्रभिप्राये भविष्यति । एवञ्च 'प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्' इति भारविः । 'युजेरयज्ञपात्रेषु' ( १।३।६४ ) इति 'स्वराद्यन्तोपसृष्टादिति वक्तव्यम्' इत्युभयनियमात् केवलात् तङोऽभावात् ।।

कर्त्रभिप्राय इति । प्रकृतसूत्रस्य त्वकर्त्रभिप्रायार्थकतया न कर्त्रभिप्राये क्रियाफले आस्यविहरणेऽपि निषेधोऽनेनेति भावः । अस्याकर्त्रभिप्राय एवाङ्पूर्वकादात्मनेपदविधायकत्वेन भारविप्रयोगे निरुपसर्गादपि कर्त्रभिप्राये तङ् सिद्धः । कर्त्रभिप्राये नियमार्थकत्वे त्वस्य प्रोपाभ्याम्० इत्यादेरप्येवम्भूतत्वेन केवलात् तङ् नोपपद्येतेति सन्दर्भार्थः ।।

### क्रीडोऽनुसम्परिभ्यश्च ।। १।३।२१ ।।

**कथं** 'सल्लक्या यष्टिभागस्वनवनसहितः क्रीडते नागराजः' इति शुद्धसुबन्ते ? उच्यते । अपशब्द एवायम् । क्रीडित इति पाठो वा । वार्त्तिकसमुच्चयार्थचकाराद्वा ।।

---

१. 'अम्बूनि' इति मुद्रितः पाठः ।

२. 'व्यादत्से' इति भाषावृत्त्यादौ पाठः ।

३. 'पतनम्' इति मुद्रितः पाठोऽसाधुः ।

शुद्धसुबन्त इति । अत्र शुद्धतिङन्त इति पाठो युक्तः । चकाराद्वेति । न्यासे हि 'समोऽकूजने' इत्यारभ्य शप उपलम्भने इत्यन्तवार्तिकसमुच्चयार्थकश्चकार उक्तः । तत्रानेनैव निरुपसर्गस्यापि समुच्चय इत्यर्थः । आङश्च स्वरितत्वादिनाऽनुवृत्तिः समर्थनीयेति ॥

**शप उपालम्भन इति वक्तव्यम् ॥**

कथं 'सख्यः शपामि यदि किञ्चिदपि स्मरामि' ? उच्यते । चकारसंगृहीतस्यास्य 'नपुंसकमनपुंसकेन' ( १।२।६९ ) इत्यतोऽन्यतरस्यां ग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वेनानित्यत्वाद्वा । वाचा शरीरस्य स्पर्शनायोगाद्वा । भागवृत्तौ तूपलम्भनं प्रकाशनमुक्तम् । एवञ्च पूर्वक एव सिद्धान्तः ॥

भाष्यादौ तूपलम्भन इत्येव पाठः । माधवादिभिर्भागवृत्तिपाठोपि एष एव स्वीकृतः । अस्येति । प्रकृतवार्त्तिकस्येत्यर्थः । अनुवृत्तेरिति मण्डूकप्लुत्येति शेषः । वाचेत्यादि वृत्तिमतम् । अस्याशयस्तु—'त्वत्पादौ स्पृशामि, नैतन्मया कृतम्' इत्येवंरूपः शपथविशेष उपलम्भनमिति । अयोगाद्वेति । एतच्च प्रयोगवशात् कल्प्यते । प्रकाशनमिति । कैयटादयोऽप्येवम् । भागवृत्तिकृता तु वृत्तिमतमुपहसितमपि—'वाचा शरीरस्पर्शनमित्यदः कस्यचित् काव्यम्' इति । नागेशादयोऽप्येवमेव । तथा चैतन्मत उक्तोदाहरणे शपथार्थकत्वेन प्रकाशनार्थाभावान्न तङ् । विशेष उपलम्भनविषये माधवादिग्रन्थेषु स्थितः ॥

**आशिषि नाथः ॥**

कथं 'नाथसे किमु पतिं न भूभृताम्' इति भारविः ? उच्यते । 'आशिष्येव नाथ इति नियमार्थं नेदम्, किं तर्हि, अनुदात्तेत्त्वलक्षणात्मनेपदानित्यत्वान्नित्यात्मनेपदार्थम् । तेनाशीर्विषयादन्यत्र विकल्पं ज्ञापयति' इति कश्चित् । नाधस इति वा पाठः कर्त्तव्यः । एवं 'नाथ ! त्वामनुनाथे विजहिहि संरम्भम्' इत्यपि । अथवा सङ्गरसंरम्भं त्यजेति त्वामाशंस इत्यर्थः ॥

कश्चिदितिसूचितारुचिहेतुकं पाठान्तरमाह—नाधस इति । अरुचिस्तु सम्प्रदायविरोधप्रयुक्ता । इत्यपीति । 'अनुनाधे' इति पाठः कर्त्तव्य इत्यर्थः । अन्यथा समाधत्ते—अथवेति । आशंस इति । एतेनेष्टाशंसनरूपाशीरत्र विवक्षितेति युक्तमेवात्मनेपदमिति दर्शितम् ॥

## हरतेर्गतिताच्छील्य इति वक्तव्यम् ।।

**कथं** 'जलधिमनुहरते सरः' ? **उच्यते** । 'गतताच्छील्ये' इति तु भागवृत्तिः । 'गतविधप्रकारास्तुल्यार्थाः' इति भर्तृहरिः । तेन सादृश्यशीलने तङ् । वृत्तिकारमतेन तु कर्त्रभिप्राये भविष्यति ।।

भागवृत्तिरिति । भाष्येप्येवमेव पाठः । ताच्छील्यमविच्छेदेन शीलनम् । तङिति । 'जलधिमनुहरते' इत्यत्र तस्य विवक्षितत्वादित्यर्थः । वृत्तिपाठानुसारेण गतिर्गमनमित्याश्रित्य प्रकृतोदाहरणे नानेन निर्वाह इति प्रकारान्तरमाह—कर्त्रभिप्राय इति । न्यासाद्यनुसारेण वृत्तिभागवृत्त्योः पाठभेदेऽपि नार्थभेद इति ।।

## उदोऽनूर्ध्वकर्मणि ।। १।३।२४ ।।

**कथम्** 'उत्तिष्ठते वासुकिनाऽपि दष्टः' इति प्राणेश्वरः ? **उच्यते** । नात्रोर्ध्वगमनं, किन्तर्हि, बोधनमर्थः ।।

बोधनमिति । चैतन्यलाभ इत्याशयः ।।

## आङो यमहनः ।। १।३।२८ ।।

**कथम्** 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः, अकर्मकादित्यनुवृत्तेः ? **उच्यते** । वक्षसेत्यध्याहार्यम् । अयमर्थः—विषमविलोचनस्य वक्षसा स्वं वक्ष आजघ्ने । बाणनद्याः प्रतिमुखं यथा स्यात् तथा भुजाभ्यामुपेत्य । अथवा विषमविलोचनस्य भुजाभ्यां स्वं वक्ष आजघ्ने । अथवा विषमविलोचनस्येति सामीप्ये षष्ठी । स्वं वक्ष आजघ्ने आस्फोटितवान् । यद्वा प्रतिमुखमिति विभक्त्यर्थेऽव्ययीभावः । विषमविलोचनस्य वक्ष एत्य आजघ्ने । प्रकृतत्वाद्वक्ष एव । एवं च 'आङो यमहनः' इति तङ् । पूर्वव्याख्यायाम् 'स्वाङ्गकर्मकाच्च' ( वा० १।३।२८ ) इत्युत्तरव्याख्यायाञ्च 'अकर्मकाच्च' इत्यनेनात्मनेपदमिति[1] भागवृत्तिः ।।

स्वं वक्ष इति । तथा च स्वाङ्गकर्मत्वेन भवत्यात्मनेपदमिति भावः । अथवेत्यादि द्वितीयं समाधानं नितरामनुचितम्, संग्रामे परभुजाभ्यां स्वकर्तृकस्ववक्षोहननस्यासंगतेरिति बोध्यम् । षष्ठीति । तथा च विषमविलोचनस्य समीपमेत्य

१. अकर्मकाच्चेत्यनेनात्मनेपदमित्येतावद् द्वितीयसंस्करणे मुद्रितः पाठः ।

स्वं वक्ष आजघ्न इत्यर्थे स्वाङ्गकर्मकत्वेन तङ्। अव्ययीभाव इति। ततश्च सम्मुखे स्थितो गाण्डीवी विषमविलोचनस्येत्यादि योज्यम्। अत्र पक्षे वक्षस इण्धात्वर्थनिरूपितकर्मत्वावरुद्धत्वेन हन्त्यर्थकर्मत्वाभावादकर्मकत्वनिमित्तस्तङिति भावः। पूर्वेत्यादिना पूर्वव्याख्यासंगतिमाह भागवृत्तिकृत्प्रदर्शिताम्। स्वतस्तु भागवृत्तिकारोऽसाधुत्वमेवास्य मन्यते।

अत्रेदं बोध्यम्—सर्वत्रैव ग्रन्थान्तरेषु भागवृत्तिमतेनैतस्याऽसाधुत्वमेव वर्णितम्। धातुवृत्त्यादौ माधवादिभिः भागवृत्तिमतेन 'आजघ्ने' इत्यत्र 'आपेदे', 'आपीडे' इति पाठान्तरं च प्रदर्शितम्। तथा च 'पूर्वव्याख्यायाम्''''भागवृत्तिः' इति प्रकृतवृत्तिवाक्यं न घटते। अतो युधिष्ठिरमीमांसकमहाशया वदन्ति—एतेन भागवृत्तिपाठो भ्रष्ट इति। वयन्त्ववगच्छामः—पूर्वाचार्यवर्णितरीत्या कथमात्मनेपदमिति समुपपाद्य भागवृत्तिकारेण स्वमतानुसारमस्यासाधुत्वमुक्तम्। प्रकृतवृत्तौ भागवृत्तिकृन्मतं न निर्दिष्टं भ्रष्टं वा लेखकप्रमादादिति। पूर्वाचार्यव्याख्यायां भागवृत्तिकृतोऽरुचिस्तु संग्रामे स्ववक्षोहननस्यासम्भवादेवेति स्पष्टीकृतं मल्लिनाथेनापि भारविटीकायामित्यलम्॥

**समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः॥ १।३।२९॥**

**कथम्** 'तच्चैक्यं समगच्छत' इति तङ्, अकर्मकादित्यनुवृत्तेः? **उच्यते**। ऐक्यमिति चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। ततश्च एकं समगच्छत समपद्यतेत्यर्थः। 'आगमत्वात्तिङ्व्यत्ययः। नेयं स्मृतिर्भगवद्व्यासप्रभृतीनधिकृत्य कृता। ते हि भगवन्तो वाग्विषये स्वतन्त्राः' इत्यनुन्यासः॥ **कथं** 'न सम्पपृच्छे गमनाय सत्वरा सखीजनं सन्ददृशे तथाऽपरा' इति घोषः, तथा 'रक्षांसीति पुरापि संश्रृणुमहे' इति मुरारिः, अकर्मकादित्यनुवृत्तेः? **उच्यते**। कर्मव्यतीहारे तङत्र। अन्योऽन्यप्रश्नदर्शनश्रवणानि सम्पूर्वकैरुच्यन्ते।[1] सखीजनादिति वा पाठः, ल्यब्लोपे पञ्चमी, सखीजनं प्राप्येत्यर्थः॥

अत्र 'समो गम्यृच्छिभ्याम्' इत्येतावत् सूत्रम्, शेषं वार्तिकस्थं सूत्रे वृत्तिकृता प्रक्षिप्तम्। अकर्मकादिति। एतच्च 'समः क्ष्णुवः' इतिसूत्रभाष्ये स्पष्टम्। इत्यर्थं इति। तथाचाकर्मकत्वमव्याहतम् इति भवत्यात्मनेपदम् इति भावः। समाधानान्तरमाह—आगमत्वादिति। स्मृतिः पाणिनीयस्मृतिः। 'सम्पपृच्छे', 'सन्ददृशे' इत्युभयत्रापि सकर्मकत्वात्तङभावः प्राप्त इति बोध्यम्। 'दृशेश्चेति वक्तव्यम्' इति

---

१. अन्योऽन्यप्रश्नदर्शनं संश्रवणपूर्वकमुच्यते—इति मुद्रितः पाठः।

वार्त्तिकं च 'सन्ददृशे' इत्यत्र विचारणीयम्। कर्मव्यतीहारमुपपादयति—अन्योऽन्येति। कर्मव्यतीहारोदाहरणे व्यतिशब्दप्रयोगश्च नावश्यक इति स्पष्टीकृतं भाष्यकारेण—'सहयुक्ते तृतीया स्याद् व्यतिहारे तङो विधिः' इति वदता 'दाणश्च' (१।३।५५) इतिसूत्रभाष्ये। अत्र पूर्वं मुद्रितः पाठो भ्रष्ट इति हेतोः 'अन्योऽन्यप्रश्नदर्शनश्रवणानि सम्पूर्वकैरुच्यन्ते' इति गणपतिशास्त्रिकल्पितः पाठः श्रेयान्। मुरारिप्रयोगे तु कथयद्भ्य इत्यध्याहृत्यापि निर्वाह्यमकर्मकत्वमविवक्षयेति कौमुदी॥

**सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः॥ १।३।३६॥**

**कथं** 'विनिन्युरेनं गुरवो गुरुप्रियम्' इति रघुः? **उच्यते।** आचार्यकरणस्याविवक्षितत्वात्। 'तदाद्याचिख्यासायाम्' (२।४।२१) इति च सना ज्ञापितम्—विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणं, न वस्तुतः सत्ता॥

अविवक्षितत्वं रघुवंशवर्णनप्रतिकूलमित्याशयेन समाधानान्तरमाह—तदाद्येत्यादि। समेति। आख्यातुमिच्छाऽऽचिख्यासेत्यत्रेच्छार्थकसन्प्रत्ययेनेत्यर्थः॥

**कर्तृस्थे चाशरीरे कर्मणि॥ १।३।३७॥**

**कथं** 'विगणय्य नयन्ति पौरुषं विजितक्रोधतया मनीषिणः' इति भारविः? **वेरित्यनुवर्तते।** तेन न तङिति रक्षितः। एवं च 'अपनय मानिनि मानम्'[१]॥

वेरिति। वेः शब्दकर्मणः (१।३।३४) इत्यतो मण्डूकप्लुत्येति भावः। रक्षित इति। अयं सन्दर्भो भाषावृत्तावविकलं लभ्यते। कर्तृगामित्वाऽविवक्षायां परस्मैपदमिति कौमुदीकृत्। प्रमाद एवेत्यपि मतम्। भारविव्याख्याता गदसिंहस्तु—'इह प्राप्त्युपसर्जने नयतिर्द्विकर्मकः, शिवमुपायं पौरुषं नयन्तीत्यात्मनेपदं न भवतीति' इति। मल्लिनाथेन च स्पष्टीकृतम्—'नयतिः प्रापणार्थे द्विकर्मकः। अत्र पौरुषस्य कर्तृस्थकर्मत्वेऽप्युपायस्याऽतथात्वाद्'''आत्मनेपदं न भवति' 'इति। हरदत्तेन तु—'अपगमे वर्त्तमानादिदमात्मनेपदविधानं भवति। अत्र तु करोत्यर्थे प्राप्त्यर्थे वा वर्त्तते, अनेकार्थत्वाद्धातूनाम्' इत्युक्तम्॥

---

१. अपनयमनीनमानम्—इति लेखकप्रमादाशुद्धो मुद्रितः पाठः।

## आङ उद्गमने ॥ १।३।४० ॥

उद्गमने प्रधाने गुणभूते च तङ्, ज्योतिरुद्गमनस्य 'आक्रामति धूमो हर्म्यतलम्' इति भाष्ये प्रत्युदाहरणात् । अत्र ह्युद्गमनपूर्विकायां व्याप्तौ क्रमिः । उद्गमनमात्रे 'आक्रमत आदित्यः' । उद्गमनपूर्विकायां व्याप्तौ 'दिवमाक्रममाणेव केतुतारा भयप्रदा' इति भट्टिः ।[1] यद्येवं कथं 'नभः समाक्रामति नष्टवर्त्मना स्थित्वैकचक्रेण रथेन भास्करः' इति ? उच्यते । अपशब्द एवायमिति भागवृत्तिः । श्रीसर्वरक्षितस्त्वाह—"व्याप्तिमात्रवचनोऽत्र क्रमिः । उद्गमस्तु गम्यमानोऽपि न विवक्षितः । विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणं न वस्तुतः सत्ता । 'तदाद्याचिख्यासायाम्' ( २।४।२१ ) इत्यत्र सन्प्रयोगेण ज्ञापितम्" ॥

हर्म्यतलमिति । अत्रोद्गमनमात्रमर्थो न घटते, उद्गमने क्रमेरकर्मकत्वेन द्वितीयाऽनुपपत्तेरित्यतः सकर्मकत्वोपपत्त्यनुकूलमर्थान्तरमाह—अत्र हीति । ये तु उदगमनमात्रार्थकत्वमत्र क्रमेर्मन्यन्ते तन्मते हर्म्यतलादिति पञ्चम्यन्त एव पाठ इति स्पष्टं पदमञ्जर्यादौ । तथा च ग्रन्थोक्तार्थं उद्गमनस्य गुणीभूतत्वेऽपि प्राप्तमात्मनेपदं ज्योतिष्कर्तृकत्वाभावमात्रेण निवारयता भाष्यकृता गुणोभूतेऽपि तस्मिन् प्राप्तिः समर्थितेति भावः । व्याप्तिमात्रेति । एतच्च प्रदोपपदमञ्जर्यादौ स्पष्टम् । ज्ञापितमिति । एतच्च 'सम्मानन०' (१।३।३६) सूत्रे विवृतम् ॥

## प्रोपाभ्यां समर्थाभ्याम् ॥ १।३।४२ ॥

कथं 'ते तां हन्तुं प्रचक्रमुः' इति चण्डी ? उच्यते । 'पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण' ॥

समर्थत्वं चानयोः प्रारम्भार्थं एव । अतएव 'प्रोपाभ्यां प्रारम्भे' इति सुवचम् । साधनेनेति । तथा च चक्रमुरितिरूपसिध्यनन्तरं प्रोपसर्गयोग इति नात्मनेपदमिति भावः । वस्तुतः अनुभूयत इत्यादौ कर्मणि लकारोपपत्तये पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति भाष्ये सिद्धान्तितत्वेन चिन्त्यमेतत् । तस्मादार्षत्वं शरणम्, अर्थान्तरकल्पनं वा । यद्वा प्रत्यय इत्यादिनिर्देशेन 'उपसर्गात्पूर्वमपि क्वचित्साधनकार्यप्रवृत्तिः' इति ज्ञापनेनोपपाद्योयं प्रयोगः । अत एव प्रत्येतीत्याद्यपि सिध्यति, अन्यथा हि पूर्वं दीर्घत्वे कृते सति गुणे रूपाऽसिद्धिः स्पष्टैवेति द्रष्टव्यम् ॥

---

१. 'महिः' इति मुद्रितः पाठोऽशुद्धः ( द्र० भ० का० ८।२३ ) ।

**अनुपसर्गाद्वा ।। १।३।४३ ।।**

**कथं** 'वारिपूर्णां मही कृत्वा पश्चात् सङ्क्रमते गुरुः' । तथा 'अर्धरात्रे कलाहीने यदा सङ्क्रमते रविः' ? **उच्यते** । उपसर्गप्रतिरूपकत्वाद् 'अनुपसर्गाद्वा' इति तङ् । यच्च 'क्रीडोऽनुसम्परिभ्यश्च' ( १।३।२१ ) इत्यत्रोक्तम्—'समा साहचर्यादन्वादय उपसर्गा गृह्यन्ते' इति तत् कर्मप्रवचनीयव्यावृत्तिपरं समोऽकर्मप्रवचनीयत्वात् । उपसर्गप्रतिरूपकस्तु परिणा साहचर्यात् । 'अकर्मकाच्च' ( १।३।३५ ) इति चकारानुवृत्तेरवृत्त्यादावुपसर्गान्तरे तङ् ( सङ्क्रमत इति वा पाठे सिद्धासिद्धौ गुरुरित्यर्थः ? ) ।।

समा साहचर्यादिति काशिकायामुक्तम्, तत्र चान्वादिरुपसर्गो गृह्यत इत्येकवचनान्तः पाठ उपलभ्यते सम्प्रति । एतेन प्रकृतेऽपि समुपसर्ग एवेति यत्प्रतीयते तन्निरस्यति—तदिति । परिणेति । परित इत्यादौ परेस्तथात्वात् । वस्तुतस्तु क्रीडोऽनुसम्परिभ्यश्च इत्यत्र परेरुपसर्गत्वेन तत्साहचर्यादपि सम उपसर्गस्यैव ग्रहणमुचितमित्यतः समाधानान्तरमाह—अकर्मकाच्चेति । तथाचानुक्तसमुच्चायकेन चकारेण सोपसर्गादपि वृत्त्यादिभिन्नेऽर्थे प्रकृतसूत्रेण तङ्विकल्प उपपद्यते । वृत्त्यादावर्थे तु उपपराभ्यामेवेति नियम इति भावः । 'विकरणेभ्यो नियमो बलीयान्' इत्येतज्ज्ञापकतापरकस्य अनुदात्तङित० सूत्रभाष्यस्य प्रामाण्येन प्रकृतसूत्रं लिडाशीर्लिङोर्न प्रवर्तत इति केचित् ।।

**अकर्मकाच्च ।। १।३।४५ ।।**

**कथं** 'सम्भविष्याव एकस्यामभिजानासि मातरि' इति भट्टिः, 'अभिजानासि देवदत्त ! कश्मीरेषु वत्स्यावः' इति जानातेरकर्मकत्वादनेन तङ्प्रसङ्गात् ? **उच्यते** । 'व्यवस्थितविभाषाविज्ञानात्, ज्ञानोपसर्जनवृत्त्या जानातेरज्ञानार्थत्वात्, [१]तस्य भाष्यकारवचनाद्वा 'अभिजानामीति' इत्युक्तवान् भागवृत्तिः । 'वाक्यार्थस्य कर्मणो विवक्षितत्वाद्' इति रक्षितः ।। **एवं च** 'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽपि दृष्टा मया' इत्यत्र तङ् न स्यात् ? **'अनुपसर्गाज्ज्ञः'** ( १।३।७६ ) इति कर्त्रभिप्राये तङ् ।।

---

१. '....तेरप्रत्यादा०' इत्यत्र '....तेरप्रादा०' इति गणपतिशास्त्रिकल्पितः पाठः प्रकरणविरुद्धोऽपार्थकश्च ।

अकर्मकत्वादिति। कस्यापि पदार्थस्येप्सिततमत्वाभावेन कर्मत्वाभावादिति तात्पर्यम्। व्यवस्थितविभाषेति। 'अनुपसर्गाद्वा' (१।३।४३) इत्यतो मण्डूकप्लुत्या वेत्यनुवृत्तेरित्यर्थः। ज्ञानोपसर्जनेत्यादि। ज्ञानविषयीकरणाद्यर्थकत्वमादाय कथञ्चिदुपपाद्यमिदम्। पदमञ्जरीप्रसादादौ तु सम्प्रतिभ्यामनाध्यान इत्यत्र 'अनाध्याने' इति योगविभाग उक्तः। तथा च प्रकृत उत्कण्ठापूर्वकस्मरणार्थकत्वमभिजानातेः स्वीकृत्यापि समाधानं कर्तुं शक्यते इति बोध्यम्। एवंचेति। वाक्यार्थकर्मत्वविवक्षायां चेत्यर्थः। अत्र च पक्षेऽभिजानातेः स्मरणमात्रमर्थः, तथा च सकर्मत्वादेवाऽप्राप्तिरिति बोध्यम्॥

## उपाद्यमः स्वकरणे ॥ १।३।५६ ॥

कथम् 'उपायंस्त महास्त्राणि' तथा 'उपायंसत नासवम्', शस्त्राण्युपायंसत जित्वराणि', 'नोपायध्वं भयं सीताम्' इति भट्टिः। स्वकरणं पाणिग्रहणमिति व्याख्यानात्? उच्यते। 'कर्त्तरि'[1] इत्यनुवृत्तेः स्वकरणमात्यन्तिकस्वीकारः' इति रक्षितभागवृत्ति (कारौ)। उपाङ्पूर्वो यमिरिति जयमङ्गला। ततश्च 'समुदाङ्भ्यो यमोऽग्रन्थे (१।३।७५) इति तङित्यन्यः॥

पाणिग्रहणमिति। तथा च वृत्तिः—"पाणिग्रहणविशिष्टमिह स्वकरणं गृह्यते, न स्वकरणमात्रम्' इति। एतच्च प्रसिद्धिवशादुक्तम्। अत एव जयमंगलायाम्, मूलधृततृतीयोदाहरणातिरिक्तस्थलेषु स्पष्टीकृतमिदं यथासम्भवं वास्तवमौपचारिकं वा स्वकरणमुपपाद्य। भाष्ये तु 'अस्वं यदा स्वं करोति तदा भवितव्यम्' इत्युक्त्वा अस्वस्य स्वत्वापादानमात्रमेव स्वकरणमुक्तम्। प्रतिपादितं चैवमेव कैयटहरदत्तमाधवादिभिः। अत एव 'शस्त्राण्युपायंसत जित्वराणि' (१।१६) इत्यादिभट्टिप्रयोगा अप्याञ्जस्येनैवोपपद्यन्ते। कर्त्तरीति। कर्त्तरि कर्मव्यतिहारे इति सूत्रादिति। यद्यपि भाष्ये उत्तरार्थमत्र कर्तृग्रहणमित्युक्तम्, अनुदात्तङितः इति सूत्रभाष्ये शेषात्० सूत्रभाष्ये च उत्तरार्थमित्यस्य शेषात् कर्त्तरि० इत्यर्थत्वमिति च वर्णितम्, तथापि प्रकृतभाष्यस्य प्रदर्शनार्थत्वं मन्यमानैर्हरदत्तादिभिरन्यत्रापि तदनुवृत्तिः समर्थितैव। तथा च कर्तृसामान्यस्यैव लाभात्तत्कर्तृकं स्वीकरणमेव प्रतिफलतीत्यभिप्रायेण रक्षितव्याख्यानम्। तदेतत् फलतो न भाष्योक्तपक्षाद् भिद्यते। आत्यन्तिकत्वं चात्र परस्वत्वनिवृत्तिरेव। जयमङ्गलेति। एतच्च 'उपायंसत नासवम्' (८।३३) 'उपायंस्त महास्त्राणि' (१५।२१) इत्यस्य च विवरणे स्पष्टीकृतम्॥

---

१. अत्र 'कर्तृस्थ' इति गणपतिशास्त्रिसंशोधनमपार्थम्।

३

### म्रियतेर्लुङ्लिङोश्च ।। १।३।६१ ।।

कथं 'मम्रे पतङ्गवद्वीरैः' इति भट्टिः ? उच्यते । 'कर्त्तरि' इत्यनुवृत्तेः कर्तरीति नियमाद्भावे तङ् इति रक्षितः ।।

अत्र वृत्तिपाठो भ्रष्ट इवाभाति । अत इत्थं पाठः कार्यः "·····भट्टिः । कर्त्तरि इत्यनुवृत्तेः कर्त्तरीति नियमात् ? उच्यते । भावे तङिति रक्षितः ।।" इति । भावे तङिति जयमङ्गलायामप्युक्तम् । प्रकृतसूत्रस्थभाषावृत्तिपाठोऽपि किञ्चिद्भ्रष्ट इव प्रतीयते ।।

### प्रोभाभ्यां युजेरयज्ञपात्रेषु ।। १।३।६४ ।।

कथं 'प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्' इति भारविः । उपसर्ग-योगाभावात् ? उच्यते । कर्त्रभिप्राये ।।

कर्त्रभिप्राय इति । स्वरितेत्त्वादिति भावः । पूर्वमपि प्रसंगादेतदुक्तम् ।।

### भुजोऽनवने ।। १।३।६६ ।।

कथं 'दिवं मरुत्वानिव भोक्ष्यते महीम्', तथा 'बुभुजे पृथिवी-पालः पृथिवीमेव केवलाम्' इति रघुः, तथा 'बुभुजाते चिरं महीम्' इति कामन्दकीयः । पालने 'अनवने' इति प्रतिषेधात् ? उच्यते । "'भुजो भक्षे' इति कर्तव्ये अनवनग्रहणादुपभोगवृत्तावपि तङ्" इति रक्षितः । पुरुषोत्तमदेवश्च—'उपभोगोऽत्र भुजेरर्थः ।[१] आत्मसात्करणं वा अनवनम्' । एवं च 'वृद्धो जनो दुःखशतानि भुंक्ते' इत्यपि । चान्द्रास्तु 'भुजो भक्षे' इत्येवमाहुः । तेषां चिन्त्यम् ।।

अवनं पालनम् । तद्भिन्नेऽर्थे प्रकृतसूत्रेणात्मनेपदविधानम् । अत एव भुज-पालनाभ्यवहारयोरिति रौधादिकस्यैवात्र ग्रहणम्, न तौदादिकस्येति स्पष्टम् भाष्यादौ । कर्त्तव्य इति । लाघवादिष्टान्वाख्यानाच्चेति भावः । भुजेरर्थ इति । धातूनामनेकार्थत्वादिति भावः । अयं पुरुषोत्तमदेवस्य ग्रन्थो न भाषावृत्तिस्थः । तत्र तु—'भुजो भक्षे इति नोक्तम्, अनुभवेऽपि यथा स्यात्—सुखमनुभुङ्क्ते' इति पठितम् ।।

### अनुपसर्गाज्ज्ञः ।। १।३।७६ ।।

कथम् 'इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य' इति

१. 'गौणार्थः' इति मुद्रितः पाठः ।

भट्टिः ? उच्यते । नृपेणेति विपरिणामेन कर्मण्यात्मनेपदमिति जयमङ्गला ॥

सकर्मकार्थमिदं सूत्रम्, अकर्मकाच्च इत्यनेनेतरत्र सिद्धेः । जयमङ्गलेति । दीक्षितादयोप्येवमेवाहुः ॥

**शेषात् कर्तरि परस्मैपदम् ॥ १।३।७८ ॥**

**कथम्** 'इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे' इति भवभूतिः, शासेः परस्मैपदित्वात् ? **उच्यते** । 'आङः शासु इच्छायाम्' इत्यस्य शास आङः प्रयोगः प्राणेयेति लक्ष्यते ॥ **कथं** 'स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते' ? **उच्यते** । कर्मकर्त्तरि तङ् ॥ **कथं** 'दासत्वं गच्छते नार्या वृद्धस्तु पुरुषोत्तमः' । तथा 'नालानं करिणां सस्रे' इति रघुः । कर्मव्यतीहारे 'न गतिहिंसार्थेभ्यः' (१।३।१५) इति निषेधात् ? **उच्यते** । नालानैरिति पाठः कर्त्तव्यः । कर्मकर्तरि चायं तङिति टीका । गच्छत इति चिन्त्यमिदम् ॥ **कथं** 'मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति' इति, कर्मणि तङि पापैरिति स्यात् ? **उच्यते** । कर्मवद्भावे कर्तरि यगात्मनेपदम् । अन्तर्भावितण्यर्थो वा मुचिः । पापेभ्यो मुच्यते त्याज्यत इत्यर्थः ॥ **कथं** 'रजसा शुद्धयते नारी' इति तङ् ? उच्यते । शुद्धशब्दात् 'तत्करोति' इति णिच् कर्मणि तङ् ॥ **कथं** 'कदाचित् कुप्यते माता नोदरस्था हरीतकी' इति ? **उच्यते** । कर्तरि क्विबन्तात् क्यङ् ॥ **कथं** 'प्रियामुखं किम्पुरुषश्चुचुम्बे' इति कुमारः ? **उच्यते**।कर्मव्यतीहारे।'अन्योन्यचुम्बनमिति कर्मव्यतीहारः' इत्यनुन्यासः ॥

**कथम्** 'अन्वेषमाणं मुहुः' इति कादम्बरी । तथा 'प्रेषे तत्क्षणमास्यानाम्' इति चाणक्यः । तथा अध्येषामहे[1] इति विध्यादिसूत्रे वृत्तिः ? **उच्यते** । एतच्च ईष गतावित्यस्य रूपम् ॥ कथं 'नन्दते च कुलं पुंसाम्,' तथा 'ततः स ददृशे च तौ', तथा 'तच्छृणुष्व मयाख्यातं यथावत् कथयामि ते' ? उच्यते । आगमत्वादित्युक्तमेव । कर्मकर्तरि

१. पदमञ्जर्यान्तु 'अध्येषामहे' इति पाठान्तरं दूषयित्वा 'अधीच्छामः' इति पाठः स्वीकृतः ।

वा रूपाणि ।। कथं 'स्वराज्यं प्राप्स्यते भवान्' इति ? उच्यते । आगमत्वादिति ।। कथं 'लोलमानोऽनलः, 'ज्वलमानोऽनलः'[१] । ताच्छील्ये चानश् ।। कथं 'प्रसज्यते भूः' 'षञ्ज गतौ' इत्यस्य परस्मैपदित्वात् ? उच्यते । 'प्रसज्यत इति भाष्यकारवचनाद्' इति धातुप्रदीपः ।।

प्रायेणेति । तथा चात्रेयः—"प्रायेणायमाङ्पूर्व इति 'नमोवाकं प्रशास्महे' इति भवभूतिप्रयोगोपपत्तिः" इति । तथा च कदाचिदुपसर्गान्तरयोगेऽपि तङ् सिद्धः । कर्मकर्त्तरि तङिति । प्रकृतसूत्रे कर्त्तरि कर्मव्यतिहारे इत्यतः कर्त्तरीत्यस्यानुवृत्तेर्भाष्यसम्मतत्वेन कर्त्तैव यः कर्त्ता तस्मिन्नित्यर्थात् कर्मकर्तुर्न परस्मैपदमिति भावः । नालानं करिणामिति । रघुवंशे ४।४८ संख्यके पद्ये तृतीयपादे पाठान्तरमिदं चारित्रवर्धनेन स्वीकृतम् । मल्लिनाथादयस्तु 'नास्रसत् करिणां ग्रैवम्' इति पठन्ति । समाधानान्तरमाह—कर्मकर्त्तरि चायमिति । टीका चारित्रवर्धनस्य । पापेभ्यो मुक्तेः कर्मस्थत्वमनुपपन्नम्, कर्मणि क्रियाकृतविशेषाऽप्रतीतेरिति समाधानान्तरमाह—अन्तर्भावितेति । त्याज्यत इति । विष्णुपूजनादिश्चात्र कर्त्ता । कर्मणि तङिति । तथा च शुध्यत इत्यस्य शोध्यत इत्यर्थः । क्यङिति । आचारेऽर्थे इति शेषः । चुचुम्बे इति । कुमारसम्भवे ३।३८ पद्ये चतुर्थपादस्थोयं पाठः । मल्लिनाथस्तु 'प्रियामुखं किम्पुरुषश्चुचुम्ब' इति पठति ।

ईषेति । 'ईष गतिहिंसादर्शनेषु' (भ्वा० ग० ३९५) इत्येत्यर्थः । कर्मकर्त्तरीति । तथापि यगभावार्थं प्रथमतृतीययोः स्वीकर्तव्यमेवागमत्वमिति वरमागमत्वादेव समाधानम् । लोलमान इति । 'लुट विलोडने' इत्यत्र सुधाकरेण "लुड विलोडने इति जान्तः, लान्तोऽपि तु ददृशे—लोलः" इति भूवादयो धातवः इति सूत्रे उक्तम् । अत एव माघः—'लोलद्भुजाकारबृहत्तरङ्गम्' इति । चानशिति । ताच्छील्यवयोवचनशक्तिषु चानश् ( ३।२।१२९ ) इति सूत्रेणेति भावः । षञ्जेति । 'षञ्ज सङ्गे' इति मैत्रेयः ( भ्वा० ९९५ ) माधवश्च ( भ्वा० ६०६ । काशकृत्स्नेनापि इत्थमेव पठितम् ( भ्वा० ६६८ ) । धातुप्रदीप इति । मुद्रिते तु ग्रन्थे नैतल्लभ्यते । वस्तुतः 'षस्ज गतौ' इति पठनीयं मूले ।।

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।। १।३।८६ ।।

कथं 'पातालहंसाः पटुभिर्निनादैः प्रबोधयन्ते नृप नागकन्याः' इति, अनेन परस्मैपदित्वात् ? 'णेरणौ'( १।३।६७ ) इत्यादिना तङ् ।

---

१. 'दलमानो ( वलिनो ) नीलः, ज्वलमानोऽनलः' इति मुद्रितः पाठः ।

अयमर्थः—नागकन्यका हंसान् प्रबोधयन्ति हंसास्ताः प्रबोधयन्ते। एवं 'करेणुरारोहयते निषादिनम्' इति माघः। 'स सन्ततं दर्शयते गतस्मयः' इति भारविः॥

णेरणाविति। अन्ये त्वत्र सर्वत्रैव णिचश्च इति सूत्रेणैव तङिनोच्छन्ति। अत्र विषये विस्तरोन्यतोवसेयः॥

## निगरणचलनार्थेभ्यश्च ॥ १।३।८७ ॥

कथं 'शिरः कम्पयते युवा'। अनेन परस्मैपदित्वात्? उच्यते। चिन्त्यमिति भागवृत्तिः। 'शिरः कम्प्यते' इति वा पाठः कर्तव्यः। शिरःकम्पी अयते गच्छतीत्यर्थः। अय गतावित्यस्य रूपम्॥

इति शरणदेवविरचितदुर्घटवृत्तौ

अय गतावििति। भौवादिकोऽयं धातुरनुदात्तेत्॥

इति दुर्घटवृत्तिविवृत्तौ प्रथमाध्यायस्य तृतीयः पादः॥

## अथ चतुर्थः पादः।

## आ कडारादेका संज्ञा ॥ १।४।१ ॥

## यू स्त्र्याख्यौ नदी ॥ १।४।३ ॥

कथम् अतिलक्ष्म्यै ब्राह्मणाय? उच्यते। अवयवाश्रितनदीत्वात् सिद्धिरिति रक्षितः। कथं तर्हि नित्यं सुमतये प्रियविप्राय? उच्यते। ह्रस्वयोरियङुवङ्स्थानयोश्च 'ङिति ह्रस्वश्च' (१।४।६) इति स्त्रीवचन एव पाक्षिकी नदीसंज्ञेष्यते। न चावयवाश्रयेति स्मृतिः इति भाषावृत्तिः। एवं मंजुश्रियीति[1] रत्नश्रीप्रयोगः। कालदुष्टोऽयमपशब्दोऽवयवाश्रयनदीत्वाभावादिति॥

अवयवेत्यादि। तथा च भाष्यम्—'अवयवस्त्रीविषयत्वात् सिद्धम्' इति। अवयवः = वृत्तिप्रकृतिभूतो लक्ष्मीशब्दः प्रकृते। उपपत्तिश्चान्तारङ्गलक्षणा कैयटादिभिरुक्ता। तर्हि = अवयवाश्रितनन्दीत्वे। स्त्रीवचन एवेति। ङित्प्रत्ययाक्षिप्तस्याङ्गस्यैव स्त्रियामिति विशेषणात्समुदायस्य स्त्रीत्व एव नदीत्वविकल्पः, नेयङुवङ्० इति निषेधश्च भवतीत्याशयः। एतच्च—'ह्रस्वेयुवस्थानप्रवृत्तौ च

---

१. 'मञ्जुश्रयशारीति' मुद्रितः पाठः।

स्त्रीवचने' इत्यादिना भाष्य उक्तम्। स्मृतिः वार्त्तिककारादीनामिति शेषः। मतान्तरमाह—कालेति ॥

नेयङुवङ्स्थानावस्त्री ॥ १।४।४ ॥

कथं 'हा पितः क्वासि हे सुभ्रु' इति भट्टिः। 'विमानना सुभ्रु! कुतः पितुर्गृहे' इति कुमारः। अनेन नदीत्वप्रतिषेधाद्ध्रस्वाभावात्? उच्यते। 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यूङि समासे उपसर्जन-ह्रस्वत्वे कृते 'ऊङुतः' (४।१।६६) इत्यूङि तस्य समुदायभक्तत्वादत्र नोवङ्स्थानत्वमिति सम्बुद्धिह्रस्व इति भट्टिटीका। 'वामि' (१।४।५) इत्यतो वाग्रहणमपकृष्य व्यवस्थितविभाषात्वाद् इति श्रीकण्ठः। 'वर्षाभ्वै' इत्यत्र तु स्थानग्रहणादपवादविषयत्वान्नदीत्वनिषेधविकल्पयोः प्रतिक्षेपान्नित्यं नदीत्वनिबन्धन आट् ॥

सुभ्रिवती। भ्रमेर्डू प्रत्ययस्य (उणादि सू० २।६८) स्त्रीत्वाभावाद् गोस्त्रियो-रित्यनेनाप्राप्तिः, प्रकृतनिषेधाच्च सम्बुद्धिह्रस्वस्याप्यप्राप्तिरिति प्रश्नाशयः। अप्राणीति। भ्रूशब्दादित्यर्थः। भट्टिटीकेति। जयमङ्गलेत्यर्थः। तथा च वामनोऽप्याह—'ऊकारान्तादप्यूङ्प्रवृत्तेः" इति। सामान्ये नपुंसकत्वेन कस्यचित्समाधानम्। हरदत्तस्तु सकृद्बद्धत्वादनित्योऽयं निषेध इति समादधौ। प्रमाद एवायमित्यपि मतम्। श्रीकण्ठ इति। मनोरमायान्तु दूषितमिदम्, तथा हि सति प्रकृते नञ्-ग्रहणस्य वामीति सूत्रस्य चानर्थक्यापत्तेः, 'वेयङुवङ्स्थानावस्त्री' इति न्यासेनै-वेष्टसिद्धेः। स्थानग्रहणादित्यादि। प्रकृतसूत्रस्थस्थानग्रहणेनेयङुवङोर्यदा स्थितिस्तदा प्रतिषेधः, अपवादेन बाधने तु नेति ज्ञापितत्वात् प्रकृतेऽवयवस्यानङ्गत्वेनाङ्गस्य च वर्षाभ्वश्च इति सूत्रेण यण्विधानादुवङ्स्थानत्वाऽभावेन निषेधाऽप्रवृत्तेर्नित्यं नदीसंज्ञेति भावः ॥

शेषो घ्यसखि ॥ १।४।७ ॥

कथं 'सखिना वानरेन्द्रेण'? उच्यते। 'अलवणा यवागूरिति-वदल्पार्थे नञो विधानाद्' इत्यनुन्यासः। कथम् 'अतिसखेरागच्छति'? **असखीति प्रथमा**निर्देशादिवर्णोवर्णान्तस्य घित्वम्। प्रतिषेधश्च सखिशब्दस्यैव, न वर्णमात्रस्य। तदन्तविधिना प्राप्नोति चेत्? न, तत्र 'ग्रहणवता प्रातिपदिकेन न तदन्तविधिरस्ति इति केवलस्यैव निषेधो न तदन्तस्य। **यद्येवं कथं** 'बहुसंख्या कृतम्', 'बहुसख्युरि'ति?

उच्यते । "असखीति व्यत्यासेन षष्ठ्यर्थे प्रथमेति वर्णमात्रस्य घित्वम् । प्रतिषेधोऽपि तस्यैव । तथा च 'द्वन्द्वे घि' इत्यत्र घ्यन्तं पूर्वं निपततीत्युच्यते" इति वृत्तिः । एवञ्च "सखीशब्दावयवस्येकारस्य घित्वप्रतिषेधाद् बहुसख्या बहुसख्युः" इति भाष्यानुगतो रक्षितः ॥

अनुन्यास इति । तथा च कचित्सखिशब्दस्यापि घि संज्ञासिद्धिः । वस्तुतस्तथाविधः प्रयोग आर्षत्वात्साधनीयः । स्पष्टं चेदं नदीसंज्ञासूत्रे कैयटे । समाधानान्तरं तु तत्त्वबोधिन्यादावुक्तं न सङ्गतम् । अतिसखेरागच्छति इति । एतच्च ख्यत्यात्परस्य, यस्येति च इति सूत्रभाष्ययोर्दृश्यते । वर्णयोर्घिसंज्ञेति पक्षे सखिशब्दावयवेवर्णस्यापि घिसंज्ञाप्रतिषेधाद् प्रकृतेपि प्रतिषेधेन घेर्ङिति इति गुणो न स्यादिति प्रश्नाशयः । समाधत्ते—असखीति । तथा च सखिभिन्नस्य शब्दस्येवर्णाद्यन्तस्यैव घिसंज्ञेति सूत्रार्थे जाते सखिशब्दस्यैव घिसंज्ञाभावः । प्रकृते च समुदायस्य सखिशब्दत्वाभावेन न निषेध इति भावः । न तदन्तस्येति । एतच्च ख्यत्यात्परस्य इत्यत्र कैयटेन प्रकृतसूत्रे हरदत्तेन चोक्तम् । यदा तु ग्रहणवतेत्यस्य प्रत्ययविधिविषयत्वमिष्टं तदा प्रकृते लाक्षणिकत्वादेव सखिशब्दस्य प्रतिषेधाभावः समर्थनीयः । सखिशब्दानूङीषि, यस्येति लोपे सखीमतिक्रान्त इति विग्रहे प्रादिसमासेऽनित्यत्वात् लिङ्गविशिष्टपरिभाषायाः समासान्तविधेर्वा तत्र लिङ्गविशिष्टपरिभाषाऽप्रवृत्तेर्वा टजभावे गोस्त्रियोरिति ह्रस्वे सखिरूपस्य लाक्षणिकत्वं स्पष्टमेव । एवञ्च वर्णसंज्ञापक्षेऽपि न दोषः ।

बहुसख्येति । बहवः सखायो यस्य तेनेति विग्रहः, न तु स्त्रीलिङ्गेन समासः, तस्मान्न पूर्वोक्तवद् घिसंज्ञेति बोध्यम् । अत्र चेकारो न लाक्षणिक इति प्रतिषेधो भवत्येव । यस्येति च इति सूत्रभाष्यप्रामाण्येन च तदन्तस्यापि प्रतिषेधो भवत्येव सति प्रतिपदोक्तत्व इति न दोष इत्यपि बोध्यम् । विस्तरस्त्वन्यतोऽनुसन्धेयः ॥

**पति समास एव ॥ १।४।८ ॥**

कथं 'पतिना नीयमानायाः पुरः शुक्रो न दुष्यति', तथा 'गते मृते प्रव्रजिते क्लीबे च पतिते पतौ", तथा 'पतौ जीवति या नारी उपोष्य व्रतधारिणी । आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत्' ? उच्यते । 'शेषो घ्यसखिपती' इति वक्तव्ये पृथक्करणं ह्यनित्यत्वज्ञापनार्थम् । जीवत्पत्यामिति तु शेषग्रहणानुवृत्तेः 'ङिति ह्रस्वश्च' ( १।४।६ ) इति नदीत्वादिति रक्षितः । [ कथं दुहितुः ] पतौ ? उच्यते । समासे कृते 'विभाषा स्वसृपत्योः' इत्यलुग्विधानात् ॥

गत इति । 'नष्टे' इति पाठः प्रसिद्धः । अनित्यत्वेति । 'पतिगृहे, सखिगृहे' इत्यादौ पूर्वनिपातनियमार्थमेवं न्यासो न कर्तुं शक्य इति हरदत्तादयः । अनुवृत्ते-रिति । प्रकृतसूत्र इति शेषः । तथा च प्रकृतोदाहरणे यदा नदीसंज्ञा तदा न शेषत्वमिति न घिसंज्ञेति न दोषः । एतच्चाकडारीयत्वादपि समाधेयम् । दुहितुः पतावित्यत्र समासमनभिप्रेत्य प्रश्नः । समासमाश्रित्य समाधानम् ॥

**संयोगे गुरु ॥ १।४।११ ॥**

**कथम्**

'अहृत धनेश्वरस्य युधि यस्समेतमायो धनं
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम् ।
विभवमदेन निह्नुतह्रियातिमात्रसम्पन्नकं
व्यथयति सत्पथादधिगताथवेह सम्पन्न कम्' ॥

इति दशमसर्गे भट्टिः । तृतीयपादे ह्रिशब्दे परतो नवमस्य तशब्दस्य गुरुत्वाच्छन्दोभङ्गात् ? उच्यते । निह्नुततयेति पाठः कर्तव्यः ॥ कथं भोक्ता, प्रकृतिप्रत्ययावयवसंयोगे गुरुत्वाद् गुणाभावाद् ? उच्यते । 'त्रसिगृधिधृषिक्षिपेः क्नुः' (३।२।१४०) इति क्नोः कित्त्वं धृष्णुः जिष्णुरित्यादौ गुणाभावार्थं कृतं ज्ञापयति नैवंविधगुरुत्वाद्गुणाभावः, यतो गुणप्रसङ्गे कित्त्वं गुणाभावार्थम् । न च ककारस्तत्र श्रवणार्थः, नित्यशब्ददर्शनाद् । व्याप्तेश्च । तदुक्तम्——

क्नुसनोर्यत् कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे ।

अपरं बहुत्वान्नोक्तम् ॥ कथं पुनः 'प्राप्तनाभिह्लदमज्जनमाशु प्रस्थितं निवसनग्रहणाय' इति माघः, ह्लदशब्दे परतो गुरुत्वाच्छन्दो-भङ्गात् ? उच्यते । प्राप्तनाभिनद इति पाठः साधुः । छन्दश्शास्त्रे 'प्रह्ले वा' इति सूत्रेण विकल्पेन गुरुत्वादिति कश्चित् ॥

नित्यशब्ददर्शनादिति । नित्यः शब्द इति मत्वा प्रक्रियाप्रदर्शनार्थे प्रवृत्ते शब्दानुशासनेऽस्मिन् तावदेव वक्तव्यं यावता विना न प्रक्रियानिर्वाह इति ककार-स्यापि प्रक्रियानिर्वाहकत्वमवश्यमङ्गीकार्यम्, नानर्थकत्वं श्रवणार्थतयेति भावः । ननु इटोदित्यादौ तथा दृश्यत इत्यत आह—व्याप्तेश्चेति । लघूपधात् लघूपधस्य च वा विहिते ये सार्वधातुकार्धधातुके तयोरङ्गस्य गुण इत्यर्थः सूत्रस्य भाष्ये दृश्यते ।

तत्र भेदनमित्यादौ साम्प्रतिकलघुसम्भवेऽपि भेत्ता, भोक्तेत्यादौ लघूपधत्वनिर्वाहाय विधानं विशेषणीयमेव, येन हलादावजादौ च गुणः सिद्धः शास्त्रस्य व्यापकत्वं प्रमाणयेदिति तात्पर्यम्। अत्र 'पुगन्तलघूपधस्य च' इति सूत्रस्यं भाष्यं प्रमाणयति—क्नुसनोरिति।

साधुरिति। मल्लिनाथेनायमेव पाठः स्वीकृतः। कश्चिदिति। भोजदेवस्त्वाह—

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्।
न च्छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः॥ इति॥

## यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्॥ १।४।१३॥

कथं 'णु स्तवने', नुतेस्तुदादित्वाच्छप्रत्यये कृते नुवतीति। तदादिग्रहणाद्विकरणान्तस्याङ्गत्वे सार्वधातुकाश्रयगुणप्रसङ्गात्? उच्यते। अन्तरङ्गत्वादुवङ् विकरणाश्रयः॥

सार्वधातुकेति। नु इत्यस्याङ्गत्वं तु व्यपदेशिवद्भावेन बोध्यम्। अन्तरङ्गत्वादिति। अन्तर्भूतनिमित्तकत्वेनेत्यर्थः॥

## स्वादिष्वसर्वनामस्थाने॥ १।४।१७॥

कथं राजेति, असर्वनामस्थाने इति निषेधात्? उच्यते। 'न ङिसम्बुद्ध्योः' (८।२।८) इति ज्ञापकात् 'सुप्तिङन्तं पदम्' (१।४।१४) इति प्रतिप्रसूयते न 'स्वादिषु' इति रक्षितः॥

असर्वनामस्थान इति प्रसज्यप्रतिषेधमाश्रित्य प्रश्नः—कथमिति। प्रतिषेधादिति। सर्वनामस्थानपरत्वं च प्रत्ययलक्षणेन बोध्यम्। असर्वनामस्थान इति पर्युदासे सर्वनामस्थानेऽस्य व्यापाराभावेन पदसंज्ञा प्रत्ययलक्षणेन सुबन्तत्वमाश्रित्य सुलभा, तथापि प्रसज्यप्रतिषेधमाश्रित्यापि परिहरति—न ङीति। प्राप्तौ सत्यां प्रतिषेधः सार्थकः, प्राप्तिश्च पदत्वे सत्येवेति ज्ञापकत्वमुपपन्नम्। अत एव च ज्ञापकादप्रत्यय इति प्रातिपदिकत्वनिषेधोऽपि नेति स्पष्टं वृत्त्यादौ सर्वस्य द्वे इत्यत्र कैयटेऽपि। तथा च सुप्तिङन्तमिति पदत्वेन नलोप उपपन्नः। अनन्तरस्येति न्यायेन योगविभागेन च समाधानमपि भाष्य उक्तम्॥

## बहुषु बहुवचनम्॥ १।४।२१॥

अथ कथं दाराः? अध्यारोपितबहुत्वाद् बहुवचनम्, यथा 'वृद्भ्यस्स्यसनोः' (१।३।९२) 'द्युद्भ्यो लुङि' (१।३।९१) इत्यादौ। एकशेष एवेत्यन्यः॥

कथम्—

वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥

इति । एकत्वे उपास्त इति युक्तम् ? उच्यते । 'अस गतिदीप्त्यादानेषु' इत्यस्य भौवादिकस्योभयपदिनो रूपम् । गच्छति गृह्णीत इति वार्थः । विकरणकार्यमनित्यमिति वा शपो लुगभावे रूपम् ॥ कथं 'येन यथा भवितव्यं न ते भवति चान्यथा' इति ? उच्यते । तेवृधातोः क्विपि सम्बोधने ते इति रूपम् । तदिति वा पाठः कर्तव्यः ॥ कथम् 'अन्धश्च पङ्गुश्च द्वौ ते वनं प्रविष्टौ' इत्यष्टधातुः ? उच्यते । 'तेवृ देवृ देवने' ल्युटि च तेवनं क्रीडां प्रविष्टावित्यर्थः । अथवास्मादेव धातोः सम्पदादित्वात् क्विपि वलि लोपः । तेः क्रीडा । तदर्थं वनं क्रीडावनमित्यर्थः ॥ [[1]अन्धनीर्वहणमिति षष्ठीसमासः । तत् करोति पङ्गुः यतौ वर्त्म दर्शयति । नयतीति नीः । 'सत्सूद्विष' (३-२-६१) इत्यादिना क्विप् । नपुंसकह्रस्वत्वम् । अन्धनी चक्षुषी यस्य सोऽन्धनीः । तावचक्षुर्वाहनं करोतीत्यर्थः[1] ?] कथं 'विचुक्रुशुर्भूमिपतेर्महिष्यः' इति भट्टिः, यतो महिषी कृताभिषेका । सा चैकैवोच्यते ? 'जात्याख्यायामेकस्मिन्' (१।१।५८) इति बहुवचनम् । उपचाराद्वावरोधा उच्यन्ते ॥ कथं 'वहन्ति स्त्री धान्यमुलूखलेन' ? उच्यते । अवपूर्वस्य हन्तेः 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपे रूपम् ॥ कथं 'कथं दूतेषु कल्याणं यदि बुद्धो न तिष्ठति' । दूतेषु इत्ययुक्तं बुद्ध इत्येकवचनात् ? उच्यते । दूत इषुरिव दूतेषु । 'उपमितम्०' (२।१।५६) इत्यादिना समासः । दूतेषोः कल्याणमिति षष्ठीसमासः । सुकल्याणमिति वा पाठः ॥

अध्यारोपितेत्यादि । अवयवबहुत्वस्यावयविन्यारोप इत्यर्थः । यद्वाऽवयवाऽवयविनारेभेदविवक्षया आकृत्याधारगतबहुत्वस्यैव बहुवचनवाच्यत्वम् । 'अन्धनी'...

१-१. अयमंशो भ्रष्टः ।

करोतीत्यर्थः' इति ग्रन्था खण्डितः। अतोऽस्पष्टार्थः। अवरोधा इति। तथा च 'महिष्यः पत्न्यः' इति जयमङ्गला॥

## ध्रुवमपायेऽपादानम् ॥ १।४।२४ ॥

कथं 'शब्दे सोऽपि वियुज्यते' इति लक्षणम्? 'अहो चित्रप्रयोगस्थितिः' इति भागवृत्तिः। तथा 'प्रामाद्यद् गुणिनां हिते' इति भट्टिः। 'जुगुप्साविरामप्रमादार्थानाम्' इत्यपादानात्? उच्यते। 'एवे चानियोगे' इतिवत् प्रायिकमिदम्। एकमुनिपक्षे तु बौद्धापादानत्वेन प्रत्याख्यातम्। तच्च क्वचिदेव॥

प्रायिकमिति। एतच्च न क्वचिद् दृश्यते। अतो हिते विषयत्वमात्रविवक्षयैव समाधेयम्। असतश्च विवक्षा सतोऽप्यविवक्षा कारकाधिकारे विशेषेण। प्रत्याख्यातमिति। प्रमादपूर्वकनिवृत्त्यर्थत्वं धातोरङ्गीकृत्य पूर्वसूत्रेणैवापादनत्वसिद्धेरिति भावः। क्वचिदेवेति। यत्र तथा विवक्षा तत्रैव, नान्यत्रेत्यर्थः। तथा च भट्टिः— 'स्वहिताच्च प्रमाद्यति' (१८।८) इति॥

## वारणार्थानामीप्सितः ॥ १।४।२७ ॥

कथम्—

'यदीच्छति जगत्सर्वं वशीकर्तुमयत्नतः।
परापवादसस्येषु चरन्ती गौर्निवार्यताम्॥'

उच्यते। ध्रौव्येणाविवक्षितत्वात्॥ कथं कूपादन्धं वारयति, अग्नेर्माणवकं वारयति, अनीप्सितत्वात्? उच्यते। 'अन्धस्य गतेनेप्सितः कूपः, माणवकस्य ज्योतीरूपोऽर्थः स्पृहणीयत्वेनेप्सितः' इति रक्षितः॥

ध्रौव्येणाविवक्षितत्वादिति। सस्यस्येति शेषः। चरणक्रियाधिकरणत्वेन विवक्षितत्वादित्यपि बोध्यम्। एतच्च 'ध्रुवमपायेऽपादानम्' इत्यनेनैवास्य सूत्रस्य गतार्थत्वमभिप्रेत्योक्तम्। यद्वेहापीप्सिताद्विभागो वास्तवो विवक्षितो वेत्यस्ति ध्रुवत्वमित्यभिप्रायकमिदम्। अनीप्सितत्वादिति। वारणीयस्येति शेषः। रक्षित इति। स्पष्टं चैतद् भाष्ये। अन्धादेश्च कर्मसंज्ञा बाधिकेत्यतो न तस्यापादानत्वमित्यपि बोध्यम्॥

## जनिकर्तुः प्रकृतिः ।। १।४।३० ।।

जातं वंशे भुवनविदिते पुष्करावर्त्तकानाम्' इति मेघः कथम् ? उच्यते । वंश्यं प्रकृतिर्न तु वंश एव ।।

वंश एवेति । अतो न वंशस्यापादानत्वम् ।।

## स्पृहेरीप्सितः ।। १।४।३६ ।।

कथं 'स्पृहणीया विभूतिः', स्पृहणीया विभूतये इति स्यात् । पुष्पाणि स्पृहयतीति कर्मत्वम्, अनेन सम्प्रदानत्वप्रसङ्गात् ? उच्यते । 'ईप्सिततमत्वविवक्षायां कर्मसंज्ञैव परत्वाद्' इति न्यासः ।।

ईप्सिततमत्वेति । फलाश्रयत्वविवक्षायामित्यर्थः । हेलाराजादयस्तु कर्मसंज्ञायाः शेषषठ्याश्चेदं बाधकं मन्यन्ते । तन्मते पुष्पाणीत्यादावध्याहृतदर्शनादिक्रिया-निमित्तमेव कर्मत्वमुपपाद्यम् । शेषत्वविवक्षायान्तु षष्ठ्येवेति हरदत्तादयः ।।

## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।। १।४।३७ ।।

कथम् ऊस्मान्द्वेष्टि ? उच्यते । 'अप्रीतौ हि द्विषिं स्मरन्ति' इति न्यासः ।। कथं तर्हि 'द्वेष्टि प्रायो गुणेभ्यो यन्न च स्निह्यति कस्यचित्' इति भट्टिः ? उच्यते । असूयार्थस्य विवक्षितत्वात्[1] ।। कथं 'तां प्रति क्रुद्धो नृपः' ? उच्यते । यं प्रति कोप इति निर्देशात् पूर्वविप्रतिषेधेन चतुर्थीं बाधित्वा कर्मप्रवचनीयाद्विभक्तिर्द्वितीया । एवं 'वृक्षं वृक्षं प्रति कुसुमानि सन्ति' इति । 'अर्थमर्थं प्रति शब्दनिवेशः' इत्याधारसप्तमीं बाधित्वा द्वितोयेति 'साधुनिपुणाभ्याम्' (२।३।४३) इत्यत्र रक्षितः ।।

अप्रीताविति । प्रीत्यभावोऽनभिनन्दनमित्यर्थः । तथाच द्विषेरक्रोधार्थत्वान्न सम्प्रदानत्वमिति स्पष्टं कैयटादौ । सूत्रे च क्रोधाद्यर्थानामेव ग्रहणम् । नान्येषाम्, विशिष्य निर्देशात् । प्ररूढकोपस्यैव क्रोधत्वेन कुपियोगे नैतत् प्रवर्तते । एतच्च 'नह्यकुपितः क्रुध्यति' इति भाष्योक्त्या स्पष्टम् । तथा च तद्योगे दृश्यमाना चतुर्थी 'क्रियया यमभिप्रैति०' इतिरीत्या समाधेया । अविवक्षितत्वादिति । अत एवानेनैव सम्प्रदानत्वमुक्तं जयमङ्गलायाम् । वस्तुतोऽत्र 'क्रियार्थोपपदस्य०' इति चतुर्थी वाच्या ।।

---

१. 'अविवक्षितत्वात्' इति मुद्रितः पाठः ।

**उपान्वध्याङ्वसः ॥ १।४।४८ ॥**

कथम् 'उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति', तथा 'एकादशीमुपवसन्ति निराबुभुक्षाः संवत्सरं च कुसुमैर्हरिमर्चयन्ति'। 'वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः' इति वचदात् कर्मत्वाभावात्? उच्यते। 'कालाध्वनोरत्यन्तसंयोगे' (२।३।५) इति द्वितीया॥ यद्येवं कथम् 'एकादशीं न भुञ्जीत', 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति? उच्यते। 'उपपदविभक्तेः' इत्यादेरन्तरङ्गफलत्वात् सामान्यचिन्तायां पूर्वविप्रतिषेधेन वोपपदविभक्तिः॥

अश्यर्थस्येति। अर्थशब्दो निवृत्तिवचनः, 'मशकार्थो धूमः' इत्यादाविव। तथा च 'भोजननिवृत्तिसम्बन्धिनो वसेः.....' इति वार्त्तिकार्थः। बलीयसीति। तथा चाधिकरणे सप्तमी न्याय्येति प्रश्नः। अन्तरङ्गफलत्वादिति। एतच्च 'अन्तराऽन्तरेण युक्ते' इतिसूत्रस्थकैयटानुरोधेन। तथा चात्यन्तसंयोगे निरवकाशत्वाद्द्वितीयायाः सप्तमीबाधकत्वमिति फलितार्थः। समान्यचिन्तायामिति। आधारत्वरूपविवक्षायामिति गणपतिशास्त्रिणः। अत्यन्तसंयोगरूपविशेषाविवक्षायाम् इति वयम्। उपपदविभक्तिः द्वितीया। विप्रतिषेधशब्दस्येष्टवाचित्वादेव 'शिवरात्रौ जागृयात्' इत्यादौ सप्तमी। एकादशीशब्दादपि सप्तम्येवाधिकरणत्वमात्रविवक्षायाम्। न्यासकृदादयस्तु 'परिक्रयणे सम्प्रदानम्०' इत्यतो मण्डूकप्लुत्याऽन्यतरस्यांग्रहणमनुवर्त्य व्यवस्थितविभाषामभिप्रयन्ति। तथा च क्वचिदभुक्त्यर्थयोगेऽपि द्वितीया भवत्येवेति पूर्वोक्तप्रयोगनिर्वाहः॥

**कर्तुरीप्सिततमं कर्म ॥ १।४।४९ ॥**

कथम् ओदनं पचति, वस्त्रं वयति। अनयोः पाकवानायोगात् कर्मत्वाप्रसङ्गात्? उच्यते। 'तादर्थ्यात् ताच्छब्द्येनौदनवस्त्रशब्दौ तण्डुले तन्तौ च वर्त्तेते' इति रक्षितः॥

ताच्छब्द्येनेति। ओदनार्थास्तण्डुला ओदनपदप्रतिपाद्या इति भावः। एवमग्रेऽपि। अत्र भाविसंज्ञासमाश्रयणेन वेत्यपि बोध्यम्॥

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ॥ १।४।५२ ॥**

कथं गमयति ग्रामं विप्रमिति। अणि कर्तुः कर्मत्वे तत्क्रियाप्यस्य ग्रामस्य कर्मत्वं न स्यात्, कर्मसंज्ञाविधौ कर्तृग्रहणात्? उच्यते।

'तत् कर्तृग्रहणं स्वतन्त्रोपलक्षणं कर्मत्वेऽपि स्वव्यापारे स्वातन्त्र्यस्यानपगतत्वाद्' इति रक्षितः ।। कथम् 'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक' इति कुमारः, ग्रहेरगत्यर्थत्वात् ? उच्यते । देवदेवमयाचिताद्रिः सुतां ग्राहयितुमलमत्यर्थं न शशाकेत्यत्र [1] देवदेवेनेति प्रकृतत्वात् परिणामात् । रलयोरेकत्वस्मरणादरमिति । 'अकथितं च' (१।४।५१) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद् अत्र कर्मत्वमित्यन्यः । अपशब्दोऽयमित्यनुन्यासः । चकाराद् 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' इति, 'देवदत्तेन यज्ञदत्तः शतं दापितः' इत्यपि साधुः ।[2]

पृतनाषाङ्दिषो धूर्षु युक्तान् यानस्य वाजिनः ।
यायूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयद् ।।

इति भट्टिः । अत्र मुचेर्गुणभूतगत्यर्थत्वात् कर्मत्वम् । गुणभूता च गतिः कर्मसंज्ञानिमित्तं, 'नीवह्योः प्रतिषेधो वक्तव्यः इति ज्ञापकात् । 'प्रापणं गुणभूतगत्यर्थम्' इति रक्षितः । एवञ्च 'मुक्ताजालं चिरपरिचितं त्याजितं दैवगत्या' इति मेघः । त्यागस्य गत्युपसर्जनीभूतत्वात् । तथा हि 'तं लम्भयति विनिवर्तनाद्धीरः' इति प्रयोगः । (मुख?) लम्भनस्य प्राप्तेर्गत्युपसर्जनीभूतत्वात् ।। यद्येवं [कथम्]—

'सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः ।।

इति माघः ? उच्यते । लम्भयन् योजयन्नित्यर्थः ।। अथ कथं

विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः ।
स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः ।।

इति कुमारः । आक्रमणस्य गुणभूतगत्यर्थत्वात् ? उच्यते । 'विधिप्रयुक्तसत्कारान् शुद्धान्तं शुद्धकर्मणः' इति द्वितीयान्तपाठः कर्त्तव्यः । अथवा 'ज्ञापकसिद्धं न सर्वत्र' इति गुणभूतगत्यर्थेन क्वचिदेव कर्मत्वम् ।।

---

१. 'शशाकेत्यर्थः' इति मुद्रितः पाठः । २. 'साधवः' इति मुद्रितम् ।

तदिति। 'कर्तुरीप्सिततमम्०' इतिसूत्रस्थमित्यर्थः। स्वतन्त्रेति। स्वातन्त्र्यं च प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयत्वम्। एतच्च प्रयोजकसन्निधानेपि प्रयोज्यस्यास्त्येव। णिचि कर्मत्वं तु तस्य प्रयोजककर्तृव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वेनेति विशेषः। अत्र च संज्ञान्तरानुपहितस्वतन्त्रे प्रसिद्धस्य कर्तृपदस्य संज्ञान्तरोपहितानुपहितसाधारणे प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रये लक्षणैवेत्युपलक्षणपदेनोक्तम्। हरदत्तादयस्तु—'णिजुत्पत्तेः प्रागेव विप्रेण कर्त्राऽऽनुमिष्यमाणत्वादुपपन्नं ग्रामस्य कर्मत्वम्' इति समादधति। अधिकमन्यत्र। अयाचितेति। कृदन्तेन नञ्समासोऽभिप्रेतः। चकारस्येति। एतच्च—

'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च' इतिभाष्यपद्यस्थचकारविषये प्रसिद्धं कैयटादौ। माधवमतेन सुधाकरस्याप्येतदेव मतम्। शेखरे तु जिकर्षमन्थमुषदण्डपचधातूनामकथितकर्मत्वं तारेर्गत्यर्थत्वम् दीपेरकर्मत्वम् बुद्धयर्थत्वं वा दापित्याजिमोचीनां च गत्यादिसूत्रउपसंख्यानमेव चकारेण सुधाकरादिसम्मतमित्युक्तम्। न्यासकृतस्तु 'ब्रुविशासिगुणेन च' इत्यत्रापि चकारोऽनुक्तसमुच्चयार्थं इत्याहुः। आदानार्थकस्य ग्रहेर्द्विकर्मकत्वे महान् विवादो माधवनागेशादिग्रन्थेभ्योऽवसेयः। बुध्यर्थकस्य तस्य गतिबुद्धि०सूत्रेणाणि कर्तुर्देवदेवादेः कर्मत्वमितिहरदत्तादयः। श्रीकरादयोऽप्येवम्, जयमङ्गला च। चकारादिति पूर्वोक्तचकारादित्यर्थः। ममन्थ इति। अकथितकर्मत्वमम्बुनिधेरित्यर्थः। गौणे कर्मणि चाभिहितत्वम्। दापित इति। अत्र सुधाकरादिमतेन गतिबुद्धिसूत्रेण कर्मत्वम्। पूतनाषाडिति। अत्रायुक्तत्वमुद्भाव्य 'पुरुहूतद्विषः' इति पाठो जयमङ्गलायामुक्तः। अत्रापि दापिवत् समाधानं सुधाकरादिसम्मतम्। ग्रन्थकृत्त्वन्यथैव दाप्यादौ गतिबुद्धिसूत्रविषयत्वमुपपादयति—गुणभूतेति। नीवह्योरिति। अत्र नियः प्रतिषेधो ज्ञापकः। उत्तरदेशसंयोगानुकूलप्रयोज्यकर्तृनिष्ठव्यापारानुकूलव्यापारो नयत्यर्थः। तत्र गतेरुपसर्जनत्वेपि प्राप्तिरिति निषेधः सार्थकः। वहेस्तु न गत्युपसर्जनं प्रापणमर्थोऽपि तु देशान्तरप्राप्त्युपसर्जनं प्रापणमेव, गतिस्तु देशान्तरप्राप्त्यन्यथानुपपत्त्या कल्प्यमाना, प्राप्तिस्तु सम्बन्धमात्रम्, देशान्तरस्थेऽपि भूरनेन प्राप्तेति व्यवहारात्। अत एव 'न वहिर्गत्यर्थः' इति 'न गतिहिंसार्थेभ्यः' इत्यत्र भाष्य उक्तम्। एवं प्रापयतेरपि न गत्युपसर्जनं प्रापणमर्थं इति बोध्यम्। प्रापणमिति। गुणभूतगत्यर्थं प्रापणमित्यन्वयः। नयतेरर्थं इति शेषः। केचित्तु वहेरपि गत्युपसर्जनं प्रापणमर्थं वदन्ति, तद्भाष्यविरुद्धम्। नवेति विभाषा इति सूत्रस्थभाष्यं प्रमाणयन्तोऽपरे तु गतिबुद्धिसूत्रे यथा कथञ्चिद्गत्यर्थानामग्रहणमाहुः। तेषाञ्च 'गवा पयस्त्याजयति', 'पौरवेण गां दिदापयिषते' इत्यादि प्रयुञ्जानः कैयटोऽप्यनुकूलः। अत एतन्मते दापित्याजिमोचीनां द्विकर्मकत्वं नेष्टम्। अत एव 'दण्ड्यो दाप्यश्च तद्धनम्' इत्यादि प्रयोगाआगमत्वाद्रुपपादनीयाः। संजग्राह

चैतत्सर्वं वामनोऽपि काव्यालङ्कारे—'लभेर्गत्यर्थत्वाण्णिच्यणौ कर्तुः कर्मत्वाऽकर्मत्वे' इति। अधिकमन्यतोऽनुसन्धेयम्। योजयन्निति। तथा चात्र सम्बन्धमात्रं लभेरर्थो नोत्तरदेशसंयोगात्मकगत्युपसर्जनमिति भावः। क्वचिदेवेति। एतच्च माघपद्येपि योज्यम्॥

## ऊर्यादिच्विडाचश्च ॥ १।४।६१ ॥

कथं 'वारुणीमदविशङ्कमयाविश्चक्षुषोऽभवदसाविवः रागः' इति माघः। आविश्शब्दस्योर्यादित्वाद्गतित्वे 'ते प्राग्धातोः' (१।४।८०) इति भवतेः प्राग्विधानात्? उच्यते। 'अन्तश्चक्षुषोऽभवद्' इति पाठः कर्त्तव्यः। अथवा 'गणकार्यमनित्यम्' इति सामान्येनाश्रयणीयम्, 'ध्या चिन्तायाम्' इति दिवादौ पठितव्ये 'ध्यै चिन्तायाम्' इति ज्ञापकात्॥ कथं 'पुरो रामस्य जुहवांचकार ज्वलने वपुः'। इति भट्टिः। अनेन गतित्वे धातोः प्राक् तत्प्रसङ्गात्? उच्यते। क्रियायोग इत्यनुवृत्तेः क्रियायोगे गतित्वम्। न चात्र क्रियायोगः। 'क्रियायोग एवेत्यधारणम्' इति पुरुषोत्तमः। एवञ्च 'तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतोः' इति मेघः। पुरोऽलकायाः कौतुकाधानहेतोरिति वात्र केचिद्योजयन्ति। अथवा 'ते प्राग् धातोः' इति संज्ञानियमः—येषां गत्यादिसंज्ञा विधेयास्ते धातोः प्राक्प्रयुज्यमानाः सन्तः संज्ञां लभन्त इति एवञ्च प्रयोगस्यानियतत्वाद् यथादर्शनं व्यवहितः प्रयोगः॥

ज्ञापकादिति। एतच्च पूर्वं विवृतम्। वस्तुतस्तु कवेर्निरङ्कुशत्वमेवैतादृशे प्रयोगे हेतुः। अत्र व्यवहितः प्रयोगः प्रमादज इति भागवृत्तिकारोप्याहेत्युक्तमुणादिवृत्तौ। वर्धमानोऽपि प्राह—'प्रमादज एव, नास्त्यभ्युद्धारः' इति॥

## विभाषा कृञि ॥ १।४।७२ ॥

कथं 'भृत्यं तिरस्कृत्य गतः' इति। 'तिरोऽन्तर्धौ' (१।४।७१) इत्यनुवृत्तेरत्रान्तर्ध्यभावात्? उच्यते। व्यवस्थितविभाषाविज्ञानात्॥

भृत्यमिति। अत्र नित्यमित्युचितम्। यद्वा भृत्यमित्येव पाठः। तिरस्कृत्येत्यस्य पार्श्वतः कृत्वोपेक्ष्य वेत्यर्थः। तथा चान्तर्ध्यभावादुपपद्यते प्रश्नः। तिरस्कृत्येति 'तिरसोऽन्यतरस्याम्' इति सत्वविकल्पः॥

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।। १।४।१०५ ।।**

कथं परमत्वं पठसि, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति प्रतिषेधादिति ? ननु तदन्तत्वं स्वीक्रियते । कथमतित्वं पचतीति ? 'स्वं रूपम्' इत्यत्र रूपग्रहणाद्रूपवदर्थोऽप्यङ्गीक्रियत इति ज्ञापितम् । तेनार्थान्तरवृत्तित्वात् प्रथमपुरुष एव । अत्वं त्वं सम्पद्यते त्वद्भवतीत्यत्र प्रथमपुरुष एव, युष्मदर्थस्य गौणत्वाद्, यथा "अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमा इत्यत्र 'आन्महतः' ( ६।३।४६ ) इत्यादिना नात्वं भवति" इति न्यासः । भवान् यातीत्यत्र तु सत्यपि युष्मदर्थे रूपाभावान्न भवति । अर्थवतो रूपस्य ग्रहणात् । न चात्र रूपस्य गम्यमानत्वम् । भवच्छब्देनार्थस्योक्तत्वात् । त्वत्तरो यासीत्यत्र तरपः स्वार्थिकत्वाद्युष्मद्युपपद इति मध्यमपुरुषः । 'त्वत्कल्पो देवदत्तो याति' इति रक्षितः ।।

परमत्वमिति । युष्मदीति विशिष्टरूपपरिग्रहादस्य च शब्दान्तरत्वात् प्रश्नः । ग्रहणवतेतिपरिभाषायाः प्रत्ययविधिविषयकत्वादत्र प्रवृत्त्यभावमनित्यत्वं चासमासे निष्कादिभ्यः इतिसूत्रभाष्यस्थमाश्रित्य तदन्तविधिमाह—नन्विति । तदन्तविधौ दोषमाह—कथमिति । ज्ञापितमिति । एतच्च 'समानाधिकरणे' इति वचनादपि भाष्ये साधितम् । अर्थान्तरेति । प्रादिसमासेन बहुव्रीहिणा वा निष्पन्नेऽत्रातिक्रमितुरेव प्राधान्येन बोधान्न मध्यम इति भावः । पूजार्थकेनातिशब्देन तत्पुरुषे तु भवत्येव मध्यमः—'अतित्वं पचसि' इति । स्पष्टं चेदं माधवादिग्रन्थेषु । प्रकृतिविकृत्योरभेदविवक्षायां च्विः; तत्र प्रकृत्याश्रयः प्रथमो विकृत्याश्रयो मध्यमो वोचित इत्यत्र निर्णयमाह–अत्वमित्यादिना । गौणत्वादिति । स्पष्टं चैतद् भाष्यादौ । न्यास इति । वस्तुतस्तु वृत्तावेवेदं तत्र सूत्रे पठितम् । सत्यपि युष्मदर्थे इति । हरदत्तादयस्तु—अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः, भवदर्थस्तु लिङ्गवान् सम्बोधनाऽसम्बोधनविषय इति द्वयोरर्थभेदं मन्यन्ते । 'यदा त्वस्मात्सम्बोधनविभक्तिस्तदा युष्मदर्थयोगान्मध्यमो भवति—'हे भवन् ? पचसि' इति माधवः । स्वार्थिकत्वादिति । अतिशायनप्रकरण एव 'तादी घः' इति 'पितौ घः' इति लघुन्यासे कर्त्तव्ये तदुपेक्ष्यात्र संज्ञाप्रकरणे 'तरप्तमपौ घः' ( १।१।२२ ) इति गुरुभूतन्यासकरणेन स्वार्थेऽपि तरब् भवतीति ज्ञापितमिति कैयटहरदत्ताभिः स्पष्टीकृतत्वादिदमुक्तम् । कौस्तुभे तु सामान्यापेक्षमस्य ज्ञापकत्वमङ्गीकृत्यातिशायनिकप्रत्ययस्यापि स्वार्थिकत्वमुक्तम् । तथा च प्राधान्याद् युष्मदर्थस्य युक्तो मध्यम

इत्याशयः । त्वत्कल्प इति । अत्र युष्मदर्थभिन्नस्य ( देवदत्तस्य ) प्राधान्यात् प्रथमः पुरुषो युक्तः । यदा तु कालान्तरदृष्टगुणेषदसमाप्तिविशिष्टस्वार्थं एव प्रत्ययस्तदा तु युष्मदर्थस्यैव त्वत्कल्पशब्देनाभिधानान्मध्यम एव—त्वत्कल्पः पचसि, त्वद्रूपः पचसीति स्पष्टं भाष्ये ।सर्व एष विचार उत्तमपुरुषविधिविषयेऽपि समानः ॥

**अस्मद्युत्तमः ॥१।४.१०६॥**

कथमहमिव करोति, उत्तमपुरुष एव करोतेर्युक्तः ? उच्यते । 'गौणत्वादस्मदर्थस्य नोत्तमपुरुषः' इति रक्षितः ॥

**इति शरणदेवविरचितदुर्घटवृत्तौ प्रथमाध्याये चतुर्थः पादः ॥**

गौणत्वादिति । उपमेयस्य युष्मदर्थभिन्नस्य कर्तृत्वेनावगमाद् गौणत्वं युष्मदर्थस्य ज्ञेयम् ॥

इति श्रीनारायणमिश्रविरचितायां दुर्घटवृत्तिविवृतौ प्रथमाध्यायस्य चतुर्थः पादः ॥

समाप्तश्चायं प्रथमाध्यायः ॥



## अथ द्वितीयाध्याये प्रथमः पादः ।

### समर्थः पदविधिः ।। २।१।१ ।।

**कथम्** असूर्यपश्या राजदाराः, अश्राद्धभोजीत्यादौ नञ्समासः, क्रियया नञ्सम्बन्धादसामर्थ्यात् ? **उच्यते** । गमकत्वात् । 'गमकात् समासो वेदितव्यः' इति भाष्यम् । 'अकर्तरि च कारके' ( ३।३।१९ ) इत्यत्र कारकग्रहणात् प्रसज्यप्रतिषेधेऽपि नञ्समासः । पर्युदासे हि नञिवयुक्तन्यायेनाकर्तरीत्येव कारकसिद्धौ कारकग्रहणं व्यर्थं स्यादित्यन्यः । 'सुट् स्त्रीपुंसयोरिति वक्तव्ये 'सुडनपुंसकस्य' इति ज्ञापकम्' इति भागवृत्तिः । "अङ्गयुक्तं तिङाकांक्षम्'(८।२।९६) इति युक्तग्रहणाज्ज्ञापकात् समर्थपरिभाषाया अनित्यत्वेऽसमर्थेऽपि पदविधिः"इति रक्षितः । एवं च वयं गच्छामस्त्वमागमिष्यसीत्यसमर्थेऽपि विसर्जनीयादिकम् ।।

असूर्यम्पश्येति । अत्र सूर्यकर्मिकया दृशिक्रियया नञः सम्बन्धो न सूर्येणेति भवत्यसामर्थ्यम् । ततश्चात्र प्रसज्यप्रतिषेधः, तत्र च सर्वत्रैवासामर्थ्यम् इत्याशयः । गमकत्वादिति । शिष्टप्रयुक्तत्वाद् गमकत्वमर्थबोधकत्वमिष्टम् । अतो यदप्रयुक्तं न तत्साधु । यथा – 'अकिञ्चित्कुर्वाणम्' इत्यादि स्पष्टं समर्थसूत्रे भाष्ये । तदर्थतः संगृह्णाति—भाष्यमिति । कारकसिद्धाविति । अकर्त्तरीति कर्त्तृप्रतिषेधेन तद्भिन्नतत्सदृशस्य कारकस्य स्वत एव लाभ इत्यर्थः । व्यर्थं स्यादिति । यद्यपि भाष्ये पर्युदासमाश्रित्य कारकग्रहणं प्रत्याख्यातमेव तथापि वृत्त्यादिमतेनेदमुक्तम् । अत एवान्य इत्यनेनारुचिः सूचिता । भागवृत्तिरिति । सर्वं चैतत् कैयटादौ स्पष्टम् । असमर्थेऽपीति । पदविधिशब्दस्य कर्मसाधनत्वेन सत्वादिविधेरपि तथात्वादित्याशयः ।।

### सह सुपा ।। २।१।४ ।।

**कथं** 'साम्प्रतिकाभावे भूतपूर्वंगतिः' इत्यत्र भूतपूर्वशब्दः, समासलक्षणाभावात् ? **उच्यते** । सुप्सुपेति योगविभागात् । 'भूतपूर्वे चरड्' ( ५।३।५३ ) इति प्रथमः । एवं दृष्टपूर्वश्रुतपूर्वविप्रतिषेधाध्वगन्तव्यादयः ।।

लक्षणमत्र सूत्रमभिप्रेतम् । प्रथम इति । प्रयोग इति शेषः, पूर्वनिपात इत्यर्थः । योगविभागश्च भाष्य उक्त एव ॥

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ।**

**॥ २।१।६ ॥**

**कथं** प्रत्यक्षः शब्दः, अक्षमक्षं प्रतीति वीप्सायां यथार्थेऽव्ययीभावात् ? **उच्यते** । प्रतिगतोऽक्षमिति विगृह्य 'प्रादयो गताद्यर्थे द्वितीयया' इति समासः । 'न द्विगुप्राप्तापन्नालम्' इत्यादिना परवल्लिङ्गतानिषेधः ॥ [कथम्] **अर्थमर्थं** प्रति प्रत्यक्षमिति वाक्यम्, वीप्सायां नित्यसमासात् ? **उच्यते** । "'लक्षणेत्थंभूत०' ( १।४।९ ) इत्यादिना वीप्सायां कर्मप्रवचनीयविभक्तिरपि द्वितीया श्रूयत इति वाक्यम्" इति न्यासः ॥ **कथमेकैकं** प्रति प्रत्येकमिति ? **उच्यते** । 'एकं बहुव्रीहिवत्' ( ८।१।९ ) इत्यतिदेशात् 'सुपो धातु' ( २।४।७१ ) इति लोपः ॥ **कथमुपरि** शिरसो घटं धारयतीति, विभक्त्यर्थेऽव्ययमिति समासात् ? उच्यते । समीपादिभिरतद्धितान्तैः साहचर्यात् तद्धितान्तस्य विभक्त्यर्थेऽसमासात् ॥ कथं समया ग्राममिति 'अभितःपरितःसमयानिकषा' इति वार्तिकोदाहरणम् ? उच्यते । 'द्वितीयाविधानसमर्थ्यान्नाव्ययीभावः' इति रक्षितः । ननु शोभनं समया ग्राममिति सविशेषणस्य समासाभावे द्वितीयाविधानं कृतार्थम् ? उच्यते । व्यक्तौ सामर्थ्यं वाच्यम् ॥ कथं 'पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः' इति भट्टिः, विभक्त्यर्थे यदव्ययमिति समासात् ? उच्यते । व्यृद्धिशब्दस्याल्पाच्तरस्यापूर्वनिपातेनास्यानित्यत्वज्ञापनात् । समीपादिवृत्तिनाव्ययेनातद्धितान्तेन साहचर्यादतद्धितान्तमेवाव्ययं विभक्त्यर्थे विद्यमानं गृह्यते । अथ गमकत्वाद्वेत्युभयं रक्षितेनोक्तम् । एवं ( ग्रस्यां ? ) परीत्यादि ॥

नित्यसमासत्वादिति । विभाषाधिकारात्पूर्वं विहितस्य समासस्य बाधकं विना नित्यत्वाभ्युपगमादिति भावः । न्यास इति । वस्तुतस्तु प्रतिस्तवनम्, प्रतिस्थानमित्यादौ 'उपसर्गात् सुनोति०' इति षत्ववारणाय कर्मप्रवचनीयविधेस्सार्थकत्वेन

'अर्थमर्थं प्रति प्रत्यर्थम्' इति सरूप० सूत्रस्थभाष्यप्रयोगाद्वीप्सायां समासविकल्पः सिद्धः। पदमञ्जर्यान्तु प्रोक्तम्—'नात्राव्ययं वीप्सावृत्ति, किं तर्हि कर्मप्रवचनीयत्वात् सम्बन्धमवच्छिनत्ति। वीप्सा तु द्विर्वचनद्योत्या' इति। एकैकमिति। पूर्वस्यैकशब्दस्य निर्विभक्तिकत्वं कथमिति प्रश्नः। लोप इति। अत एव 'एकैकामित्यत्र पुंवत्त्वमपि। सर्वनामत्वं तु भवत्येव, 'न बहुव्रीहौ' इत्यत्र 'विभाषादिक्०' इत्यतोऽनुवृत्त्यैव लब्धेऽपि बहुव्रीहिग्रहणे पुनर्बहुव्रीहिग्रहणस्य मुख्यबहुव्रीहिलाभार्थकत्वेनातिदिष्टबहुव्रीहौ निषेधाभावात्। सूत्रप्रत्याख्यानपक्षे त्वङ्गसैव सर्वनामत्वमिति 'एकैकस्मै देहि' इत्याद्युपपद्यते। तद्धितान्तस्येति। उपर्युपरिष्टादिति सूत्रनिष्पन्नस्येत्यर्थः। असमासादिति। यद्वा वचनग्रहणाद्विभक्त्यर्थमात्रवृत्तेरव्ययस्यैव समासाभ्युपगमाद्दिग्देशकालादिवृत्तिनोऽव्ययस्य न समास इति समाधिः। समीप इत्यपि न समासः, सामीप्यस्याविवक्षितत्वादौत्तराधर्यमात्रस्य च विवक्षितत्वादिति बोध्यम्। अतएव 'उपर्यध्यधसः सामीप्ये' इत्यत्र सामीप्यग्रहणम्। यद्वाऽधिकरणशक्तिप्रधानत्वान्न समीपमात्रवाचकत्वमिति न समासः। रक्षितानुसारेण शङ्कते—नन्विति। व्यक्ताविति। सविशेषणे प्रसक्ताया निर्विशेषणःव्यक्तावपि सामर्थ्यम्, विधिवाक्ये निर्विशेषणस्यैव निर्देशादित्याशयः॥

गृह्यत इति। पुर इति तु पूर्वाऽधराऽवराणाम्० इति निष्पन्नं तद्धितान्तम्। पुरो रामस्येत्यत्रोपरिशब्दवदपि समासाभाव उपपादयितुं शक्यः॥

**यथाऽसादृश्ये॥ २।१।७॥**

कथं यथोक्तरीत्येति 'कतरकतमौ जातिपरिप्रश्ने' (२।१।६३) इत्यत्र न्यासः। कथं च 'यथाशक्त्या करिष्यसि' इति कायस्थोक्तिः? उच्यते। सादृश्येऽसमास एवायम्। तदयमर्थः—येन प्रकारेणोक्तरीतिस्तेनैव प्रकारेणोक्तमिति। एवं यथा त्वं शक्तस्तथा शक्त्यानुरूप्येणेत्यर्थः॥

सादृश्येऽसमास इति। यतः सादृश्येऽतो न समास इति भावः, विपरीतोच्चारणेन 'असादृश्ये' इति च्छेदात्॥

**अपपरिबहिरञ्चवः पञ्चम्या॥ २।१।१२॥**

कथमपशब्दः, अपन्यायः, अपव्यवहारः, अपगतः शब्दादित्यस्मिन्नर्थेऽनेन समासात्? उच्यते। 'कर्मप्रवचनीयानां प्रतिषेधः' इति प्रतिषेधवचनात् कर्मप्रवचनीयेऽस्य कृतार्थत्वादन्यत्र परत्वादन्तरङ्गत्वाच्च समासः॥ कथं बहिर्ग्रामादिति पञ्चमी, विधानाभावात्?

उच्यते। अत एव पञ्चम्या समासविधानाद्बहिःशब्दयोगे पञ्चमीति वृत्तिः ॥ कथं 'करस्य करभो बहिः' इत्यमरः ? उच्यते। 'ज्ञापकसिद्धं न सर्वत्र' इति ज्ञापकसमुच्चयः ॥

प्रतिषेध इति। कुगतिप्रादयः इत्यत्र प्रादिग्रहणस्यागत्यर्थत्वात् कर्मप्रवचनीयानां प्रतिषेधः फलति। अयं च प्रतिषेधः प्रत्यादिविषय एवेति स्वत्योः समासो भवत्येवेति कैयटः। व्याख्यानं चात्र शरणम्। कर्मप्रवचनीयेति। अपपर्योरत्र तत्त्वं भाष्यादावुक्तम्।

वृत्तिरिति। भाष्येप्येतदुक्तम्। ज्ञापकसमुच्चय इति पुरुषोत्तमदेवस्य कृतिः ॥

**तिष्ठद्गुप्रभृतीनि च ॥ २।१।१७ ॥**

कथम् 'आतिष्ठद्गु जपन् सन्ध्याम्' इति भट्टिः, चकारेण वृत्तौ समासान्तरनिवर्तनात् ? उच्यते। एवार्थेनाव्ययीभावविलक्षणं समासान्तरं निवर्त्यते, नाव्ययीभावः। तेन 'आङ्मर्यादाभिविध्योः' (२।१।१३) इति समासो भवत्येवेति जयमङ्गला ॥

वृत्तौ काशिकायाम्। एतच्च भाष्ये स्पष्टम्। जयमङ्गलेति। हरदत्तादयस्तु प्राहुः—आ तिष्ठद्गु इति पृथक् पदे, पञ्चम्याश्चाव्ययत्वाल्लुगिति। अत्रैव भट्टिपद्ये 'पश्चिमामायतीगवम्' (प्रक्रान्तामायतीगवम्—मु० पा०) इत्यत्र चैवं सति 'पश्चिमामायतीगवाद्' इति पाठ्यमिति नागेशः प्राह ॥

**अन्यपदार्थे च संज्ञायाम् ॥ २।१।२१ ॥**

'अगात् सराजं बलमध्वनीनम्' इति भट्टिः, नदीभिश्चेत्यनुवृत्तेः। बहुव्रीहौ तु 'अनश्च' (५।४।१०८) इति समासान्तो न स्यात्, अव्ययीभावानुवृत्तेः ? उच्यते। यौगपद्येऽव्ययीभावः। 'साष्टे शते सुवर्णानाम्' इत्यमरः ॥

सराजमित्यत्र प्रश्नः। बहुव्रीहाविति। तुल्ययोगे राज्ञा सहेति विग्रहः। अनुवृत्तेरिति। राजाहः इत्यपि न, त[illegible]षाऽधिकारात्। यौगपद्य इति। साकल्यवचने यौगपद्ये वेति जयमङ्गला। त[illegible] च अनश्चेति प्रवर्त्तते। अव्ययीभावे चाऽकाले इति सभावः। एवमन्यदप्युपपाद्यमाह—साष्ट इति ॥

**द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥२।१।२४॥**

कथं परार्धभारनिर्वोढुं प्रभवेयं (भवेद्यद्यक्ति ?)[1] धर्मकीर्त्तिः,

---

१. अत्र 'भवे यदि' इति पाठः प्रतीयते।

'न लोक, इति ( २।३।६९ ) षष्ठीनिषेधात् [ षष्ठ्याश्च ] तत्रानुकूलत्वात् ? उच्यते । द्वितीयेति योगविभागात्, सुप्सुपेति वा, परार्धभारमुद्वोढुमिति वा पाठः कर्तव्यः ॥

षष्ठीनिषेधादिति । निर्वोढुमित्यस्याव्ययत्वेन तद्योग इत्यादिः ॥

**तृतीया तत्कृतार्थेन गुणवचनेन ॥२।१।३०॥**

कथम् 'एकध्वनिमुखरः' 'शीकरपल्लवितः', तथा 'रत्नज्योतिर्दन्तुरः' इति । 'खमुखकुञ्जेभ्यो रः' ( ५।२।१०७ ) 'तारकादिभ्य इतच्' ( ५।२।३६ ) 'दन्त उन्नत उरच्' ( ५।२।१०६ ) इति व्युत्पन्नस्य मुखरादेरगुणवचनत्वात् ? उच्यते । तृतीयेति योगविभागस्य कैयटेनोक्तत्वात्, 'कर्तृकरणे कृता बहुलम्' ( २।१।३२ ) इति बहुलवचनात् ॥

अगुणवचनत्वादिति । गुणश्चात्र 'वोतो गुणवचनात्' इति सूत्रभाष्योक्त एव न प्रवृत्तिनिमित्तम् । स चैवं लक्षितः—

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ इति ॥

बहुलवचनादिति समाधानान्तरम् ॥

**पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ २।१।३१ ॥**

कथं गुरुतुल्यः, सदृशशब्दस्य स्वरूपग्रहणात् ? उच्यते । तुल्यार्थैः षष्ठ्यन्यतरस्यामिति षष्ठीसमास इति ॥

तुल्यार्थैरिति । 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यन्तरस्याम्' इति सूत्रे षष्ठ्या अपि समुच्चयादिदमुक्तम् ॥

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ २।१।३६ ॥**

कथं वासगृहम्, अश्वघास इति, 'तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यते' इति वचनात् । तेन रन्धनाय स्थालीत्यत्र न समासः ? उच्यते । षष्ठीसमासोऽयमिति कैयटः ॥

कैयट इति । वस्तुतस्तु भाष्य एवैतदुक्तम् । रन्धनस्थालीत्यादि तु न भवत्यनभिधानाद् इति कैयटः । षष्ठ्या एवानभिधानादिति नागेशः । हरदत्तस्तु

प्रकृतिविकारभाव एव समासस्य निष्प्रयोजनत्वं वर्णयन् अश्वघासादौ चतुर्थीसमासमेवाङ्गीकुरुते। भाषावृत्तौ तु चतुर्थीति योगविभागादपि समास उक्तः ॥

## पञ्चमी भयेन ॥ २।१।३७ ॥

कथं 'नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः' इति कुमारः, इतरशब्दस्याभयशब्दत्वात् ? उच्यते। पूर्वोक्तबहुलग्रहणात्। तथा च न्यासः—'बहुलग्रहणप्रपञ्चोदाहरणान्येतानि' इति। सित इतरो यस्मादिति बहुव्रीहिर्वा ॥ कथं 'परश्शताद्याः' इत्यमरः। तथा 'आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः परश्शताः' इति माघः ? उच्यते। शतात् पर इति विगृह्य पञ्चमीति योगविभागात् समासः। राजदन्तादित्वात् परनिपातः। मयूरव्यंसकादित्वाद्वा। पारस्करादित्वात् सुट्। लोकाश्रयत्वाल्लिङ्गस्य न परवल्लिङ्गता। 'स्त्रियाः पुंवद्' (६।३।३४) इति योगविभागात् पुंवत्त्वम्। एतत् सर्वं 'नाज्झलौ' (१।१।१०) इत्यत्र परश्शतानीति व्याचक्षाणेन भाष्यटीकाकृतोक्तम्। पास्करादिपाठादेतत् सिद्धमित्यन्यः। एवं 'परिमाणं शतादूर्ध्वं परःशतमुदाहृतम्', 'ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि' इति भवभूतिः ॥

एतानीति। ग्रामनिर्गतसितेतरादीनीत्यर्थः। बहुव्रीहिर्वेति। बहुलग्रहणात् समास इति कैयटः। पञ्चमीति योगविभागात् समास इति चारित्रवर्धनः। सुप्सुपेति समासो मयूरव्यंसकादित्वाद्वेति तु शेखरकृत्। स्वयमप्येतत्सर्वं वक्ष्यत्यनुपदमेव। सुडिति। पृषोदरादित्वात्साधुत्वमिति युक्तम्, पारस्करादौ संज्ञामात्रस्यैव समावेशात्। पुंवत्त्वम् इति। पराशब्दस्येति शेषः। भाष्यटीकाकृता = कैयटेन। पारस्करादिपाठादिति। पृषोदरादिपाठादिति पाठो युक्तः ॥

## कृत्यैर्ऋणे ॥ २।१।४३ ॥

कथं 'संवत्सरकरणीयम्' इति, 'यत्प्रत्ययेनैवेष्यते' इति वचनात् ? उच्यते। सप्तमीसमासोऽयम्। बहुलवचनाद्वा ॥

सप्तमीसमासोऽयमिति। सप्तमीति योगविभागादित्यर्थः। बहुलेति। कर्तृकरणे इत्यत्रेति भावः ॥

**पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।।२।१।४९।।**

कथं 'वर्णैकं देहि', पूर्वकालैकेतिसमासे एकशब्दस्य पूर्वनिपातात् ? उच्यते । 'द्व्येकयोर्द्विवचनैकवचने' (१।४।२२) इति वचनाद् द्व्येकशब्दौ संख्यावचनौ । आ दशतः सङ्ख्या सङ्ख्येय इति प्रायिकम् । तेन वर्णैकमिति षष्ठीसमासे धर्मधर्मिणोरभेदोपचाराद्धर्म्यभिधायित्वम् । अपशब्द एवायमित्यन्यः । 'पुराणैकं देहीति साध्वेव । अनेन समासे शब्दपरविप्रतिषेधात् पुराणशब्दस्य पूर्वनिपाताद्' इति रक्षितः ।। कथं '[1]शरवर्षमनेकमेकवीरः' इति माघः । पूर्वकालैकेति परत्वात् 'पूर्वापरप्रथम०' (२।१।५८) इत्यादिना समासे पूर्वनिपातप्रसङ्गात् ? उच्यते । पूर्वविप्रतिषेधोऽत्र द्रष्टव्यः ।।

संख्यावचनाविति । अतएव द्व्येकयोरितिद्विवचनं संगतम् । धर्मिणः = एकत्वसंख्याविशिष्टस्येत्यर्थः । शब्दपरेति । सूत्रपठितशब्देषु पूर्वनिपातविप्रतिषेधे परस्येष्टस्य पुराणशब्दस्य पूर्वनिपात इत्यर्थः । विप्रतिषेधश्चोभयोः सूत्रे प्रथमानिर्दिष्टत्वेनेति बोध्यम् । शरवर्षेति । इषुवर्षेति प्रचलितः पाठः । पूर्वविप्रतिषेध इति । यद्वैकवीर इत्यादावेकशब्दस्य संख्येयवाचित्वान्मुख्यार्थकत्वाद्वा न पूर्वस्यात्र प्राप्तिः । उत्तरेण समासे पूर्वनिपातस्तु वीरशब्दस्य बहुलग्रहणान्नेति दीक्षितादयः । एकेषु मुख्येषु वीरयत इति पचाद्यचि साधुरयं शब्दः । वस्तुतस्तु विशेषणविशेष्यसमासप्रस्तावे पूर्वादीनां विशेषणत्व एवैतत्सूत्रप्रवृत्तिरिति नात्र दोषः ।।

**तद्धितार्थोत्तरपदसमाहारे च ।। २।१।५१ ।।**

कथं 'पञ्चगुः पुरुषस्तथा ? उच्यते । तद्धितार्थे मत्वर्थे नेष्यते । 'अनभिधानात् पञ्चगुः' इति रक्षितः ।।

पञ्चगुरिति । प्रकृतसूत्रेण समासे पश्चान्मतुपः श्रवणं स्यादिति प्रश्नाशयः । अनभिधानादिति । अयमाशयः—मतुब्विषये द्विगुमन्तरङ्गत्वाद्बाधित्वा बहुव्रीहिरित्युक्तं मतुप्सूत्रे प्रकृतसूत्रे च भाष्ये । तत्र परत्वादित्येव युक्तम् इतिनागेशः । एतन्मूलकमेव 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इति पठ्यते । अत्र च कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वमपि मन्यत इत्यपि बोध्यम् । परन्तु 'असुब्वतः' इति प्रयुञ्जानेन भाष्यकृतैव मतुब्विषये द्विगोरपि सूचितत्वेन प्रकृते यदि तदभाव इष्टस्तर्ह्यनभिधानादेव वारणीय इति बोध्यम् ।।

---

१. 'इषुवर्ष.....' इति सम्प्रत्युपलभ्यते पाठः ।

**सङ्ख्यापूर्वो द्विगुः ।। २।१।५२ ।।**

कथमेकापूपीति ? कुत्सितस्य दाने एकस्मिन्नेवापूपे समाहारारोपात् । 'सत्पात्रस्य महाफलत्वाच्च समाहारारोपः' इति रक्षितः ।।

एकापूपीति । अनन्तरसूत्रोक्तसंख्यापूर्वकस्य समासस्य द्विगुत्वे प्रकृतोदाहरणं समाहाराभावान्न संगच्छत इति प्रश्नः । कुत्सितस्य = कृपणस्य । समाहारेति । अवयवगतेत्यादिः । सर्वं चैतत्प्रकृतसूत्रभाष्यकैय्यटादौ स्पष्टम् ।।

**विशेषणं विशेष्येण बहुलम् ।। २।१।५७ ।।**

कथं मेरुपर्वतः, कैलासाद्रिः, शिंशपावृक्षः, शमीतरुः, तर्कविद्या, व्याकरणशास्त्रम्, प्राप्यकर्मेत्यादि । तथा—

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रभृत् ।
तस्य सङ्कीर्त्तनादेव हृतं नष्टं च लभ्यते ।।

इति । विशेषणमित्येतावत्युक्ते सम्बन्धिशब्दाद्विशेष्येणेति लब्धे विशेष्यग्रहणेनोभयतो विशेषणविशेष्यभावे समासविधानात् । इह मेरुप्रभृतिशब्दादेव पर्वतादेः प्रतीतिरिति न पर्वतादीनां विशेषणत्वम् ? उच्यते । बहुलवचनाद् भविष्यति । कार्तवीर्यार्जुन इत्ययमपशब्दः । वृत्तौ बहुलवचनाद्व्यावृत्तेः । श्लोके तु कार्तवीर्योऽर्जुन इत्यसमास एव । इदंस्त्री इदम्पुमान् इति विशेषणसमास एव । इदमा परोक्षव्यावृत्तिः । स्त्रीपुम्भ्यां शाटीघटादिनिवृत्तिरित्युभयगतं विशेषणविशेष्यत्वमत एव हि भाषावृत्तावुदाहृतम् ।। कथम्—

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
तादृशं वर्जयेन्मित्रं विषकुम्भपयोमुखम् ।।

इति । पयोमुखविषकुम्भमिति युक्तम् ? उच्यते । विषकुम्भ इव विषकुम्भः पयोमुखमिव पयोमुखम् । ततः कर्मधारयोऽयमित्यत्रोच्यते । अथवा विषकुम्भमिव पयोमुखमिवेति भिन्नपदे लुप्तोपमे ।।

समासविधानादिति । कैयटस्तूभयोपादानं विस्पष्टार्थं मन्यते । प्रधानाऽप्रधानव्यवस्था च—जातिशब्दसंज्ञाशब्दापेक्षया गुणक्रियाशब्दानाम्, अवयवावयविवाचकयोरवयववाचकस्य, व्याप्यव्यापकभावापन्नजातिवाचकयोर्व्याप्य-

जातिवचनस्याप्राधान्यम् । तदनापन्नयोः जातिवचनयोः, गुणवचनयोः, क्रियावचनयोश्च शब्दयोर्यथेच्छमिति । तथा च न पूर्वनिपाताऽव्यवस्था । भविष्यतीति । हरदत्तस्त्वेवंविधं प्रयोगं प्रामादिकमेव मन्यते । वृत्तौ = काशिकायामित्यर्थः । सत्यपि विशेषणविशेष्यभावे क्वचित्समासाभावो बाहुलकात् । युक्तमिति । विषकुम्भशब्दस्य विशेष्यत्वादित्यर्थः । विषकुम्भं पयोमुखमिति तु प्रसिद्धः पाठः । तत्र नाशङ्का ॥

**पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः ॥ २।१।६५ ॥**

कथं 'जनयति कुमुदभ्रान्ति धूर्त्तबको बालमत्स्यानाम्' इति । अनेन समासे बकधूर्त इति स्यात् ? उच्यते । व्यक्तिपरोऽत्र बकशब्द इति कश्चित् । 'कुत्सितानि कुत्सनैः' (२।१।५३) इति नास्ति शब्दप्रवृत्तिनिमित्तकुत्सायां समासो जातेः स्वयमकुत्सितायाः कुत्साऽसम्भवादिति न्यासः ॥

शब्दप्रवृत्तिनिमित्तकुत्सायां जायमानः समासः प्रकृते नास्ति । अत्र हेतुमाह— जातेरिति । तथा च धूर्त्तबक इत्यसाध्वेव । बाहुलकाद्वा समाधेयं कथञ्चित् ॥

**कृत्यतुल्याख्या अजात्या ॥ २।१।६८ ॥**

कथं 'तस्य सत्कृत्यशालिनः' इति भट्टिः । 'सन्महत्०' (२।१।६१) इत्यादेः परत्वादनेन समासे कृत्यसदिति स्यात् ? उच्यते । पूर्वविप्रतिषेधोऽत्र द्रष्टव्यः । सतां कृत्यं सत्कृत्यमिति षष्ठीसमासो वेति । एवं परमपूज्यः ॥

**इति शरणदेवविरचितदुर्घटवृत्तौ द्वितीयाध्याये प्रथमः पादः ॥**

तस्य = सुग्रीवस्य । कृत्यसदिति । कृत्यशब्दस्य 'विभाषा कृवृषोः' इतिविहितक्यबन्तस्य कृत्यप्रत्ययान्तत्वेनानेन समासे पूर्वनिपातनियमार्थत्वादस्य कृत्यशब्दस्य पूर्वप्रयोगापत्तेरिति भावः । इष्टानुरोधादत्र पूर्वविप्रतिषेध उक्तः । परमपूज्य इति । बाहुलकादेतद्विषये सन्महद्० इत्यनेनैव समास उचितः । अत एव 'सद्भृत्यशालिनः' इति जयमङ्गलासम्मतपाठोऽप्यञ्जसा व्याख्यातो भवति ॥

इति दुर्घटवृत्तिविवृतौ द्वितीयाध्यायस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः ।

### पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।। २।२।१।।

### अर्धं नपुंसकम् ।। २।२।२ ।।

कथं 'प्रेम्णा शरीरार्धहरां हरस्य' इति कुमारः ? षष्ठीसमासोऽयम् । तथा च भाष्ये एकदेशिसमासं प्रत्याख्याय विशेषणसमासेन समुदायवृत्तीनामवयववृत्तौ सिद्धे यत्र षष्ठीसमासो दृश्यते तत्र भवत्येव, यथाऽपूपार्धं मया भक्षितमिति ग्रामार्धं त्वया लब्धमित्युक्तम् । वृत्तौ 'षष्ठीसमासापवादोऽयम्' इत्युक्तम् । तन्मतेन 'द्वितीयतृतीय०' (२।२।३) इत्यतोऽन्यतरस्यांग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानात् षष्ठीसमासः ।।

यदि पिप्पली नार्धम्, अथाऽर्धं न पिप्पलीति कथमर्धपिप्पलीशब्दो विशेषणसमासेन सिध्यतीत्यत्राह—समुदायेत्यादि । चारित्रवर्धनेन तु 'शरीरार्धहरां देहार्धस्थायिनीम्' इत्यनेनार्धशब्दस्यैकदेशार्थकत्वं व्याख्याय 'यद्वा हरस्यार्धमर्धहरः, शरीरे अर्धहरो यस्याः' इति व्यधिकरणबहुव्रीहिक्लेशोऽर्धशब्दस्य समांशवाचकत्वनिर्वाहायाश्रितः । तस्मात् पूर्वोक्तमेव न्याय्यम् । द्वितीयतृतीय० सूत्रस्थभाष्यं त्वेकदेश्युक्तिः, परवल्लिङ्गं द्वन्द्व० इतिसूत्रस्थभाष्यविरोधादिति स्पष्टमुद्योते ।।

### प्राप्तापन्ने च द्वितीयया ।। २।२।४ ।।

कथं प्राप्ता जीविकां प्राप्तजीविका, असामानाधिकरण्येऽपुंवद्भावात् ? उच्यते । 'स्त्रियाः पुंवद्' (६।३।३४) इति योगविभागात् पुंवद्भाव इति न्यासः । 'प्राप्तापन्ने च इत्यविभक्तिकाकारप्रश्लेषादकारश्च पूर्वपदस्यानुविधीयत इति भागवृत्तिः । 'ईदूदेद् द्विवचनम्०' (१।१।११) इति प्रगृह्यत्वं नास्ति सौत्रत्वान्निर्देशस्य ।।

प्राप्तेति । लिङ्गविशिष्टपरिभाषया पूर्वान्तत्वेन वैकादेशास्यात्र समासो भवति । भागवृत्तिरिति । एतदेव भाष्यमतम् । निर्देशस्येति । स्पष्टं चेदं कैयटे । कौमुद्यान्तु 'द्वितीयया + अ' इतिच्छेदः कृतः, तथा च सौत्रत्वानुसरणक्लेशो नेत्यर्थः ।।

### नञ् ।। २।२।६ ।।

कथं 'पतन्त्यनेके जलधेरिवोर्मयः' इति भारविः । तथा 'अनेकेषां नानास्थान' इति न्यासः ? उत्तरपदार्थप्रधानत्वान्नञ्समास-

स्यैकत्वबुद्ध्या भ्रम इति। अतोऽयमेकशब्द एकस्मिन्निति एकवचनमेव युज्यते। ज्ञापकं च 'अनेकमन्यपदार्थे' (२।२।२४) इति। तथा च माघः—'करेणुः प्रस्थितोऽनेका रेणुर्घण्टाः सहस्रशः' इति। अत एव भागवृत्तिकृता 'अनेकेषामिति जैनेन्द्रोक्तम् (?) कालदुष्टाः एवापशब्दाः' इति। रक्षितस्त्वाह—अध्यारोपितबहुत्वाद् बहुवचनं यथा 'द्युद्भ्यो लुङि' (१।३।९१) 'वृद्भ्यः स्यसनोः' (१।३।९२) इति। जहद्धर्मत्वाच्छब्दप्रवृत्तेरिति वा एकशेषेण वा बहुवचनमिति असाधारणसिद्धान्तः।

नञर्थः प्रसङ्गादुच्यते। चत्वारो नञर्थाः। 'सादृश्यान्यविरोधेषु प्रसक्तस्य निवर्तने'। भाष्ये तु षट् प्रकीर्त्तिताः—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥

एकत्वबुद्ध्या भ्रम इति। भ्रम इत्यतः पूर्वम् बहुत्वबुद्धिरिति पूरणीयम्। तथा च बहुवचनमसाध्वेवेति फलितम्। अनेकेषामिति। अतः पूर्वमर्थसङ्गत्यै 'कथम्' इति पूरणीयम्। बहुत्वसमर्थकं मतमाह—रक्षितस्त्विति। अध्यारोपितेति। अवयवबहुत्वस्य समुदाय आरोपादित्यर्थः। द्युद्भ्य इति। अत्रैकत्रैव द्युतौ द्युतिप्रभृतिकृपूपर्यन्तानां धातूनां बहुत्वमारोप्य बहुवचनं यथा तद्वदित्यर्थः। एवं वृद्भ्य इत्यत्रापि। जहद्धर्मत्वादिति। व्युत्पत्तिनिमित्तप्रवृत्तिनिमित्तयोर्भेदमाश्रित्येदम्। बहुत्वस्यैवानेकशब्दप्रवृत्तिनिमित्तत्वाद्बहुवचनमिति समाधानान्तरम्। यद्वा एकाधिकगणबहुत्वादनेकश्चानेकश्चानेकश्चेति रूपेण द्वन्द्वैकशेषयोरनेकशब्दे बहुवचनम् इत्याह—एकशेषेणेति। एतच्च कौस्तुभादिष्वपि स्पष्टम्।

वस्तुतस्तु आरोपितत्वस्य[1] नञ्द्योत्यत्वेनाब्राह्मणशब्दस्य यथा आरोपितब्राह्मणत्ववानिति भवत्यर्थस्तथैवानेकशब्दस्यारोपितैकत्वानिति भवत्यर्थः। तथा च यत्र समुदाये वास्तवं बहुत्वं तत्रैकत्वे समारोपित एवानेकत्वपदप्रवृत्तेरनेकपदस्य बहुवचने प्रयोगो न युक्तः। अत एव भाष्ये सर्वदैवैकवचनमेव समर्थितम्। अतश्च यदि कथञ्चिद्बहुवचनं समर्थनीयं तर्हि एकशेषेणैवेति सूचयन्नाह—असाधारणेति।

नञर्था इति। यद्यपि भाष्ये नञो द्योतकत्वमेवारोपितत्वस्योक्तं तथापि

---

१. आरोपविषयत्वमारोपितत्वम्, तत्रारोपमात्रमर्थः, विषयत्वं तु संसर्गमर्यादयैव लभ्यम्। स चाप्यारोपो वाच्य एव, न द्योत्य इत्यपि पक्षान्तरम्।

आर्थिकार्थमादायैतदुक्तम् । भाष्ये तु इति । वस्तुतो नैतल्लभ्यते तत्र । सादृश्यादेरुदाहरणानि यथा—

अब्राह्मणः, अपायम्, अनश्वः, अनुदरा कन्या, अब्राह्मणो वार्धुषिकः, अधर्म इति ॥

**षष्ठी ॥ २।२।८ ॥**

**कथम्**

एष बन्ध्यासुतो याति खपुष्पकृतशेखरः ।
मृगतृष्णाम्भसि स्नात्वा शशशृङ्गधनुर्धरः ॥

इति, बन्ध्यादेः सुतादिसम्बन्धाभावात् षष्ठ्यभावः ? **उच्यते** । बुद्ध्यवसितोऽत्र सम्बन्धः । यथा शिलापुत्रकस्य शरीरमित्यत्र भेदः । 'विवक्षाधीना हि शब्दव्युत्पत्तिः' इति 'तदाद्याचिख्यासायाम्' ( २।४।२१) इति सना ज्ञापितम् ॥

मृगतृष्णेत्यादितृतीयपादस्थाने 'कूर्मक्षीरचये स्नातः' इति क्वचित् पठ्यते । ज्ञापितम् इति । एतच्च पूर्वमप्युक्तम् ॥

**न निर्धारणे ॥ २।२।१० ॥**

निर्धारणं व्यवहारः । स चेह समुदायैकदेशता । तथा चानुन्यासः— 'स भगवान् पुरुषोत्तम उत्तमशब्देनैकदेशरूपतयाख्यायते' । **किन्तु** पारम्पर्येणोक्तो विषयोऽयं प्रतिषेधस्य । **'सप्तमी'** ( २।१।४० ) इति योगविभागात् समास इति पुरुषोत्तमः ॥ 'प्रतिपदविधाना च षष्ठी न समस्यते' इत्युक्तम् । **कथं** तर्हि गोस्वामीत्यादि, **षष्ठ्याः** प्रतिपदविधानात् ? **उच्यते** । नेयं प्रतिपदविधाना; किन्तु सप्तम्या बाधकप्रतिपत्तौ प्रतिप्रसूयमाना । तेन गोस्वामीत्यादि सिद्ध्यतीति रक्षितः ॥

व्यवहारः पृथक्करणम् । एकदेशता चात्र जातिगुणक्रियासंज्ञान्यतमेन व्यवस्थापयितव्या । पारम्पर्येणेति । शेषषष्ठ्याः सप्तम्या बाधो मा भूदिति यतश्च निर्धारणमिति या षष्ठी सा यदा प्रतिप्रसूयते तदाऽयं निषेध इति पारम्पर्येणायं षष्ठ्यानिषेधः समासस्योक्तः । तथा च यतश्चेत्यादिसूत्रं सप्तमीमात्रविधायकमिति फलितम् । सप्तमीति । केचित्तु संज्ञायाम् इति सूत्रेण सप्तमीसमासमाहुः । उभयं स्वरभेदादसंगतम् । अतः षष्ठीसमास एव ज्यायान् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः'

इति गीतोक्तेर्विशेषणसमास एवायम्, राजदन्तादित्वाच्च परनिपात उत्तमशब्दस्येति वा बोध्यम् ।

प्रतिपदविधानेति । शेषषष्ठ्यतिरिक्ता षष्ठीत्यर्थः । यद्वा धातुकारकविशेषोपादानेन ज्ञोऽविदर्थस्य० इत्यारभ्य व्यवहृपणोः इति सप्तसूत्र्या (नव्यमते) कृत्वोऽर्थप्रयोगे० इत्यनेन विहिता (प्राचीनमते) च षष्ठी तथा । प्रतिपदेति । स्वामीश्वराधिपति० इति सूत्रेणेति शेषः । प्रतिप्रसूयमानेति । तथा च पूर्ववत् शेषषष्ठ्येवात्रेति भवति समासः । रक्षित इति । सर्वं चैतन्न्यासादिषु स्पष्टम् ।।

**पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।। २।२।११ ।।**

**कथं** 'तमस्तानवम्' इति, तानवस्य गुणत्वेनानेन षष्ठीसमासनिषेधात् ? उच्यते । 'अधिकरणैतावत्त्वे' (२।४।१५) इति निर्देशात् ।। **कथं** ( विभुत्वादुपरि ? ) 'तदुपरि' । तथा 'यत्कृतेऽस्मिन्[1] निगृह्णीमः', तथा 'आदेयाः किंकृते भोगाः कुम्भकर्ण ! त्वया विना' इति भट्टिः । अव्ययेन न समास इति निषेधात् ? उच्यते । कृता साहचर्यादव्ययस्य कृतो ग्रहणमिति रक्षितः ।। **यद्येवम्** 'अनुर्यत्समया' ( २।१।१५ ) इत्यत्र यस्य समया यत्समयेति 'पूरणगुण' इत्यादिना समासाभावोऽत्राव्ययेन 'समयाशब्देनानुशब्दोऽत्रोच्यते' तेन द्रव्यवृत्तित्वादनव्ययत्वे समास उक्तो न्यासकृता ? **पूर्वपक्षा**वसर इदमुक्तमिति रक्षितः । साहचर्यमनाश्रित्य प्रकारान्तरं वा तत् ।। **कथं** 'सत्कर्तव्यमि'ति । उच्यते । तृतीयासमासोऽयम् । सुहितार्थास्तृप्त्यर्थाः । तद्योगे षष्ठी, समासनिषेधाज् ज्ञापकात् । एवञ्च—

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ।। इति ।।

**यद्येवम्**

फलैर्नानारसैः शुद्धैः स्वादुशीतैश्च वारिभिः ।
तृप्तास्तां भ्राजथुमतीमपृच्छन् कस्य पूरियम् ।।

इति भट्टिः । 'फलैर्येष्वाशितं भवम्' इति च ? उच्यते । 'ज्ञापक-

---

१. 'यत्कृतेऽरीन् व्यगृह्णीम' इति पाठः ( भ० का० १७।२३ ) ।

सिद्धं न सर्वत्र' इति ज्ञापकसमुच्चयः । अथवा 'विवक्षातः कारकाणि भवन्ति' इति करणविवक्षायां तृतीया । शेषत्वविवक्षायां षष्ठी ।।

निर्देशादिति । तथा च गुणेन षष्ठीसमासनिषेधोऽनित्यः । 'संज्ञाप्रमाणत्वात्' इत्यादिनिर्देशा अप्यत्र मानम् । कृतेति । पूर्वेण शतृशानच्प्रतिपादकसता उत्तरेण च तव्यप्रत्ययेनेत्यर्थः । एतदेव भाष्यारूढः पन्थाः । अत एवाव्ययप्रतिषेधे वृक्षस्योपरीत्युदाहरन्तौ कैयटहरदत्तौ चिन्त्यौ । कृदव्ययग्रहणे दोषमाशङ्कते—यद्येवमिति । यस्य समयेति । वृत्ताविदं व्याख्यानम् । दीक्षितादयस्तु यदिति सामान्ये नपुंसकं द्वितीयान्तमेवाहुः । न्यासकृतेति । तथा च समयेत्यव्ययस्य कृत्त्वाभावात् स्वतएव निषेधाऽप्रवृत्तौ शङ्कासमाधाने व्यर्थे स्यातामिति भावः ।

पूर्वपक्षेत्यादि । तथा च नैताभ्यां शङ्कासमाधानाभ्यां कृदव्ययसाहचर्यग्रहणे दोषः । सत्कर्त्तव्यम् इति । तव्यान्तमिदं निरनुबन्धकपरिभाषया । तव्यदन्ते तु स्वकर्त्तव्यमित्यादौ भवत्येव समासः । स्वरे च विशेषः । तृतीयेति । तथा च तव्यदन्तमाश्रित्य निषेधाभावोपपादनेऽपि न क्षतिरिति न शङ्क्यम्, तव्यदन्तेन समासेऽन्तस्वरितत्वस्य तव्यान्तेन समासे तु मध्योदात्तत्वस्य प्राप्तिरिति भेदात् ।

षष्ठीति । फलादौ करणत्वाविवक्षया सम्बन्धसामान्यविवक्षया च षष्ठीत्यर्थः । षष्ठ्येवेति मन्यमानः शङ्कते—यद्येवमिति । षष्ठीति । तथा च विवक्षानुसारं षष्ठीतृतीये भवतः । आद्ये समासनिषेधोऽन्त्ये तु नेति विशेषः ॥

## क्तेन च पूजायाम् ।। २।२।१२ ।।

कथं 'कलहं स राममहितः कृतवान्' इति भट्टिः । तथा राजपूजितः, ईश्वरज्ञातः । अनेन समासनिषेधात् ? उच्यते तृतीयासमासेन राजपूजितादय इत्यनुन्यासः । शेषषष्ठ्या वा समासः । एवं प्रकरणमिदं स्वरार्थम् । तथा स्वरार्था पञ्चसूत्रीति भाष्ये ।।

शेषषष्ठ्या वेति । वस्तुतस्तु थाथघञ्क्त० इति सूत्रेणोभयथाऽप्यन्तोदत्तत्व एव प्राप्ते फले विशेषाभावेन शेषषष्ठीसमासस्याप्ययं प्रतिषेध इति युक्तम् । तथा च पूर्वसमाधानमेव युक्तम् । विस्तरः पदमञ्जर्याम् ॥

## कर्मणि च ।।२।२।१४ ।।

कथं 'गृहवित्तभर्त्री पुत्रेण' ? उच्यते । शेषषष्ठ्या भविष्यति ।। कथं शब्दानुशासनं लिङ्गानुशासनमिति ? उच्यते । 'उभयप्राप्तौ'(२।३।६६)

इति षष्ठ्या अयं समासनिषेधः। चकारस्यावधारणार्थत्वात्, 'कर्त्तरि च' (२।२।१६) इति सूत्रारम्भाच्च। यदि सामान्यकर्मषष्ठ्याः समासनिषेधोऽनेन स्याद्, इदं व्यर्थं स्यात्। न च प्रेष्यस्य कारयितेत्यत्र ह्रक्रोरन्यतरस्याम् (१।४।५३) इति कर्मत्वाभावात् कर्तृषष्ठ्यन्तस्य समासनिषेधार्थं भविष्यति, तृजकाभ्यां कर्तरि (२।२।१५) इत्येव तत्सिद्धेः। यत्तु तत्र वृत्तावुक्तम्—'तृज्ग्रहणमुत्तरार्थमिति' तत् 'कर्त्तरि च' इति सूत्रे स्थिते। अथवा षष्ठ्येवात्र नास्ति; प्रत्यासत्या हि यस्मात् कृद्विहितस्तत्क्रियायाः कर्तृकर्मणोः षष्ठ्या भाव्यम्। इह ण्यन्तात् कृद्विहितः; प्रेष्यश्चाण्यन्तकर्ता। न च शब्दानुशासनमित्यत्रापि 'उभयप्राप्तौ' इति षष्ठी। 'षष्ठी हेतुप्रयोगे' (२।३।२६) इत्यत एव प्रयोगग्रहणानुवृत्तेः कर्तृप्रयोगे तद्विज्ञानात्। प्रयोगग्रहणं कर्त्रा सम्बध्यते, न च कर्मणा, कर्तृव्यावृत्तौ तत्प्राधान्यात्। एतेन कर्मण्येव प्रयोगे 'उभयप्राप्तौ' इति नियमात् कर्तरि तृतीया। ज्ञापकं वा 'अन्तर्धौ येनादर्शनमिच्छति' (१।४।२८) इति रक्षितः॥ एवञ्च 'अ इ उण्'इत्यत्र 'तस्य ग्रहणं भवत्येकेन' इति सिद्धये 'तस्येति कर्तरि षष्ठी' इति न्यासोऽऽसङ्गतः, अत्रोपग्राह्यकर्मणि गम्यमानेऽपि नियमात्? उच्यते। कर्तरि षष्ठीत्यन्य[थाऽ]संस्कृतत्वात् शेषषष्ठी कर्तरि स्यात्। यत्तु अनुन्यासकृतोक्तम्—यत्र सामर्थ्यप्राप्तमुभयोरुपादानं स 'उभयप्राप्तौ' इत्यस्य विषयः। अन्यथा 'कर्तृकर्मणोः कृति' (२।३।६५) इत्यस्य विधेः 'उभय प्राप्तौ' (२।३।६६) च विषयविभागो न स्यात्। 'नाकर्तृकं कर्मास्तीति न्यायाद्' इति, तदयुक्तम्। पुरां भेत्तेत्यादावभिहिते कर्तरि नियमाभावात्। अथानभिहिताधिकारमनङ्गीकृत्योच्यते। एवमपि 'अकाकारयोः प्रतिषेधो वक्तव्यः' 'शेषे विभाषा' इत्येताभ्यां नियमव्यावृत्तौ 'कर्तृकर्मणोः कृति' इत्यस्य कृतार्थत्वात्। उच्यते। अस्य विधेरिति व्यधिकरणे षष्ठ्यौ। तदयमर्थः 'कर्तृकर्मणोः' इत्यस्य यो विधिः 'कर्तरि च' इति, 'उभयप्राप्तौ' इत्यस्य यो विधिः 'कर्मणि च' इति एतयोर्विषयविभागो न

स्यात् । सर्वत्र 'कर्मणि च' इति निषेधसम्भवात् । अपरं बहुत्वान्नोक्तम् ॥

अत्रेदं बोध्यम्—वृत्त्यनुसारेण तृजकाभ्यां कर्त्तरि इति सूत्रे कर्त्तरीति षष्ठीविशेषणम्, कर्त्तरि च इत्युत्तरसूत्रे च कर्त्तरीति तृककाभ्यां सम्बद्धम् । तथा च पूर्वसूत्रेण कर्तृषष्ठ्याः समासो निषिध्यते, उत्तरेण च कर्मणि षष्ठ्याः । दीक्षितादिमते तु पूर्वसूत्रे कर्त्तरीत्यस्य तृजकाभ्यामन्वयात् तयोर्योगे कर्मणि षष्ठ्याः समासो निषेध्यः, उत्तरसूत्रे च कर्तृषष्ठ्याः स इति भेदः । प्रकृतो ग्रन्थस्तु वृत्तिकारमतमाश्रित्य प्रवृत्त इति ।

अवधारणात्वर्थादिति । एतच्च भाष्ये व्यक्तम् । अनेनेति । अपां स्रष्टेत्यादावपि कर्तृकर्मणोः इति कर्मविहितषष्ठ्या अपि कर्मणि च इत्यनेनैवेत्यर्थः । व्यर्थमिति । सर्वमिदं न्यासादौ स्पष्टम् । स्थित इति । प्रयोजनान्तरसिद्धय इति शेषः । यदि तु प्रेष्यस्य कारयितेत्यत्र समासनिषेधमात्रार्थं कर्त्तरि च इति सूत्रं स्यात्तर्हि नैकमुदाहरणं योगारम्भं प्रयोजयतीति सूत्रस्यैवाभावात्तत्र न तृज्ग्रहणाभिसम्बन्धः स्यात् । तथा च तृजकाभ्यामित्यनेनैवात्रापि निषेधः कार्य इति भावः । उत्तरार्थमित्यस्य नित्यं क्रीडेत्यादिसूत्रार्थमित्यप्याशयात् ।

षष्ठी हेतुप्रयोग इत्यत इति । कृत्वोर्थप्रयोगे॰ इत्यत इत्युचितम् । तथा च कर्मणो गम्यमानत्वेऽपि उभयप्राप्तिरिति फलितम् । कर्मण्येवेत्यादिग्रन्थस्य त्वयमर्थः—वाक्ये कर्त्तुः प्रयोगे स्वशब्देन सर्वनाम्ना वा निर्देशे कर्मणश्च प्रयोगे गम्यमाने वा उभयप्राप्ताविति कर्मण्येव षष्ठीनियमात् कर्त्तरि तृतीयेति । येनादर्शनमिति । अत्रात्मनः कर्मणो गम्यमानत्वेऽप्युभयप्राप्तिरिति कर्त्तुस्तृतीयैव—येनेति, न तु कर्त्तृकर्मणोः इति षष्ठी । शङ्कते—एवञ्चेति । नियमादिति । कर्मण्येवेत्यादिः । कर्त्तरि षष्ठी, कथमुक्तेति शेषः । अन्यथेति । शेषषष्ठीमन्तरेणेत्यर्थः । असंस्कृतत्वात् – अव्याकृतत्वात् । एतावान् ग्रन्थो गम्यमानेऽपि कर्मणि भवत्युभयप्राप्तिरित्याशयेन ।

सम्प्रति भाष्यादिसम्मतामुभयप्राप्तिं परिष्कर्तुं भूमिकामारचयति—यत्तु···· इत्यादिना । सामर्थ्यप्राप्तमिति । शब्दसामर्थ्यप्राप्तमित्यर्थः । यथा 'आश्चर्यो गवां दोहोऽगोपालकेन' इत्यादावाश्चर्यप्रतिपादनार्थमावश्यकं कर्तुः कर्मणश्चोपादानम् । ध्वनितं चैतद् आत्ममाने खश्च इति सूत्रे भाष्ये प्रकृतसूत्रे कैयटे च स्पष्टम् । न्यासादावप्ययमर्थ उक्तः । नियमाभावादिति । तथा चात्र कर्मणि कर्तृकर्मणोः इत्यस्य विषयताऽसङ्कीर्णेति शेषः । व्यावृत्ताविति । भेदिका देवदत्तस्य काष्ठानामित्यादाविति पूरणीयमतः परम् । एतावताऽनुन्यासमतं प्रतिक्षिप्य पुनस्तत्समर्थयितुमाह—उच्यत इति । निषेधसम्भवादिति । पूर्वमते सर्वत्रैवोभयप्राप्तिसत्त्वेनेत्याशयः ॥

## कर्तरि च ॥ २।२।१६ ॥

**कथं** 'भीष्मः कुरूणां भयशोकहर्त्ता' इति ? **उच्यते**। तृन्नन्तमेतत्। न च 'न लोकाव्ययनिष्ठा' इति (२।३।६९) षष्ठीनिषेधः। यतः 'तृजकाभ्याम्' (२।२।१५) इत्यत्र तृचः सानुबन्धकस्योपादानं तृनो निवृत्त्यर्थं ज्ञापयति तृनो योगे क्वचित् षष्ठीतीति न्यासः। 'द्वितीया' (२।१।२४) इति योगविभागाद्वा समासः। शेषषष्ठीत्यन्यः ॥

न्यास इति। प्रकृतसूत्रे सर्वमुक्तं तत्र। तथा च कर्मषष्ठीयं कर्तृकर्मणोरिति। तृना च कर्त्तुरुक्तत्वान्न कर्त्तुः प्राप्तिरिति नोभयप्राप्तिः। अतश्च न केनापि समासनिषेधः। तृन्योगे षष्ठीनिषेधे त्वाह—द्वितीयेति। अन्य इति कैयटादिः ॥

## कुगतिप्रादयः ॥ २।२।१८ ॥

**कथम्** 'अलं कुमार्यै' इति वाक्यम्, 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति। नित्यसमासात् ? **उच्यते**। 'नमस्स्वस्ति' (२।३।१६) इति चतुर्थीविधानसामर्थ्यान्नित्यसमासेऽपि वाक्यम्' इति क्षरितः। **नन्वलं** कुमार्यै शोभनायै इति सविशेषणेऽपि वा समासाभावाच्चतुर्थीविधानं कृतार्थम् ? **उच्यते**। व्यक्तौ सामर्थ्यं बोध्यम् ॥ **कथमधीत्य**, 'कर्मप्रवचनीयानां प्रतिषेधः' इति वचनादत्र तु सोपसर्गस्याध्ययनार्थत्वादधिशब्दस्यानर्थकत्वे 'अधिपरी अनर्थकौ' (१।४।९३) इति कर्मप्रवचनीयत्वात् समुदायार्थम् इङ्युपचर्य धातुत्वं न्यास उक्तम् ? **उच्यते**। 'अध्यापकधूर्तजातिः' इति ज्ञापकत्वात्। अत एवातिस्तुतं सुस्तुतमित्यत्रोपसर्गलक्षणषत्वाभावः। **कथं** 'कुरुतेनेयम्' इति दण्डी। कुशब्दोऽव्ययं पापार्थे समस्यत इति प्रतिपादनात् ? 'ईषदर्थे च' (६।३।१०५) इति ज्ञापकात् प्रायिकमुपाधिवचनमिति न्यासः [यदिपृथिवीवाचिकुशब्दनिवृत्त्यर्थं वच]नम्, सप्तमीति समासो वा ॥

वाक्यमिति। 'पर्यादयो ग्लानाद्यर्थे' इत्यत्र वृत्ताविदम्। व्यक्तौ सामर्थ्यमिति। विशेषणरहितेऽपि चतुर्थीति सूत्रस्य चतुर्थीविधानसामर्थ्यं न विहन्यत इत्यर्थः। ज्ञापकत्वादिति। तथा चात्र समासेन क्वचित्कर्मप्रवचनीयानामपि समासो भवत्येवेति भवत्यधीत्येत्यत्र समासस्तन्निबन्धनो ल्यबादेशश्चेति भावः। कर्मप्रवचनीया-

नामपि क्वचित् समास उदाहरणान्तरमाह—अत एवेत्यादिना । उपसर्गेति । प्रकृते स्वत्योः पूजातिक्रमणार्थयोः कर्मप्रवचनीयतयेति तात्पर्यम् । वस्तुतस्तु अध्येति, अधीत इत्यादौ 'अधिरुपरिभावे वर्त्तते' इति भूवादिसूत्रभाष्यात् 'ततश्चाधीत इत्यस्य विशिष्टार्थयुक्तानां शब्दानां पठनं विधिपूर्वकं वा करोतीत्यर्थः' इति तत्रत्यकैयटाच्च नात्राधीत्यनर्थकमिति गतित्वादेव समास उपपन्न इति नेदमनित्यत्वज्ञापकम् । तस्मात् सुराजेत्यादिभाष्यप्रयोगात् 'स्वती पूजायाम्' इति सौनागवार्त्तिकाच्चानित्यत्वं ज्ञाप्यम् । परन्तु स्वतिविषयमेव समासाभावं ज्ञापयितुं तद् युक्तम् । अत एव 'प्रत्यादि विषय एवायं निषेधः, तथा च स्वत्योः समासो भवत्येव' इति कैयटः । कुशब्द इति । अत्र 'कुः पापार्थे' इति सौनागवार्तिकम् । ज्ञापकादिति । उत्तरपदस्येत्यधिकारे पठितत्वेन ज्ञापकत्वं बोध्यम् । वचनमिति । एतच्च कैयटादौ स्पष्टम् ॥

## उपपदमतिङ् ॥ २।२।१९ ॥

**कथं** 'साधु खलु पयसः पानम्' इति 'कर्मणि च' (२।२।१४) इत्यत्र वृत्तिः । 'कर्मणि च येन संस्पर्शात् कर्त्तुः शरीरसुखम्' (३।३।११६) इति ल्युटि अनेन नित्यसमासात् ? **उच्यते** । शरीरसुखस्याविवक्षितत्वान्नात्र कर्मणि ल्युट्, किं तर्हि 'ल्युट् च' (२।३।११५) इत्यनेनेति रक्षितः ॥ **कथं** 'शिखाभिराश्लिष्ट इवाम्भसां निधिः' इति माघः । तथा 'निस्त्रिंशकल्पस्य निधिर्जलानाम्' इति रघुः । परत्वात् 'कर्मण्यधिकरणे च' (३।३।९३) इति किप्रत्यये नित्यसमासात् ? **उच्यते** । शेषषष्ठ्या नात्र कर्मोपपदम् ॥

इत्यत्रेति । 'उभयप्राप्तौ' कर्मणि इत्यत्राप्युदाहृतमेतत् । नित्यसमासादिति । स्पष्टं चैतद्वृत्त्यादौ । अविवक्षितत्वादिति । अतो रोगाद्यभिभूतोऽशक्नुवन्नेव यदा साधु पिबति तदेति, प्रतिकूलतया यत्र सुखं नोत्पद्यते तत्र वेदं द्रष्टव्यमिति हरदत्तः । परत्वादिति । उपसर्गे घोः किः इत्यत इत्यर्थः । नात्रोपपदमिति । ततश्चोदाहरणयोः पूर्वसूत्रेणैव पूर्वं निधिशब्दे व्युत्पन्ने पश्चात्सम्बन्धोऽम्भ आदिभिरिति भावः ॥

## अनेकमन्यपदार्थे ॥ २।२।२४ ॥

**कथम्** 'अस्तिक्षीरा' इति, तिङन्तस्यासमासात्[1] ? **उच्यते** ।

---

१. कुण्डलितोंशोऽत्र म० म० गणपतिशास्त्रिभिः पूरितः ।

विभक्तिप्रतिरूपकोऽयमस्तिशब्दः । तिङन्तत्वे वा 'अस्तिक्षीरादिवचनं कर्तव्यम्' इति समासः ।।

विभक्तिप्रतिरूपक इति । एतच्च 'नवाऽव्ययत्वात्' इति वार्त्तिकव्याख्यायां भाष्ये स्पष्टम् । एतेनास्तिशब्दस्य स्वरादिषु पाठं मन्यमाना न भाष्यारूढा इति स्पष्टम् । समास इति । एतदपि भाष्ये स्पष्टम् ॥

## उपसर्जनं पूर्वम् ।। २।२।३० ।।

कथम् 'अपेतमैथिलिम्' इति भट्टिः । 'अपेतापोढमुक्त' (२।१।२८) इति समासे पूर्वनिपातप्रसङ्गात् ? उच्यते । बहुव्रीहिः । समासान्तो विधिरनित्य इति 'नद्यृतश्च' (५।४।१५३) इति न कप् ।। कथं वार्तिसूत्रिकमिति 'क्रतूक्थादि०' (४।२।६०) सूत्रे वृत्तिः ? सूत्राणां वृत्तिः सूत्रवृत्तिः । 'तदधीते' इति क्रतूक्थेत्यादिना ठक् । एवं सूत्रशब्दस्य पूर्वनिपातः स्यात् ? उच्यते । वृत्तिश्च सूत्रं चेति द्वन्द्वः कार्यः ।। कथं मातुः सपत्नी सपत्नीमाता ? उच्यते । राजदन्तादित्वात् । माता सपत्नी अस्या इति वा कृते आहिताग्न्यादित्वात् । 'स्त्रियाः पुंवद्' (६।३।३४) इति पुंवत्त्वं नास्ति, समानायामाकृतौ भाषितपुंस्कत्वाभावात् । सपत्नीमातेति च भवति, सपत्नीव शत्रुरिव मातेत्युपचारेण कर्मधारयात् ।।

बहुव्रीहिरिति । एतेन 'अपेतयुद्धाभिनिवेशसैन्यः' इति माघोऽपि व्याख्यातः । पूर्वनिपात इति । तथा च सौत्रवृत्तिकमिति स्यात् । द्वन्द्व इति । ततष्ठगिति शेषः । हरदत्तस्तु वार्त्तिकसूत्रिकमिति पठित्वा वार्त्तिकं च तत्सूत्रं चेति कर्मधारयात् ठगित्याह । एतदेव भाष्येऽपि पठितम् । समानायामाकृताविति । समाने प्रवृत्तिनिमित्ते इत्यर्थः । पुमर्थकस्य सपत्नशब्दस्य शत्रुपर्यायस्य प्रवृत्तिनिमित्तं सपत्नीशब्दस्य च तद् भिन्नमेवेति भावः । अधिकं तसिलादिषु० इतिसूत्रभाष्ये शेखरादौ च स्पष्टम् । कर्मधारयाद इति । उपमितिसमासादिनाऽपि निर्वाहः शक्यः । तत्र यथार्थं व्यवस्था ॥

## द्वन्द्वे घि ।। २।२।३२ ।।

कथं 'प्रपरापसमन्ववनिर्दुर्व्यतिसूदभिनिपर्यपयः' इति, सुविनीनामेकतरस्य पूर्वनिपातसम्भवात् ? उच्यते । 'लक्षणहेत्वोः क्रियायाः'

(३।२।१२६) इति 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति च ज्ञापकादनित्यमिदम् ॥

इदमिति । पूर्वनिपातप्रकरणमित्यर्थः । तत्रापि यथायोगं व्यवस्था । प्रकृते तु द्वन्द्वगर्भद्वन्द्वेनापि निर्वाहः ॥

**अल्पाच्तरम् ॥ २।२।३४ ॥**

**कथं** 'साधारणो भूषणभूष्यभावः' इति कुमारः ? **उच्यते** । 'पूरणार्धाट्ठन्' (५।१।४८) 'परिव्यवेभ्यः क्रियः' (१।३।१८) इति ज्ञापकादस्यानित्यत्वात् ॥ **कथं** शिष्योपाध्यायं छात्रोपाध्यायमिति 'अध्ययनतोऽविप्रकृष्टाख्यानाम्' (२।४।५) इत्यत्र रक्षितेनोदाहृतम्, 'अभ्यर्हितं च' इति पूर्वनिपातात् ? **उच्यते** । 'लक्षणहेत्वोः क्रियायाः' (३।२।१२६) इति ज्ञापकात् सामान्येन प्रकरणानित्यत्वं 'ङ्याप्' (४।१।१) सूत्रे रक्षितेनोक्तम् । एवञ्च पार्वतीपरमेश्वराविति । अथवा प्रयोक्त्रपेक्षया अभ्यर्हितत्वं ग्राह्यं 'भ्रातुश्च ज्यायसः' इति वार्तिकारम्भात् । इह तु कवेश्चाण्डत्वादेव देवी अभ्यर्हिता । पितामातराविति न भवति । 'गर्भधारणपोषाभ्यां ततो माता गरीयसी' इति स्मृतेर्हि माता सर्वेषामभ्यर्हिता । अन्ये त्वाहुः—पार्वतीं पातीति पार्वतीपः शिवः । 'रमा जलधिजा देवी' इति त्रिकाण्डशेषः । रमाया ईश्वरो रमेश्वरः विष्णुः तौ वन्द इत्यर्थः ॥

परिव्यवेभ्य इति । समुद्राभ्राद् घः इत्यादिज्ञापकमपि बोध्यम् । चाण्डत्वादेवेति । चण्डीभक्तत्वादित्यर्थः । सर्वेषामभ्यर्हितेति । मन्वादिभिरप्येतदुक्तम् । अन्य इति । केचिद्रघुटीकाकृतोऽप्येवमाहुः ॥

**सप्तमीविशेषणे बहुव्रीहौ ॥ २।२।३५॥**

**कथं** 'शान्त्युदकुम्भहस्ता यायावराः पुष्पफलेन चान्ये' । तथा 'राजार्जिहहृत्तं मधुपर्कपाणिः' इति भट्टिः ? शान्त्युदकुम्भो हस्ते येषां, तथा मधुपर्कः पाणौ यस्येति बहुव्रीहिरिति जयमङ्गला ॥ कथं वज्रपाणिः कमण्डलुपाणिश्चक्रपाणिः ? **उच्यते** । आहिताग्न्यादिषु द्रष्टव्यः ।

तद्गणपाठस्यातन्त्रत्वाद् व्यवस्थितविभाषात्वाच्च नित्य एव परनिपातः। एतदेवोच्यते—'प्रहरणार्थेभ्यो निष्ठासप्तम्यौ परे भवतः' इति, 'जातिकालसुखादिभ्यः परवचनमि'त्यादि। एवं च 'यदक्षपादः प्रवरो मुनीनाम्' इत्यत्र पादे अक्षम् अस्येति बहुव्रीहौ 'गड्वादिभ्यः परवचनम्' इति पादस्य परप्रयोगः ॥

मधुपर्कः पाणौ यस्येति। वस्तुतो जयमङ्गलायामत्र मधुपर्के पाणिर्यस्येत्येव विग्रहः प्रदर्शितः। तथा चानायासेनैव रूपसिद्धिः। आहिताग्न्यादिषु इति। एतच्च न्यासानुरोधि समाधानं सर्वेषामेव पूर्वोदाहरणानां कृते। व्यवस्थितविभाषात्वमेव प्रहरणार्थेभ्य इत्यादिवचनेन ज्ञापितमित्याह—एतदेवेत्यादि। जयमङ्गलायान्तु शान्त्युदकुम्भहस्ता इत्यत्रेदमप्युक्तम्—'प्रहरणार्थेभ्य इति वा। शान्त्युदकुम्भस्त्वहितनिवारणसाधर्म्याद् उपचारेण प्रहरणम्' इति। उक्तरीत्या तु सर्वेषामेषां वचनानामुदाहरणानि आहितान्यादीनां व्यवस्थितविभाषया साधनीयानि। गड्वादिराकृतिगण इति सम्प्रदायः॥

## निष्ठा ॥ २।२।३६ ॥

कथमल्पश्रुतबहुश्रुतौ? उच्यते। 'सर्वनामसङ्ख्ययोरुपसङ्ख्यानम्' इति वचनात् 'प्रथमचरम०' (१।१।३३) इत्यादिना अल्पशब्दस्य सर्वनामत्वम्। 'बहुगणवतुडति सङ्ख्या' (१।१।२३) इति बहुशब्दस्य सङ्ख्यात्वम्। आहिताग्न्यादित्वाद्वा॥

**इति शरणदेवविरचितदुर्घटवृत्तौ द्वितीयाध्याये द्वितीयः पादः॥**

प्रथमचरम० इति सर्वनामत्वस्य जसि व्यवस्थितत्वात्सर्वत्र समाधानक्लेशादन्यत्समाधानम—आहिताग्न्यादित्वादिति॥

इति दुर्घटवृत्तिविवृतौ द्वितीयाध्यायस्य द्वितीयः पादः॥

## अथ तृतीयः पादः।

## अनभिहिते ॥ २।३।१ ॥

## कर्मणि द्वितीया २।३।२ ॥

कथं 'हा पितः क्वासि हे सुभ्रु'! इति भट्टिः, 'हा तात हा अम्ब' इति मालतीवाक्यम्, 'हायोगेष्वपि दृश्यते' इति द्वितीयासम्भवात्?

उच्यते । हाशब्दोऽयं शोकवचनः । तेन कान्तारे पित्रादिः सम्बोध्यते । तत्र सम्बोधनप्रथमायां प्राप्तायामस्यारम्भे हि अपिशब्दस्य व्यभिचारार्थत्वात् सम्बोधने प्रथमापि भवति । 'आबाधे च' ( ८।१।१० ) इति न द्वित्वमाबाधस्य हाशब्देनैवोक्तत्वादिति रक्षितः । किन्त्वेवं 'हाहा गिरो निष्फलाः' इति । तस्माच्छोकपूर्वकसम्बोधनवचनो हाशब्दः । हाहा गिर इत्यत्र तु शोकार्थ एव, सम्बोध्यस्याभावात् । अतोऽत्र द्वित्वम् । भागवृत्तिकृत्त्वाह—'शोच्यशोचकसम्बन्धे षष्ठ्यपवादो द्वितीया । सम्बोधने तु 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति प्रथमा । 'पुष्पितास्ते सुगन्धाः' ।

आयाते चैत्रमासे दिशि दिशि रुचिरं श्रूयते कोकिलानां
हा कष्टं किं करोमि प्रियतमविरहे कामदूतो वसन्तः ।।"

कथं 'कां दिशं गन्तव्यम्' इति कादम्बरी ।

सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् ।
अब्रुवन् विब्रुवन् वापि नरो भवति किल्विषी ।।

इति । गम्यादेः सकर्मकत्वात् कर्मणि तव्यस्य विधानेऽभिहितत्वात् कर्मणि द्वितीया न स्यात् ? उच्यते । पदसंस्कारे कर्मणोऽविवक्षायां भावे तव्यप्रत्ययः । उत्तरकालं कर्मसम्बन्धे द्वितीयेति कश्चित् । तन्न, षष्ठीप्रसङ्गात् । तस्मादुद्दिश्येत्यध्याहार्यम् । तत्कर्मेदम् । अथवा 'गत्यर्थकर्मणि' ( २।३।१२ ) इति द्वितीयाग्रहणात् षष्ठीं बाधित्वा द्वितीया । 'तदर्हम्' ( ५।१।११७ ) इति निर्देशात् 'कर्तृकर्मणोः कृति' ( २।३।६५ ) इति बाधितत्वाद्वा । एवं 'भ्रान्तं देशमनेकदुर्गविषमम्' इति च । अत्रापि 'नपुंसके भावे क्तस्योपसङ्ख्यानम्' इति षष्ठी स्यात् । अपि तु शेषषष्ठ्या ह्यत्र प्रत्याख्यातत्वाच्छेषविवक्षायां न षष्ठीत्युच्यते । तदभावे(··· ? षु धार्ये तत् ) सिध्यति । अध्वविवक्षायां 'कालाध्वनोः' ( २।३।५ ) इति वा द्वितीया ।। कथम् 'उपर्युपरि बुद्धीनां इति चरन्तीश्वरबुद्धयः' इति जातकमाला ? उपरि-

बुद्धीनामुत्तरलबुद्धीनामुपरि चरन्तीत्यर्थः। एवं चाम्रेडितत्वाभावान्न द्वितीया। यद्वा प्रतिपदोक्तस्य 'उपर्यध्यधसस्सामीप्ये' (८।१।७) इति कृतद्वित्वस्य ग्रहणम्। अत्र वीप्सायां द्विर्वचनं कार्यम्॥ कथं चैत्रं यावच्छीतम्? उच्यते। 'ततोऽन्यत्रापि दृश्यते' इति दृशिग्रहणस्य प्रयोगानुसारित्वाद् यथा 'बुभुक्षितं न प्रतिभाति किञ्चित्' इत्यत्र प्रतिभातियोगे द्वितीया तथा यावच्छब्दयोगे च। एवं 'पुरुषाराधनमृते' इति महिम्नः प्रयोगः। 'ऋतेयोगे द्वितीया' इति कश्चित्। तन्न। 'अन्यारादितरर्ते' (२।३।२९) इति, प्रतिपदपञ्चमीबाधकहेतोरदर्शनात्। तस्माद् 'द्वितीया' इति योगविभागः कर्तव्यः ऋतेयोगे द्वितीयार्थम्। तथा च चान्द्रं सूत्रम्—'ऋते द्वितीया च'॥ कथं 'एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' इति, विद्यादिति क्रियायोगापेक्षया अङितमिति स्यात्? उच्यते। नास्य विद्यादित्यनेन सम्बन्धः। किन्तु भवतीत्यध्याहार्यम्॥ कथं (विमतो दिवसात् तास्तास्तनश्रीः पूर्वं भवान् धरासीदिति? यत्नः कर्तव्यः इति उच्यते। सामान्योपक्रमेण विशेषाभिधानात् प्रथमा। 'प्राप्य' इति वाध्याहार्यम्?) 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इति कुमारः। 'क्रमादमुं नारद इत्यबोधि सः' इति माघः? उच्यते। सम्प्रति भवं साम्प्रतं न साम्प्रतमसाम्प्रतमिति तद्धितान्तमव्ययम्। तथेतिशब्दः कृदन्ताव्ययम्। ततश्च कृत्तद्धिताभ्यामभिहितत्वान्न द्वितीया। 'अव्ययेनाभिहितेऽपि न द्वितीया, 'कृत्तद्धितसमासैः परिसङ्ख्यानम्' इत्यस्य सम्भवप्रदर्शनार्थत्वादिति रक्षितः॥ कथं तर्ह्यधिक्षिप्रस्तावे न्यासकृत् परिगणनं स्वीकृतवान्? उच्यते। अभ्युपगम्योक्तं तत्, उपलक्षणम्।[1] अधिशब्देनोक्ते आधारे सप्तमी, शौण्डादिगणे अन्तश्शब्दस्याधिकरणप्रधानस्योपादानाज् ज्ञापकात्।

कथं तर्हि 'वदन्त्यपर्णामिति तां पुराविदः' इति कुमारः, इतिशब्देनोक्तत्वात्? उच्यते। पुराविद इत्यस्मादनन्तरमितिशब्दो द्रष्टव्यः॥

१. सप्तम्यन्तः पाठो मुद्रितः।

कथं 'स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः' इति कुमारः, क्रमेर्गत्यर्थत्वाद् 'गतिबुद्धि' (१।४।५२) इत्यादिना कर्मत्वात् तानिति युक्तम् ? अत्र क्रमिरवष्टम्भे वर्तते, न गतौ ।। कथं वटे वटे वैश्रवणः शुकवत् पठ्यते¹ मया' इति पठनक्रियाव्यापकत्वेन कर्मत्वात्; तथा 'मन्ये धातुर्विभाषितः' इति मननक्रियाव्याप्यमानत्वात् कर्मणि द्वितीया स्यात् ? वाक्यार्थस्य कर्मत्वात् । द्वितीया हि ङ्याप्प्रातिपदिकाद्विधीयते ।

कथं 'वक्ष्यति कर्मणि द्वितीया' इति वृत्तिः, इतिशब्दाप्रयोगात् ? उच्यते । अनुकार्यानुकरणयोरभेदविवक्षायामर्थवत्त्वाभावात् ।। कथं पक्त्वौदनो भुज्यते, पचिक्रियायां कर्मणोऽनभिहितत्वे द्वितीयाप्रसङ्गात् ? उच्यते । प्राधान्याद्भुजिक्रियापेक्षया अभिहितकर्मत्वात् । एवं च ग्रामो गन्तुमिष्यते, पच्यते ओदनो भोक्तुमित्यादि सेत्स्यति । 'ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य' इति कुमारः ? उच्यते । 'माषाणामश्नीयात्' इतिवत् शेषविवक्षायां षष्ठी ।।

अस्येति । हायोगेष्वपीत्यस्य वचनस्येत्यर्थः । व्यभिचारेति । तथा च दृश्यतेऽपि न दृश्यते चेत्यर्थोऽपिशब्दस्येति दर्शितम् । स्पष्टं चैतन्न्यासे । प्रथमाऽपीति । परन्त्वेतेन वैकल्पिकी द्वितीयाप्रसक्तिर्न निवार्यते, अतोऽन्तरङ्गत्वात्सम्बोधनविभक्तिरिति कैयटः । हरदत्तस्तु कारकविभक्तित्वादपि सम्बोधनविभक्तिमिच्छति । कारकविभक्तित्वं च सम्बोधनस्य न सर्वसम्मतम्, शब्दतः क्रियाश्रयत्वाऽभावात्तस्य । अर्थतस्तत्त्वे तु 'धिग्देवदत्त ! विष्णुमित्रः प्रविशति', 'देव ! त्वां भजे' इत्यादौ व्यभिचारः । अतः पूर्वोक्तमेव युक्तम् । 'हा पितः क्वासि' इत्यादौ तु 'पितः ! क्वासि, हा माम् = अहं शोच्यः' इति, 'पितः ! क्वासि, त्वां हा' इति रीत्यावा निर्वाहः कर्तुं शक्यः । अधिकमन्यत्र । किन्त्वेवमिति । उक्तार्थत्वाद्द्वित्वाभावे पूर्वत्रेत्यर्थः । निष्फला इतीति । अत्र द्वित्वं नोपपद्यते इति शेषः । उपपदविभक्तेरिति । अस्यान्तरङ्गत्वमूलकत्वस्य प्राचीनैरभ्युपगमात् कैयटोक्तसमाधानमेव भागवृत्तिकारस्येष्टं प्रतीयते । षष्ठीप्रसङ्गादिति । भावार्थकेन कर्मणः सम्बन्धिसामान्यत्वेनैव योगसम्भवादिति हेतोः । यद्वा 'कर्तृकर्मणोः' इत्यनेनैव प्रसङ्गः । तदिति । उद्देशक्रियाया इत्यर्थः । षष्ठीं बाधित्वेति । स्पष्टं चैतत् काशिकायाम् । बाधितत्वादिति । उक्तनिर्देशेन कर्तृकर्मणोः इत्यस्यानित्यत्वज्ञापनादिहाऽप्रवृत्तिरेव

१. 'पठ्यसे' इति मुद्रितम् ।

बाधितत्वमुपचारात्। यद्वा यथा तदर्हमित्यत्र कर्तृकृद्योगेऽपि षष्ठी बाधिता तथा प्रकृतेपीति योज्यम्। कुल्लूकभट्टस्तु 'सभां वा न प्रवेष्टव्यम्' इति मनुवचनं (८।१३) 'सभामवगम्य व्यवहारार्थं तत्प्रवेशो न कर्त्तव्यः' इति समाधत्ते। मेधातिथिस्तु 'सभा वा न प्रवेष्टव्या' इत्येव पठति।

एवमिति। कां दिशमित्यादिवदित्यर्थः। भ्रान्तं देशमित्यादि वैराग्यशतके पठ्यते। अत्र प्रकृतवृत्तिस्त्रुटिता। अत्र विविधोपपत्तिः प्रदर्शिता—

कर्माविवक्षायामकर्मकत्वेन 'नपुंसके भावे क्तः' इत्यनेन क्तप्रत्यये 'देशश्चाकर्मकाणाम्' इति वार्त्तिकेन कर्मत्वाद् द्वितीयेत्येका। कर्माविवक्षायां 'गत्यर्थाकर्मक०' इति सूत्रेण क्तः, नपुंसके भावे क्तस्य कृतपूर्वीत्यादिवृत्तिविषय एवाविवक्षितकर्मके धातौ प्रवृत्तेः। द्वितीया च पूर्ववदित्यपरा। विशेषविधानात् सकर्मकेभ्योऽपि 'गत्यर्थाकर्मक०' इति क्ते सति 'न लोकाव्ययनिष्ठा०' इति षष्ठीनिषेधे द्वितीया। 'न लोकाव्यय०' इत्यस्य 'नपुंसके भावे क्तस्य षष्ठ्या उपसंख्यानम्' इति वार्त्तिकबलात् 'नपुंसके भावे क्तः' इतिसूत्रविहितक्तयोग एवाऽप्रवृत्तिः, प्रकृतवार्त्तिकस्य लक्षणप्रतिपदोक्तपरिभाषया तत्सूत्रमात्रविहितक्तविषयकत्वादिति तृतीया। दैवादिकस्यात्रेयमतेनाकर्मकत्वस्यापीष्टत्वान्नपुंसके भावे क्ते 'देशश्चाकर्मकाणाम्' इति कर्मत्वाद् द्वितीया, अर्थस्तु धातूनामनेकार्थत्वान्निर्वाह्यः, तदर्थकत्वमेव वेति चतुर्थ्युपपत्तिः।

अत्रापीति। इत आरभ्य 'सिध्यति' इत्यन्तो ग्रन्थ इत्थमध्येयः—"अत्रापि 'नपुंसके भावे क्तस्योपसंख्यानम्' इति षष्ठी स्यात्। अपि वा शेषषष्ठ्या ह्यस्य प्रत्याख्यातत्वाच्छेषविवक्षायां तु षष्ठीति? उच्यते। तत्र भावे प्रत्ययं विहाय 'देशश्चाकर्मकाणाम्' इति भूतार्थे तत् सिध्यति" इति। अस्येति। 'नपुंसके भावे' इति वार्त्तिकस्य 'शेषविज्ञानाद्वा सिद्धम्' इति वार्त्तिकेन भाष्ये प्रत्याख्यातत्वादित्यर्थः। तदिति। द्वितीया, देशमिति पदं वा। न द्वितीयेति। शेखरे तु 'बुद्धीनाम् इना = श्रेष्ठा, तामिति द्वितीयान्तमेव' इत्यप्युक्तम्। कार्यमिति। एतेन 'सर्वेषामघमम्लानमुपर्युपरि वर्त्तते' इत्याद्यपि व्याख्यातम्। प्रतिभातीति। अत्र प्रतिरुपसर्गः, क्रियाविशेषकत्वादिति न कर्मप्रवचनीयत्वम् इति तन्निमित्तोपपत्तिर्न सम्भवतीति स्पष्टं कैयटादौ।

एवमिति। अपिशब्दबलादेवेत्यर्थः। द्वितीयार्थम् इति। एतेन 'चित्रं यथाश्रयमृते' इति सांख्यकारिका 'त्वामृतेऽधीश नाङ्गैमखः शोभते' इत्यादि भागवतं च व्याख्यातम्। 'अन्यत्रापि दृश्यते' इत्यत्र दृशिग्रहणादृतेशब्दयोगे द्वितीयापीति शेखरे। पदमञ्जर्यां तु ऋतेशब्दयोगे द्वितीयाप्रयोगो लोके निरङ्कुशत्वात् कवीनामित्युक्तम्।

कृदन्ताव्ययमिति । एतेरयतेर्वा क्विचि क्विनि वा निष्पत्तिमभिप्रेत्येदम् । वस्तुतस्त्वत्र नेयं निष्पत्तिरुपयोगिनीत्यन्यथा समाधत्ते–अव्ययेनेति । तथा च इतिशब्देन कर्मत्वमुक्तमिति नारदशब्दान्न द्वितीया । तेन च विभक्त्येव स्वसमभिव्याहृतनारदमात्रनिष्ठकर्मत्वाभिधानादमुमिति द्वितीयोपपत्तिः । विभक्त्यर्थमात्रवृत्तित्वाभावाच्चेतिशब्दस्य नाव्ययीभावसमासोऽपि । रक्षित इति । कौस्तुभादिष्वप्येवमेवोक्तम् । भाष्ये तु परिगणनं प्रत्याख्यातमेव । उपपादितं चोद्योतकृता । प्रथमोदाहरणे युज्यते, ( असमर्थसमासे ), न युज्यते, इष्यते इति वाध्याहृत्य, द्वितीयोदाहरणे पुनः श्रीकृष्णज्ञानानुकरणमाश्रित्येति स्पष्टमुद्योतादौ । प्रकृतमनुसरामः—अधिस्त्रिप्रस्तावे = 'अव्ययं विभक्ति०' इति सूत्रे । अभ्युपगम्यति । अत एव 'अनभिहिते' इत्यत्र परिगणनमस्वीकृतं तेनेत्याशयः । 'अधिशब्देन द्योतिते सप्तम्यर्थे स्त्रीशब्दात् सप्तमी' इति यदुक्तं न्यासकृता तत्र तदुपपादयति–अधिशब्देनेति । उक्ते = अभिहिते इति वाचकत्वपक्षे, द्योतकत्वं तु न्यासोक्तम् । ज्ञापकादित्यतः परमुक्तार्थत्वेऽपि प्रयोग इति पूरणीयम् । द्रष्टव्य इति । अत्रान्वये ज्ञातव्यमित्याद्यध्याहारक्लेशात् 'अपर्णेति च तां पुराविदः' इति 'अपर्णां किल तां पुराविदः' इति पाठो वोचितः । आक्रमयामासेति । अमन्तत्वात् क्रमिर्मिदिति मितां ह्रस्वेणेदं रूपम् । ये तु मितां ह्रस्वे विकल्पं व्यवस्थितमिच्छन्ति तन्मते 'आक्रामयामास' इति पाठः । अवष्टम्भ इति । तथा च गत्यर्थत्वगत्युपसर्जनार्थत्वान्यतराभावान्न कर्मत्वम् । अवष्टम्भो हि गतिं विनाऽपि सम्भवति । गतिबुद्धिसूत्रे तु स्वयमेव कर्मत्वमुक्तवान् गत्युपसर्जनार्थकत्वात् । युक्तं चैतत्, 'तानर्घ्यानर्घ्यमादाय दूरात्प्रत्युद्ययौ गिरिः' इति यद्विषये कथितं तैरवष्टम्भमात्रमन्तःपुरस्य नोचितम् । अधिकमत्र पूर्वमुक्तम् । वटे वटे इति । अत्र इति शब्दाभावाद्वैश्रवणस्य कथं न कर्मत्वमिति प्रश्नः । विभाषित इति । 'कण्ड्वादिभ्यो यक्' इतिसूत्रभाष्य इदम् । विधीयत इति । वाक्यस्य च तथात्वमिति न ततो विभक्त्युत्पत्तिरिति शेषः ।

वृत्तिरिति । 'अनभिहिते' इति सूत्र इति शेषः । अर्थवत्त्वाभावादिति । वस्तुतोऽत्रापि वाक्यार्थस्य कर्मत्वेन निर्वाहः पदसमुदायस्यैव तत्त्वेन वा ॥

## अन्तराऽन्तरेणयुक्ते ।। २।३।४ ।।

कथम् 'आवयोरन्तरा वेदिः' इति, अन्तरायोगे द्वितीयाप्रसङ्गात् ? उच्यते । सावधारणावधिमध्यत्वे द्वितीया कृता । एवं त्वां च मां चान्तरा कमण्डलुरिति । चकार एवार्थ इत्यनुन्यासः । एतच्च पूर्वसूत्राच्चकारानुवृत्तेः ।। यद्येवं 'वैदेहीमन्यरा क्रुद्धः' इति भट्टिः ? उच्यते । केचिदविशेषेण मध्यमिच्छन्ति ।।

अन्तराऽन्तरेण परस्परसाहचर्यान्निपाताविह गृह्येते इति भाष्यम्। साव-धारणेत्यादि। अयमर्थः—यदा मध्यापेक्षया नियताऽवधिरूपता विवक्ष्यते तदैव अवधिभूतयोर्द्वितीया, सम्बन्धमात्रविवक्षायान्तु शेषषष्ठ्येव न द्वितीयेति स्पष्टं 'हलोऽनन्तराः संयोगः' इत्यत्र कैयटे। त्वां च मां चान्तरा कमण्डलुरित्यत्र यथा। अतो नावयोरन्तरेत्यादौ द्वितीया। अत एव द्वयोश्चैवान्तरा कश्चिद् इत्युक्तं भाष्ये। पूर्वसूत्रेति। 'तृतीया च होश्छन्दसि' इत्यत इत्यर्थः। इच्छन्तीति। आधारस्याधेयपरतन्त्रत्वे आधेयस्य यथाधारपरतन्त्रत्वं तथाधारस्याप्याधेय-परतन्त्रत्वमिति भवत्याधेयस्यापि मध्ययोग इति वैदेहीमन्तरेत्यादौ वधस्वरूप-माधेयमादाय द्वितीयेत्यर्थः। वस्तुतस्तु 'अन्तः आक्रुद्धो रावणो वैदेहीमूचे' इत्यर्थ उचितः। कमण्डलोस्तु प्रथमैव, कारकविभक्तित्वादिति स्पष्टं भाष्यादौ॥

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ २।३।१२॥

कथं 'महोपकारस्य किमस्ति तस्य तुच्छेन यानेन वनस्य मोक्षः' इति भट्टिः। यतश्चतुर्थी वेति वक्तव्ये द्वितीयाग्रहणं परामपि कृद्योगषष्ठीं बाधितुमिति न षष्ठीसम्भवः ? उच्यते। प्रार्थनादिक्रियाव्याप्यमानत्वाद् गमनादेः कर्मत्वे क्रियाकर्मणाऽभिप्रेयमाणस्य ग्रामादेः सम्प्रदानत्वे चतुर्थी। प्रार्थनादिक्रियाया अभेदे गमनादेरकर्मत्वे गमनक्रियाव्याप्यमा-नत्वाद् ग्रामादेः कर्मत्वे द्वितीयेति सूत्रं भाष्ये प्रत्याख्यातम्। एवं च सामर्थ्याभावात् कृद्योगषष्ठ्यस्त्येव। न चैतद्दर्शने अजां नयति ग्राम-मित्यादौ सम्प्रदानत्वमनभिधानात्। शोभनं ग्रामं गच्छतीत्यत्र युग-पद्भेदाभेदविवक्षायां भेदे क्रियायाः कर्मत्वमभेदे ग्रामस्येति न दोषः। (पूर्ववृत्तिदशवृत्तिकृतोक्तम्। तदपि प्रमाणयति ?) तथा च भट्टिः— 'तस्याभिगमनाय' इति। शेषविवक्षायां षष्ठीति पुरुषोत्तमः॥

वनस्य यानेनेत्यत्र कथं षष्ठीति प्रश्नाशयः। बाधितुमिति। एतच्च वृत्तौ स्पष्टम्। यदा गम्यादेर्गमनमात्रं नार्थोऽपि तु गमनोपसर्जनप्रार्थनादिस्तत्रापि च गमनस्य प्रार्थनादीनां च भेदो विवक्षितस्तदेति योज्यम् प्रार्थनादिक्रियेत्युत्तरवाक्ये। कर्मत्व इति। प्रार्थनादिक्रियानिरूपितकर्मकारकत्व इति भावः। तत्त्वं च कृत्रिमम्, गमनस्य धात्वर्थान्तर्भावादित्यपि बोध्यम्। क्रियाकर्मणा = प्रार्थनादिक्रियाकर्मी-भूतेन गमनेन। अकर्मत्वे = कर्मकारकत्वाभावे। भेदाऽभेदविवक्षा च लक्ष्यानुरोधेन। यथाह हरिः—

भेदाऽभेदविवक्षा च स्वभावेन व्यवस्थिता ।। इति । तदाह—अनभिधानादिति । कृद्योगषष्ठीति । अत्रार्थे पूर्ववृत्तिवचनं प्रमाणयति—शोभनमित्यादिना । शेषविवक्षायामिति । एतच्च सूत्रसत्त्वे विशेषेण । भागवृत्तिकृतस्तु विकल्पेन षष्ठीमप्याहुः ।।

## चतुर्थी सम्प्रदाने ।। २।३।१३ ।।

कथं 'कामस्यास्य विवेकशून्यमनसो मा देहि मुग्धे ! बलिम्' इति । सम्प्रदानमिति चतुर्थ्या भाव्यम् ? उच्यते । शेषविवक्षायां षष्ठी ।। कथं 'कुर्वन्ति हितमात्मनः', तथा 'रोगिणां हितमौषधम्' इति वैद्यकशास्त्रम् । 'प्रामाद्यद् गुणिनां हिते' इति भट्टिः, 'हितयोगे चतुर्थी वक्तव्ये'ति वचनाद् ? उच्यते । 'हितं भक्षाः' (४।४।६५) इत्यत्र 'तदस्य पण्यम्' इत्यतोऽस्येत्यनुवृत्तिर्ज्ञापयति हितयोगे शेषषष्ठ्यपीष्यते । न चास्येत्यस्य चतुर्थ्यन्ततया विपरिणामः कर्तव्यः । एवं च 'तदस्मै दीयते नियुक्तम्' (४।४।६६) इत्यत्रास्मैग्रहणमिहैव कृतं स्यादिति रक्षितः ।।

शेषविवक्षायामिति । एवं च 'कस्याद्य किं दीयताम्' इति स्वप्नवासवदत्तम् । 'किं दीयतामविकलक्षितिदायिनस्ते' इति वीरचरितमपि व्याख्यातम् ।।

## नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ।। २।३।१६ ।।

कथम् 'इन्दुना प्रविभज्यन्ते नमस्कृत्य मुनित्रयम्' इति, नमोयोगे चतुर्थीसम्भवात् ? उच्यते । करोतिरत्र क्रियासामान्यवचनत्वात् प्रणतिवचनः । नमश्शब्दस्तु तद्द्योतकः । अत एव द्योत्यद्योतकसम्बन्धे 'साक्षात्प्रभृतीनि च' (१।४।७४) इति गतित्वाद् 'नमस्पुरसोर्गत्योः' (८।३।४०) इति सत्त्वम् । एवञ्च नमस्यत्वान्मुनित्रयस्य कर्मत्वे 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'इति द्वितीया ।। एवञ्च 'प्रणम्य शितिकण्ठाय' इति कुमारचरितं न घटते ? उच्यते । कर्मणां शेषत्वे माषाणामश्नीयादिति षष्ठीप्रसङ्गे 'नमस्स्वस्ति' (२।३।१६) इति चतुर्थी । 'क्रियाग्रहणं कर्तव्यम्' इति वा । प्रणम्येति विभक्तिप्रतिरूपको निपातो नमःपर्यायो वा । यदा तु नमोऽर्थ एव करोतिक्रियया व्याप्यमानस्तदा नमसो

योगे चतुर्थी । गतित्वं च नास्ति, द्योतकसम्बन्धाभावात् । तथा च भट्टिः—'रावणाय नमस्कुर्याः स्यात्सीते स्वस्ति ते ध्रुवम्' इति । तथा 'नमश्चकार देवेभ्यः पर्णशालां मुमोच च' इति रक्षितः ॥ कथं 'ममायं प्रभुः' प्रभुर्मल्लो मल्लायेतिवद् 'अलमिति पर्याप्त्यर्थस्य ग्रहणम्' इति चतुर्थ्या भाव्यम् ? उच्यते । भाष्येऽत्र द्विधा व्याख्यातम्—अलमिति पर्याप्त्यर्थस्य ग्रहणमिति । इहापि यथा स्यात् प्रभुर्मल्लो मल्लायेति । अलमिति पर्याप्त्यर्थस्य स्वरूपस्य च ग्रहणम् । इह मा भूदलं बाल ! रोदनेनेति । एवं चैकस्य मते प्रग्वादियोगे षष्ठी, अन्यस्य चतुर्थी । सूत्रकृतापि स्वीकृतमिदं 'तस्मै प्रभवति सन्तापादिभ्यः' (५।१।१०१) 'स एषां ग्रामणीः' (५।२।७८) इति निर्देशाभ्याम् । तथा च भट्टिः—'नाप्रोथीदस्य कश्चन', 'पुप्रोथास्मै न कश्चन' । 'प्रोथृ पर्याप्तौ' इत्यस्य रूपम् ॥

नमःस्वस्तीति । एतच्चासाम्प्रदायिकम्, अत्रार्थग्रहणाभावात् । क्रियाग्रहणमिति च भाष्ये प्रत्याख्यातम् । तथा च यदि करशिरःसंयोगपूर्वकं प्रसादनं नमधात्वर्थस्तदा प्रसादनस्य साधनकर्मत्वमाश्रित्य पूर्ववत् सम्प्रदाने चतुर्थी वाच्या । अतश्च अनुकूलयितुमित्यादिविवक्षया 'क्रियार्थोपपदस्य' इति चतुर्थीति वरम् । एतेन 'नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने' इति तत्त्वप्रकाशिकाऽपि व्याख्याता । प्रभ्वादियोगे षष्ठीति । तथा च माघः—'प्रभुर्बुभूषुर्भुवनत्रयस्य यः' इति । नाप्रोथीदित्यनेन पर्याप्तेरविवक्षितत्वान्न चतुर्थीति जयमङ्गला ॥

## कर्तृकरणयोस्तृतीया ॥ २।३।१८ ॥

'नीरन्ध्रे गतवति संक्षयं पृषत्कैर्भूतानामधिपतिना शिलाविताने' इति भारविः । यतोऽधिपतेः कर्तृत्वकरणत्वे न स्तः, क्तवतोः कर्तरि विधानात्, पृषत्कानां च करणत्वात्; गमेर्ण्यर्थत्वे अधिपतिरेवोक्तः स्यात् क्तवतुना ? उच्यते । हेतौ तृतीया द्रष्टव्या ॥ कथम् 'एकाकिना न गन्तव्यं यदि कार्यशतैरपि' । [··· ··· ···कर्कटपात्रेणेति पशुरिव पशुः । यद्वा । पशुकर्कटमात्रेणेति वा पाठः । तत्र पशुं पश्येत्यर्थः कारकसहितः सर्वः कारकसङ्घः ?] कथं 'धनपतिगृहादुत्तरेणास्मदीयम्'

इति मेघः ? उच्यते । उत्तरेणेति विभक्तिप्रतिरूपको निपातः । 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति तृतीया । एकमुनिपक्षे उत्तरेण पथा गत्वेत्यर्थः । एवं च करणे तृतीया । एनप्प्रत्यये तु 'एनपा द्वितीया' (२।३।३१) इति धनपतिगृहशब्दाद् द्वितीया स्यात् ।। कथम् 'उच्चारणार्थवर्णान्तर्भावेण भक्तिः' इति कुटादिसूत्रे रक्षितः ? उच्यते । प्रकृत्यादित्वादित्येव । 'इत्थम्भूतलक्षणे' (२।३।२१) इति वा ।। कथं प्रभूयते भृत्यः ? उच्यते । प्रभुरिवाचरतीति क्यङ् ।। कथं 'ग्रामं गन्तुमुपक्रम्यते देवदत्तः ? उच्यते । 'प्रोपाभ्यां समर्थाभ्याम्' (१।३।४२) इति कर्तरि तङ् । 'वा भ्राश' (२।१।७०) इति वा श्यन् ।।

विधानादिति । तथा च नीरन्ध्र एव कर्त्ता, नाधिपतिः । गमेर्ण्यर्थत्व इति । 'नीरन्ध्रे गमितवति क्षयम्' 'नीरन्ध्रं गमितवति क्षयम्' इति पाठमाश्रित्येदम् । मल्लिनाथस्तु 'नीरन्ध्रं परिगमिते क्षयम्' इति पठति ।

निपात इति । एवमेव प्रायेणेत्यपि निपात एक इति पदमञ्जरी । तद्योगे पञ्चमी । तृतीया सप्तम्यर्थे बोध्या प्रकृत्यादित्यादिति द्वितीयं समाधानम् । उत्तरेण पथेति हेतौ तृतीया बोध्या । कौमुद्यामेनपेतियोगविभागोऽप्युक्तः । तथा च गृहस्येति स्यात् । मनोरमायां तु 'दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तारेणेन' इत्यत्र निर्दिष्टस्य तोरणस्य विशेषणमुत्तरेणेति हेतुतृतीयान्तम्, इत्थम्भूतलक्षण इति वा । गृहादिति पञ्चमी त्वत्र पक्षे दूरादिति प्रयोगेण 'दूरान्तिकार्थैः' इति बोध्या । क्वचित्तु गृहानित्येव पाठः । तथा च द्वितीया सुलभेत्याह—एनबिति । इत्यम्भूतेत्यादि । तथा च उच्चारणार्थवर्णान्तर्भावज्ञाप्या भक्तिरिति बोधः ।।

## सहयुक्तेऽप्रधाने ।। २।३।१९ ।।

कथं 'प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन' लक्ष्मणस्य ज्येष्ठत्वादप्राधान्यस्यायुक्तत्वात् ? उच्यते । यस्य क्रियाभिसम्बन्धः शब्देन प्रतिपाद्यते, तस्य प्राधान्यं तत्रोक्तम् । 'यस्मिन् जाते प्रासूतेति व्यपदेशस्तस्य क्रियाभिसम्बन्धात् शत्रुघ्ने कनीयसि प्रसूते तथा व्यवहारात् तस्य प्राधान्यम्' इति जयमङ्गला । एवञ्च 'शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते' इति कुमारः । तथोपाध्यायेन सहागताश्छात्रा इति सिद्ध्यति ।।

शब्देनेति। वृत्त्यादौ स्पष्टमेतत्। शब्दशास्त्रत्वाद्व्याकरणस्यैतदुपपद्यते। तत्र च विवक्षा शरणम्॥

## विभाषा गुणेऽस्त्रियाम्॥ २।३।२५॥

कथम् इह भूतले घटो नास्त्यनुपलब्धेः, अस्त्रियामिति निषेधात्? उच्यते। 'अनुपलब्धेः' इति भाष्यकारवचनप्रामाण्याद् 'विभाषा गुणे' इत्यनुन्यासः। अथवा बुद्धिरुपलब्धिर्ज्ञानमिति भिन्नार्थाः[1] साङ्ख्यदर्शने। एवञ्चाविद्यमाना उपलब्धिर्यस्मिन् ज्ञानविशेष इति बहुव्रीहिः। 'विभाषा गुण इति योगविभागाद्' इति 'उणादयो बहुलम्' (३।३।१) इत्यत्र 'प्रकृतेस्तनुदृष्टेः' इति सिद्धये न्यासः॥

अनुन्यास इति। एतच्च योगविभागाद् भाष्यप्रयोगाद्वोपपादनीयम्। अभिन्नार्था इति न युक्तम्। सांख्या हि प्रकृतेः प्रथमं परिणामं बुद्धिरिति महदिति च वदन्ति। तस्या वृत्तिविशेषो ज्ञानम्, वृत्तिविशिष्टाया बुद्धेः पुरुषे प्रतिबिम्बनम्, पुरुषस्य वा तच्छायापत्तिः पौरुषेयबोधापराभिधोपलब्धिरिति तन्मतम्। तथा च यस्मिन् ज्ञानविशेषे—यस्य ज्ञानविशेषस्य पौरुषेयबोधरूपं फलं न जातम्, दर्शनान्तररीत्या यस्यानुव्यवसायो न जातः स ज्ञानविशेषोऽनुपलब्धिरिति पुंस्त्वाद् भवत्यनेन पञ्चमीति भावः। समाधानान्तरम्—योगविभागादिति। न्यास इति। सूत्रद्वयेप्येतदुक्तम्। ये तु संज्ञाक्रियाजातिव्यतिरिक्तं धर्ममात्रमत्र गुणमाहुस्तन्मत एतत्सर्वम्। मतान्तरे तु पञ्चम्यत्रापादान एवेति पदमञ्जर्यां स्पष्टम्॥

## अपादाने पञ्चमी॥ २।३।२८॥

कथं 'कटकान्महाबाणकं सम्पातयति' इति लेखमालिका? 'ल्यब्लोपे कर्मण्युपसङ्ख्यानम्' इति पञ्चमी। कटकमास्थायेत्यर्थः॥ कथं गृहादारभ्य हट्टं यावदिति। तथा 'कुट कौटिल्य इत्यत आरभ्य कुङ् शब्द इति यावद्' इति वृत्तिः? उच्यते। प्रभृतिपर्यायोऽयमारभ्यशब्दो निपातः। ततश्च कार्तिक्याः प्रभृतीति भाष्यकारवचनप्रामाण्यात् पञ्चमी। यद्वा आरभ्यशब्दो ल्यबन्तः। ततो द्वितीयान्ताद् 'आद्यादिभ्यस्तसुपसङ्ख्यानम्' इति तसिः॥ कथं विंशतेरधिको द्रोणः। अधिकसम्बन्धे षष्ठ्या भाव्यम्? उच्यते। 'यस्मादधिकम्' (२।३।९) इति निर्देशा-

१. अभिन्नार्था इति मुद्रितः पाठोऽयुक्तः।

दिति रक्षितः ।। कथं

जीर्णमन्नं प्रशंसीयाद् भार्यां च गतयौवनाम् ।
रणे प्रत्यागतं शत्रुं सस्यं च गृहमागतम् ।।

रणादिति युक्तम् ? उच्यते । अपादानस्याविवक्षायां सप्तमी 'यस्य च भावेन' इति (२।३।३७) ।। कथं प्रशंसीयात्, शंसु धातोर्लिङि प्रशंस्यादिति स्यात् ? प्रशंसीत्यावश्यके विधिः । प्रशंसाशब्दाद् व्रीह्यादित्वाद्वा इनिः । इयादिति इणो लिङि रूपम् ।।

यदि नाम कुतो मत्तस्तत् किमर्थं दरिद्रता ।
दारिद्र्यादतिमूर्खत्वमहो दुःखपरम्परा ।।

दारिद्र्यादित्ययुक्ता पञ्चमी, हेतोरभावात् ? उच्यते । ल्यब्लोपे पञ्चमी भविष्यति ।।

वृत्तिरिति । गाङ्कुटादिसूत्र इति शेषः । भाष्यकारवचनेति । प्रकृतसूत्र एवेदं लभ्यते । तसिरिति । शेखरकृतस्तु "प्रभृतितत्समानार्थकपदयोगे पञ्चमी तदैव भवति यदा अवध्यादानार्थकत्वमेषां पदानाम् । ग्रहणमात्रार्थकत्वे तु आरभ्यशब्दयोगे कर्मत्वविवक्षायां द्वितीयैव । यथा 'प्रातःकालमारभ्य' इत्यादौ । आदिप्रकारार्थकप्रभृतिशब्दयोगे न पञ्चमी, मानाभावात्" इत्याहुः ।

प्रसङ्गात् पृच्छति—कथं प्रशंसीयादिति । हेतोः = पञ्चमीहेतोः ।।

**अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते ।। २।३।२९ ।।**

कथं पूर्वं कायस्येति ? उच्यते । 'तस्य परमाम्रेडितम्' (८।१।२) इति निर्देशादवयववाचिना दिक्छब्देन योगे पञ्चम्यभाव इति रक्षितः ।। कथं 'समुदायिभ्योऽनन्यः समुदायः' । ग्रहणवता प्रातिपदिकेन तदन्तविध्यभावाद् ? उच्यते । अन्य इत्यर्थंग्रहणम् । नञ्समासस्योत्तरपदार्थप्रधानत्वात् तदर्थयोगोऽनुपहत इति रक्षितः ।

तस्य परमिति । द्विरुक्तस्य परावयवभूतमित्यर्थः । रक्षित इति । पञ्चम्यभावोऽवयविवाचकशब्दात् । हरदत्तादयोप्येवम् । ग्रहणमिति । व्याख्यानादिति शेषः । भाष्ये तु नैतदुक्तम् ।।

**षष्ठ्यतसर्थप्रत्ययेन ।। २।३।३० ।।**

कथं 'प्रातिपदिकात् परतः' ? उच्यते । नायं 'विभाषा परा-

वराभ्यामतसुच्' ( ५।३।२९ ) इत्यतसुजन्तः। कथं तर्हि, परशब्दात् सप्तम्यर्थे आद्यादित्वात् तसिः ॥

प्रातिपदिकात् परत इति। दिक्शब्दत्वात्पञ्चम्यां प्राप्तायामिदं षष्ठीवचनं तस्याबाधकमिति पञ्चमी न युक्तेति प्रश्नाशयः। पश्चाच्छब्दयोगे तु भाष्य-प्रयोगात्पञ्चमी ॥

## सप्तम्यधिकरणे ॥ २।३।३६ ॥

कथं 'दात्रेण धान्यं लुनाति' इति? उच्यते। निमित्तमिह प्रयोजनमभीष्टम्, संयोगश्च संश्लेष इति रक्षितः॥ **यद्येवं** यूपाय दार्वानय। इह हि यूपः प्रयोजनं दारुणा संश्लेषोऽस्य? उच्यते। तादर्थ्यविवक्षायां चतुर्थी ॥ कथम् 'अन्तर्धौ येनादर्शनमिच्छतीत्यन्तर्धा-विति निमित्तसप्तमी' इति न्यासः? उच्यते। अत एव निर्देशान्नि-मित्तमात्रे सम्बन्धमात्रे वा सप्तमीति रक्षितः॥ कथं 'जन्मजन्म यदभ्यस्तं दानमध्ययनं तपः'। जन्मनीति युज्यते? उच्यते। जन्मसह-चरिते काले जन्मशब्दस्य वृत्तेः 'कालाध्वनोः' ( २।३।५ ) इति द्वितीया ॥ कथं ( वाग्वाकः कर्तृतः पतति? ) शयानेन भुक्तमिति। शयनक्रियया भोजनक्रिया लक्ष्यते? उच्यते। चिन्त्यम् अनभिधाना-दिति रक्षितभाषावृत्ती ॥

'निमित्तात्कर्मसंयोगे' इति वार्त्तिके निमित्तशब्दस्य कारणार्थकत्वं मत्वा पृच्छति—कथमिति। धान्यस्तवनस्य निमित्तभूताद् दात्रशब्दात् सप्तमी कथं नेति प्रश्नाशयः।

प्रयोजनमिति। यदर्थः क्रियारम्भस्तदिति, क्रियाफलम् इत्यर्थः। संश्लेषः = सम्बन्धः। स च संयोगो वा स्यात् समवायो वा। एतेनात्र संयोगो नाप्राप्तयो-र्द्रव्ययोः प्राप्तिरिति सूचितम्। अत एव दीक्षितादिभिर्भ्रमव्युदासाय 'निमित्तात् कर्मयोगे' इत्येव पठितम्। तादर्थ्येति। स्वसमभिव्याहृतक्रियाफलत्वाऽविवक्षाया-मित्यपि बोध्यम्। रक्षित इति। एतच्च बहुदोषदुष्टमिति विषयसप्तमी सत्सप्तमी वा मन्तव्या। लक्ष्यत इति। तथा च 'यस्य च भावेन' इति सप्तमी युक्तेति प्रश्नार्थः। चिन्त्यम् इति रक्षितमतम्, अनभिधानादिति भाषावृत्तिकृन्मतं यथासंख्यम्। अनभिधानं चात्र भावसप्तम्या एव, प्रकृतत्वात्। यथाल्वापाततोऽर्थोऽस्य प्रतीयते तथा त्वत्र प्राप्तिरेव न, समानकर्तृकत्वेन पौर्वापर्यावश्यभाव इति प्रकृतसप्तम्य-प्रवृत्तेः। परन्तु ग्रन्थस्य खण्डिततया न निर्णयः कर्तुं शक्यः॥

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ।। २।३।४६ ।।**

कथं वृक्षोऽयमिति क्रियाया अभावे कारकत्वाभावादनभिहितत्वाच्च ? उच्यते । कारकत्वमभिहितत्वं चेति भागवृत्तिः ।। कथ मञ्चाः क्रोशन्तीति गौणे प्रथमा । यथा द्रोणपरिमितो द्रोण इत्यत्र परिमाणसव्यपेक्षत्वान्मात्रग्रहणान्न प्राप्नोतीति परिमाणग्रहणम्, तथात्राप्युपचारापेक्षत्वान्न स्यात् । उच्यते । 'वर्णो वर्णेन' ( २।१।६९ ) इति पशौ उपचारसव्यपेक्षेऽपि प्रथमा ।। कथं 'यस्य तस्य प्रसूतस्य गुणवान् स्फूर्जितो नरः' इति, प्रसूतस्येत्यत्र हि प्रथमा युक्ता ? उच्यते । प्रसूतः स इत्येव पाठः ।।

भागवृत्तिरिति । अन्ततोऽस्तिक्रियायाः सर्वत्र सत्त्वेन तदन्वयित्वात् कारकत्वं कर्तुश्चाभिहितत्वमिति प्रथमोपपत्तिरित्याशयः । न स्यादिति । गौणार्थकसंग्रहाय विशेषवचनाभावादित्यभिप्रायः । उपचारेत्यादि । कृष्णसारङ्ग इत्याद्युदाहरणे कृष्णादिशब्दानां गौणार्थमादायैव सामानाधिकरण्यम्, तावताऽपि 'वर्णः' इति प्रथमा सूत्रे दृश्यते यतस्ततो गौणार्थकस्यापि प्रथमाप्रकृतित्वेन ग्रहणमिति ज्ञायत इत्याशयः । वस्तुतस्तु गौणमुख्यन्यायस्य प्रातिपदिककार्येऽप्रवृत्तेः प्रथमोपपत्तिः । गौणत्वस्य पदान्तरसमभिव्याहारात्पूर्वमप्रतीतेश्च न काप्यनुपपत्तिः ।।

**षष्ठी शेषे ।। २।३।५० ।।**

कथं 'तदस्मिन्नधिकम्' ( ५।२।४५ ) इति ? निर्देशादेवेति रक्षितः । 'अबाधकान्यपि निपातनानि भवन्ति' इति वचनात् 'सङ्ख्ययाव्ययासन्न' ( २।२।२५ ) इत्यत्राधिकं दशानामित्यत्रोक्ता षष्ठी ।।

अस्मिन्निति सप्तमी कथं वचनाभावादिति प्रश्नः । निर्देशादेवेति । 'यस्मादधिकम्०' इति सूत्रन्तु कर्मप्रवचनीययोग एव न तेन सिध्यतीत्याशयः । अत एव निर्देशात्पञ्चम्यपि । अधिका खारी द्रोणेनेति कर्त्तरि तृतीयापीति हरदत्तः । वस्तुतोऽत्र हेतौ प्रकृत्यादित्वाद्वेति युक्तम् । नागेशोप्येवमेवाह ।।

**कर्तृकर्मणोः कृतिः २।३।६५ ।।**

कथं 'रक्षोगणं क्षिप्नुमविक्षतात्मा' । तथा 'धायैरामोदमुत्तमम्' इति भट्टिः ? उच्यते । 'तदर्हम्' ( ५।१।११७ ) इति ज्ञापकादस्या-

नित्यत्वाद् द्वितीया। धार्यैरिति 'धेट् पाने' 'श्याद्व्यधास्रु' (३।१।१४१) इत्यादिना णः। युक्। ततस्तृतीयेति रक्षितः ॥ कथं 'कृतपूर्वी कटम्', अनभिहिते कर्त्तरि कृत्प्रयोगे षष्ठीप्रसङ्गात्? उच्यते। कृद्ग्रहणं न तिङ्व्यावृत्त्यर्थं द्वितीयाविधानसामर्थ्यात्। ततस्तद्धितव्यावृत्त्यर्थमिति तद्धितप्रयोगे न षष्ठी ॥

कृद्योगे रक्षोगणमिति आमोदमिति च द्वितीया कथमिति प्रश्नः। अनित्यत्वादिति। व्याख्यातपूर्वमिदम् 'कर्मणि द्वितीया' इति सूत्रे वस्तुतस्तु क्षिप्धातोः त्रसिगृधिधृषिक्षिपेः क्नुः (३।२।१४०) इति क्षिप्नुशब्दनिष्पत्तेरस्य योगे 'न लोक॰' इति षष्ठीप्रतिषेध इति नात्रानित्यत्वेन निर्वाहो युक्तः। अतो द्वितीयोदाहरणमात्रे प्रश्नोत्तरमुचितम्। द्वितीयेति। एतच्च 'उत्तममामोदं धार्यैः = धारयद्भिः' इति व्याख्याने। यदि तु 'अमोदं प्रियासङ्गमेन हर्षं यावद् विरहिभ्यो दत्तस्य दुःखस्य धार्यैः पोषकैः' इति जयमङ्गलोक्तं व्याख्यान्तरमादरणीयं तर्हि नायं प्रपञ्चः कर्त्तव्यः। एतेनैव प्रयोगोपपत्तेरनित्यत्वं न युक्तम्, भाष्यानुक्तत्वात्। तदर्हमित्यत्र च कर्मोपपदादर्हधातोरच्प्रत्ययेनापि द्वितीयासमर्थादित्यर्थलम्भेऽसमस्तद्वितीयान्तत्वबोधनार्थं सूत्रमनित्यत्वे मानमित्ययुक्तम् इत्यपि केचित्। बहुप्रयोगसम्पादनायानित्यत्वकल्पनं तु वरम्। अनभिहिते कर्मणीति। अत्र कर्त्तरीति मुद्रितः पाठो न साम्प्रदायिको न वोपयुक्त इत्यस्माभिरुपेक्षितः, कर्त्तुस्तद्धितेनोक्तत्वात्ततः षष्ठ्यप्राप्तेः। अत्र कृत इति नपुंसके भावे क्तः, वृत्तेः पूर्वं कर्मविशेषान्वयस्याविवक्षिततया कर्मणि तदसम्भवात्। तथा चास्यामवस्थायां कटसापेक्षत्वाभावात् कृत अम् पूर्व अम् इत्यलौकिके विग्रहे सुप्सुपेति समासः। पूर्वं कृतोऽनेनेति च लौकिको विग्रहः। तत्र पूर्वमिति क्रियाविशेषणम्। तत्र कर्त्तुरप्यनभिहितत्वात् क्तप्रत्ययेन अनेनेति कर्त्तरि तृतीयाऽपि संगच्छते। समासादनन्तरम् सपूर्वाच्चेति इनिः कर्त्तरि। तथा पूर्वं कृतवानित्यर्थः। ततश्च कर्मजिज्ञासायां कटस्यान्वयः, गुणभूतेनापि कृधात्वर्थेन कर्मान्वयस्य कटं कृतवानित्यादौ प्रसिद्धेः। तथा च भावार्थकेन क्तप्रत्ययेन कर्त्रर्थकेनिप्रत्ययेन च कर्मणोऽनभिधानादसति कृद्ग्रहणेऽत्र षष्ठीस्यादित्यतस्तन्निवृत्यर्थं कृद्ग्रहणं कृतमिति। एतत्सामर्थ्येन च वृत्त्यन्तर्भावापन्नकृद्योगे षष्ठी न भवतीत्यतः कृतेति क्तप्रत्ययात्मककृद्योगमादाय नात्र कृतेऽपि कृद्ग्रहणे षष्ठीप्रसक्तिः। कर्मणोऽसन्निहितत्वेनाविवक्षितत्वं च कृत्तद्धितादिवृत्तिविषय एव। ओदनस्य पाचकतर इत्यादौ तु द्वितीयैव साध्वी, कृतो वृत्त्यन्तर्भावात्। शेखरे तु कृद्ग्रहणात् कृदन्तशक्तिप्रयोज्योपस्थितिविषयक्रियान्वयिनोरेव कर्तृकर्मणोः षष्ठीत्यतस्तरबन्तेन क्रियोपस्थितौ कृदन्तशक्तिज्ञानस्यापेक्षणेन षष्ठी भवत्येव; कृतपूर्वीत्यादौ तु सकर्मकभावक्तान्तस्येदृशवृत्तिमात्रविषयतया तद्धितान्तसमु-

दायस्यैव क्रियोपस्थापकत्वमिति न षष्ठीति सिद्धान्तितम्। 'नपुंसके भावे क्ते षष्ठ्या उपसंख्यानम्' इति वार्त्तिकसामर्थ्येनात्र 'न लोक०' इतिनिषेधाप्रवृत्तेरकृतेऽपि कृद्ग्रहणे नेष्टसिद्धिः। सर्वं चैतद् 'विशेषकर्मसम्बन्धे' इत्यादिना वाक्यपदीये स्पष्टीकृतम्। द्वितीयाविधानसामर्थ्यादिति। 'न लोक०' इति षष्ठीनिषेधोऽत्र-बीजम्॥

## उभयप्राप्तौ कर्मणि ॥ २।३।६६ ॥

कथम् 'अङः क्तिना बाधा भवति' इति 'स्थागापापचो भावे' (३।३।९५) इत्यत्र वृत्तिः। तथा 'सुटा सीयुटो बाधा मा भूद्' इति 'सुट्तिथोः' (३।४।१०७) इत्यत्र वृत्तिः। 'अकाकारयोः प्रति-षेधो वक्तव्यः' इति नियमनिषेधात् 'कर्तृकर्मणोः' (२।३।६५) इति षष्ठ्या भवितव्यम्? उच्यते। 'अ प्रत्ययात्' (३।३।१०२) इत्य-ग्रहणस्यात्र प्रश्लेषाद्[1] ग्रहणमिति रक्षितः। बाधाशब्दे 'गुरोश्च हलः' (३।३।१०३) इत्यकारः॥

अङः क्तिनेति। 'अङोऽपवादस्य बाधकः' इत्येव न्यासाद्यनुसारी पाठः। बाधेति॥ बाधनमिति पाठान्तरे तु न कोऽपि दोषः। प्रश्लेषादिति। अक+अ+अकार इति अकाकारशब्देऽकारप्रश्लेषेण 'अ' शब्देन विहितस्यैवाकारप्रत्ययस्य योगे निषेध इत्यभिप्रायः। एतच्च भाष्यादौ न स्पष्टं दृश्यते। उदाहरणानुरोधेन तु तथा ग्रन्थकृता कल्पितमिति विद्मः॥

## क्तस्य च वर्तमाने ॥ २।३।६७ ॥

कथं 'त्वया रक्षितः' 'यत्र शीलित' इति। 'मतिबुद्धिपूजार्थेभ्यश्च' (३।२।१८८) इत्यत्र चकारेण 'शीलितो रक्षितः क्षान्तः' इत्यादेः संग्रहादनेन षष्ठ्या भाव्यम्? उच्यते। भूते क्तान्तस्यायं प्रयोगः। भागवृत्तिकृता तु अनेन भूतक्तबाधनमिष्यते। तन्मतेन[2] शेषविवक्षायां षष्ठ्यत्र द्रष्टव्या॥ कथं 'दोषाणां विवर्जितम्' दोषैरिति स्यात्? उच्यते। 'नपुंसके भावे क्तस्योपसङ्ख्यानम्' इति षष्ठी छात्रस्य हसित-मितिवत्। यदि कर्मणि निष्ठा तदा शेषलक्षणैव षष्ठी। दोषाणां

१. अत्र 'प्राथम्यात्' इति गणपतिशास्त्रिभिः संशोधितम्।

२. तु पक्ता।मूलत्वपान्तनमीषाते मन्मतेन ' इति मुद्रितः पाठोऽर्थतोऽस्माभिः संशोधितः।

सम्बन्धि यद् विवर्जितमित्यनुन्यासः ॥

अनेनेति । वर्त्तमानक्तेनेत्यर्थः । शेषविवक्षायामिति । शाब्दबोधवैषम्यं चेष्टमेव । अधिकमत्र 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यत्र स्वयमेव वक्ष्यति । शेषलक्षणैवेति । एवकारेण कृद्योगाया व्यावृत्तिः, तस्या 'न लोक०' इति निषेधात् । प्रतिप्रसवश्च नपुंसके भावे क्ते सत्येव, उक्तवार्त्तिकारम्भसामर्थ्यात् ॥

न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ २।३।६९ ॥

कथं 'सत्यानुरक्तं नरकस्य जिष्णवः' इति, उकारान्तग्रहणात् षष्ठीनिषेधात् ? उच्यते । शेषविवक्षायां षष्ठी ॥

उकारान्तेति शब्दस्वरूपमादाय व्याख्यानात्तदन्तविधिः । शेषविवक्षायामिति । हरदत्तेनाप्येवमुक्तम् ॥

तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ॥ ७२ ॥

कथं 'स्फुटोपमं भूतिसितेन शम्भुना' इति माघः, येनोपमा भवति तस्योपमानस्य तृतीयाया 'अतुलोपमाभ्याम्' इति निषेधात् ? उच्यते । सहविवक्षायां तृतीया । सूत्रं तु षष्ठ्यर्थं सहभावाविवक्षार्थं च । शम्भुनेत्यत्र तु तुल्यार्थस्याप्राधान्याच्च न प्रतिषेधः ॥

सहविवक्षायामिति । एषा च तृतीया सहार्थकशब्दप्रयोगं विनापि, 'वृद्धो यूना' इत्यादिनिर्देशात् । एतेन 'तुलां' यदारोहति दन्तवाससा' इति 'केनोपमा भवतु तेऽस्य पराक्रमस्य' इत्यादि व्याख्यातम् । अत्रेदं बोध्यम्—प्रकृतसूत्रे तुल्यार्थकत्वेन सदृशपर्यायस्य ग्रहणम्, अतुलोपमाभ्यामित्यत्र तुलोपमाशब्दावपि कर्मसाधनौ सदृशपर्यायौ स्त इत्येकं मतम् । एतन्मते स्फुटोपममित्यादौ सादृश्यार्थकस्य भावसाधनस्योपमाशब्दस्य प्रयोगात् करणे एव तृतीया । न चात्र प्रकृतो निषेधः, सादृश्यार्थे तदप्रवृत्तेरिति स्पष्टं पदमञ्जर्याम् । भोजदेवादयोप्येवम् । नागेशादयस्तु भावसाधनस्यैव तुलोपमाशब्दद्वयस्यातुलोपमाभ्यामिति प्रतिषेधात्तुल्यार्थैरित्यस्य तुल्यत्वार्थैरिति भावप्रधाननिर्देशं मन्वानाः सदृश्यार्थकयोरेव प्रतिषेधमन्येषां च योगे विधिमिच्छन्ति प्रकृतसूत्रेण । तन्मते सदृशपर्यायतुल्यादिशब्दयोगे 'सहयुक्तेऽप्रधाने' इत्यनेनैव तृतीयेति । अप्राधान्यादिति । उपमाशब्दस्य बहुव्रीहिघटकत्वेनाप्राधान्यं बोध्यम् । प्रतिषेधश्च प्रधानविषय एव न्यायसिद्ध इत्यभिप्रायः ॥

चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ २।३।७३ ॥

कथं नित्यं 'गोभ्यः स्वस्ति भूयाद्' इति ? उच्यते । 'नमस्स्वस्ति'

(२।३।१६) इत्यादौ चकारस्तस्यैव वाक्यस्य समुच्चयार्थः । तेनाशीर्विवक्षयां षष्ठ्या बाधितत्वाच्चतुर्थीति वृत्तिः ।।

इति शरणदेवविरचितदुर्घटवृत्तौ द्वितीयाध्याये तृतीयः पादः ॥

तस्यैव वाक्यस्येति । नमःस्वस्तीत्यादिचतुर्थीविधायकवाक्यस्येत्यर्थः । तथा च पुनर्विधानं लभ्यते । तत्फलमाह—तेनेति । वृत्तिपाठस्तु कियद्भिन्न एव ।

इति दुर्घटवृत्तिविवृतौ द्वितीयाध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः ।

### द्विगुरेकवचनम् ।। २।४।१ ।।

कथं 'रुद्रैकादशी' इति हरिश्चन्द्रप्रयोगः । समाहारद्विगावेकादशरुद्रमिति स्यात् ? उच्यते । 'स्तोमे डड्वक्तव्य' इति 'प्रमाणे द्वयसज्' (५।२।३७) इत्यत्र वाच्यम् । रुद्रस्य पूर्वनिपातार्थं राजदन्तादिः कल्पनीयः । एवं च षोडशीत्यादि ।। कथं 'पञ्चपूल्य इमाः' ? उच्यते । एकशेषो भविष्यतीति रक्षितः ।। कथमेकपूली ? उच्यते । एकस्मिन्नेव समारोपितबहुत्वादिति रक्षितः ।। कथं 'चतुर्दिशीमेघोदयः' ? उच्यते । 'दिशा वाचा गिरा क्षुधा' इत्यजादिपाठात् हलन्तात् टापि । दिशाशब्देन द्विगौ 'आवन्तो वा' इति पक्षे नपुंसकत्वेन नपुंसकह्रस्वत्वे (चतुर्दिशमिति) रूपम् । अन्यत्र पक्षे समुदायिभ्योऽन्यः समुदाय इति दर्शने एकत्वाभावेऽपि 'द्विगोः' इति (४।१।२१) ङीप् । चतुर्दिशीति रूपमिति पञ्चगुप्रस्तावे रक्षितः । 'चतुर्दिशीशानवमन्य मानिनी' इति कुमारः । हलन्त दिक्छब्दस्य द्विगौ चतुर्दिगोशानिति वा पाठः ।।

एकादशरुद्रमिति । अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यत इति वचनस्य काचित्कत्वात् । एकशेष इति । पञ्चपूली च पञ्चपूली च पञ्चपूलीचेत्येकशेषे द्विग्वर्थसमुदायस्याद्विग्वर्थत्वात् बहिरङ्गत्वाच्च प्राथमकल्पिके द्विग्वर्थे चरितार्थत्वाच्चैकवद्भावो न प्रवर्त्तत इत्युक्तं कैयटेन । एतेनैकशेषेऽपि शिष्यमाणस्य द्विगुत्वादेकवद्भावः कथं नेत्यपि निरस्तं वेदितव्यम् । एकस्मिन्नेवेति। एतच्च 'संख्यापूर्वो द्विगुः' इत्यत्र व्याख्यातम् 'एकापूपी' इत्युदाहरणप्रसङ्गे । 'आवन्तो वा' इति । अपथं नपुंसकम् इत्यत्र वार्तिकमिदं भाष्ये पठितम् । अन्यत्र पक्ष इति । नपुंसकत्वाभा-

वपक्षे इत्यर्थः । समुदायिभ्योऽनन्यः इति । अत्र द्वयं दर्शनम्—समुदायिभ्योऽनन्यः समुदाय इत्येकम् । अत्र समुदायिनोऽनेकत्वेन बहुत्वप्राप्तोवकवत्त्वातिदेशः प्रकृतसूत्रेण । समुदायिभ्योऽन्यः समुदाय इत्यपरं दर्शनम् । अत्र च पक्षे समुदायस्यैकत्वात् स्वत एवैकवचनमिति सूत्रं नारम्भणीयमिति 'न वा समाहारैकत्वात्' इत्यनेन भाष्य उक्तम् । प्रथमे पक्षे समाहारशब्दः कर्मसाधनः । द्वितीये तु भावसाधन इतिविशेषः ॥ एकवत्त्वाभावेऽपीति । अनेनातिदेशेनेत्यर्थः । इतः परं स्वत एव समुदायैकत्वादेकत्वेनेति पूरणीयम् । एकत्वाऽभावेत्यपपाठः ॥

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २।४।२ ॥

कथं 'ग्रीवाकुक्षिललाटेषु नित्यं स्वेदः प्रशस्यते' । तथा 'मुखनासिकाभ्यां यो वायुर्निष्क्रामति' इति ? उच्यते । दधिपयआदेराकृतिगणत्वादिति रक्षितः । 'नासिकास्तनयोर्ध्माधेटोः' (३।२।२९) इति निर्देशादनित्यत्वाद्वा । एकशेषेण वा । शाकपार्थिवादित्वाद्वा । नासिकाया विवरभेदाद् द्वित्वात् । ललाटस्य जात्यपेक्षया बहुवचनम् । एवञ्च चञ्चुचरणैर्लोहितैः सिता' इत्यमरः । तथा 'पातितै रथनागाश्वैः' इति चण्डी, 'दन्तमुष्टितलैः' इति च । साध्याभेदा'ज्जातिरि'त्यस्य परत्वमनभिसन्धायोक्तमस्माभिः । अत्र तु प्रकारान्तरं 'दन्तमुष्टितलैः' इति दन्तनिर्मितच्छुरिकामुष्टिः । केचिद् दन्तमुष्टितलैरिति क्तान्तं पठन्ति दन्तमुष्टतलैरिति ॥

रक्षित इति । वर्धमानोऽप्येवमाह (श्लो० १२८) । एकशेषेणेति वेति । नासिकास्तनयोरिति । अत्र इतरेतरद्वन्द्वेन न निर्वाहः, प्राण्यङ्गादीनां समाहार एव द्वन्द्व इत्येवं नियमार्थत्वादस्य सूत्रस्य । शाकपार्थिवादित्वाद्वेति । तथा च नायं द्वन्द्व इति नैकवत्त्वप्रसक्तिः । एवं ग्रीवाकुक्ष्यादिष्वपि बोध्यम् । अस्मिन् समासे उत्तरपदार्थस्यैकत्वाद् द्विवचनादि कथमित्युपपादयति—नासिकाया इत्यादिना । अन्यान्यपि शाकपार्थिवादिसमासोदाहरणानि संगृह्णाति—एवञ्चेत्यादिना । चञ्चुचरणैरित्यत्र चञ्चुसहितैश्चरणैरिति क्षीरस्वाम्यपि प्राह । एवमग्रेऽपि । ग्रीवादीनां प्राण्यङ्गत्वेऽपि स्वतोऽप्राणित्वेन 'जातिरप्राणिनाम्' इत्यनेनैव परत्वादेकवद्भाव उचितः, ततश्च कथमेषां प्रकृतसूत्रोदाहरणत्वमित्याह—साध्याऽभेदादित्यादिना । साध्य एकवद्भावः । ननु तथापि परत्वाज्जातिरप्राणिनामिति सूत्रेणैवैकवत्त्वशङ्कासमाधानाद्युचितमित्यत आह परत्वमनभिसन्धायेति । अनभिसन्धानं च अन्यत्र सूत्रसार्थक्यहेतुकं बोध्यम् । वस्तुतस्तु जातिप्राधान्य एवोत्तरसूत्रप्रवृत्तिरिति व्यक्ति-

प्राधान्ये प्रकृतसूत्रेणैव निर्वाहः। तथा च विषयभेदात्साध्याभेदोऽकिञ्चित्कर एवेति विभावयन्तु सुधियः ॥

**अध्ययनतोऽविप्रकृष्टाख्यानाम् ॥ २।४।५ ॥**

कथं 'छात्रोपाध्यायम्', नात्राध्ययनमिति ? कर्मसाधने ग्रन्थकृता प्रत्यासत्तिरिति रक्षितः ॥ सम्बन्धाभ्यर्हितत्वादुपाध्यायस्य पूर्वनिपातो युक्तः ? उच्यते। पूर्वनिपातप्रकरणस्यानित्यत्वादित्युक्तं प्राक् ॥

अध्ययनशब्दो भावसाधनः, अधीतिरध्ययनमिति कथं छात्रोपाध्यायमित्यत्राध्यनकृता प्रत्यासत्तिरिति प्रश्नः। समाधत्ते– कर्मसाधन इति। तथा चाधीयत इत्यध्ययनमिति ग्रन्थकृताऽपि प्रत्यासत्तिः सूत्रप्रवृत्तौ निमित्तम् इत्युपपत्तिः। एषा च न्यासेऽप्युक्ता। सम्बन्धेत्यादिशङ्कासमाधाने अल्पाच्तरम् इत्यत्र व्याख्याते। अनित्यत्वादिति अभ्यर्हितत्वप्रयुक्तपूर्वनिपातस्यापि श्वयुवमघोनामिति निर्देशेनानित्यवं बोध्यम्।

**जातिरप्राणिनाम् ॥ २।४।६ ॥**

कथं 'रञ्जिता नु विविधास्तरुशैलाः' इति भारविः ? उच्यते। तरुप्रधानाः शैला[1] इति शाकपार्थिवादिः ॥

तरुप्रधाना इति। तरुसहिता इत्यपि बोध्यम्। द्रव्यप्राधान्यविवक्षया बदरामलकानीति वद्वा समाधेयम्। भागवृत्तिकृत 'रञ्जितं न विविधं तरुशैलम्, इत्येव मन्यते ॥

**येषां च विरोधः शाश्वतिकः ॥ २।४।९ ॥**

कथं 'देवासुरैरमृतमम्बुनिधिर्ममन्ये' इति भारविः ? उच्यते। देवानामसुराणां च कादाचित्को विरोध इति रक्षितः। यत्र द्वन्द्वो विरोधमाचष्टे स विरोधविषयः। न चात्र द्वन्दो विरोधमाचष्टे सामञ्जस्यात् ॥

विरोधम् इति। शाश्वतमिति भावः। एतदेव समाधानं शेखरादावप्युक्तम् ॥

**स नपुंसकम् ॥ २।४।१० ॥**

कथं 'स्वप्नोदयशशी मायाकारः न तु ( ? )[2] गिरिसागरविहार'

---

१. प्रधानशैला' इति मु० पाठः।

२. 'न गङ्गा' इति मातृकायाम्, 'सागर'—इति शास्त्रिसम्मतः पाठः।

इति समाहारद्वन्द्वे क्लीबत्वप्रसङ्गात् ? उच्यते। सग्रहणं प्रसिद्ध्युपसङ्ग्रहार्थम्। तेन 'युवोरनाकौ' (७।१।१) इति न क्लीबत्वम्। अथवा द्वन्द्वेन विहारस्य मध्यमपदलोपी वा समासः नपुंसक एव वा पाठः॥

उपसंग्रहार्थमिति। तथा च यथादर्शनमियं लिङ्गव्यवस्थेत्यर्थः। क्लीवत्वम् इति। 'कयोर्युवोः' इति भाष्यप्रामाण्यात्त्वत्रेतेरद्वन्द्व एवेति युक्तम्॥

**सभा राजामनुष्यपूर्वा ॥ २।४।२३ ॥**

कथं 'नृपतिसभामगमन्न वेपमाना' इति कीचकवधे ? नृपतिरिति गजपतिवद्, न राजपर्याय इति रक्षितः। यद्वा नृणां पतिर्यस्यां सभायामिति बहुव्रीहौ कर्मधारयः। एव'ञ्चानञ्कर्मधारयः' इत्यनुवृत्तेर्न क्लीबत्वम्॥

गजपतिवादित्यतः परं 'राजविशेषस्य वाचकः' इति पूरणीयम्। यद्वेत्याद्युद्भाष्यं समाधानम् अनञ्कर्मधारय इति 'तत्पुरुषोऽनञ्कर्मधारयः' इति सूत्रादित्यर्थः॥

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २।४।२६ ॥**

कथं 'गृहस्थूणं, शशोर्णम्' इति वररुचिलिङ्गकारिका, अमरलिङ्गसङ्ग्रहश्च। अनेन परवल्लिङ्गता स्यात् ? उच्यते। 'असिद्धवदत्राभात्' ( ६।४।२२ ) इतिवत् परवल्लिङ्गमिति वतिनिर्देशो व्यभिचारार्थः। लोकाश्रयत्वाद्वा क्लीबत्वम्। तथा च भाष्यम्—'गृहशशपूर्वयोः स्थूणोर्णयोर्नपुंसकत्वम्' इति ( अटवर्मित्रशत्रुम् ? )॥

व्यभिचारार्थं इति। दृष्टान्ते व्यभिचार एव 'वुग्युटावुवङ्यणौ सिद्धौ वक्तव्यौ' इति प्रतिफलति॥ लोकाश्रयत्वादिति। एतच्च तदशिष्यं संज्ञाप्रमाणत्वात्' इत्यादिना लभ्यम्॥

**रात्राह्नाहाः पुंसि ॥ २।४।२९ ॥**

कथं 'गणरात्रं निशा बह्वयः' इत्यमरः। 'अच्प्रत्यन्ववपूर्वात् सामलोम्नः' ( ५।४।७५ ) इत्यत्राजिति सोमनन्दी। अत्रानेन पुंस्त्वं स्यात् ? उच्यते। गणशब्दोऽयं बहुत्ववाची समूहवाची च। अत्र

बहुत्ववाचित्वे गणानां रात्रीणां समाहार इति समाहारे द्विगौ कृते समासे 'समासान्ता अनवयवा' इत्यस्मिन् दर्शने अकारान्तोत्तरपदत्वाभावाद् 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति न स्त्रीत्वम्। 'स नपुंसकम्' ( २।४।१७ ) इति क्लीबत्वात् पात्रादित्वाद्वा क्लीबत्वमित्यमरकोशटीका। समूहवाचित्वे तु रात्रेर्गणसमासे राजदन्तादित्वात् परप्रयोगे लोकाश्रयत्वात्। क्लीबत्वं शतं सहस्रं यथा। तदुक्तम्—'लिङ्गमशिष्यं लोकाश्रयत्वात्' इति। तथा च नपुंसककाण्डे अमरः—'रात्रं प्राक् सङ्ख्यान्वितम्' इति। गणशब्दस्य 'बहुगणवतु' इति ( १।१।२३ ) सङ्ख्यासंज्ञा। एवञ्च 'द्विरात्रत्रिरात्रपञ्चरात्रादीनां क्लीवत्वम्'। अभिधेयलिङ्गापवादोऽयम्। तेनाह्नो निर्गतो निरह्नो वेति रक्षितः। कथं तर्हि द्वयोरह्नोर्भवा पूजा यद्वा पूजेति स्त्रीत्वम्? 'तत्पुरुषयोः' इत्यनुवृत्तेर्द्वन्द्वसाहचर्यात् समासपदार्थाभिधेयग्रहणम्। इह तु भवार्थाभिधेयस्तत्पुरुषः। न च टित्वादत्र ङीप्, 'अनुपसर्जनात्' ( ४।१।१४ ) इति प्रतिषेधात्॥

अजिति। योगविभागादिति शेषः। अहः सर्वैकदेश० इत्यनेन वा गणशब्दस्य संख्यात्वमाश्रित्य। अनवयवा इति। एतच्च 'समासान्ताः' इति सूत्रेऽन्तशब्दस्य समीपवाचित्वेन लभ्यते। यथा तु भाष्यादिसम्मतिस्तथा त्ववयववचन एव तत्रान्तशब्द इति समासावयवा एवेति स्पष्टं 'समासान्ताः' इत्यत्र 'ङ्याप् प्रातिपादिकात्' इत्यत्र च भाष्ये। अकारान्तोत्तरपद इत्यादि वार्त्तिकमपथं नपुंसकमित्यत्र भाष्ये पठितम्। टीकेति। स्वामी तु समाहारातिरिक्तविषयकमस्य सूत्रस्य मत्वा समाधत्ते। न्यासकृदादयस्तु नैतन्मन्यन्ते। तथा च 'संख्यापूर्वा रात्रिः' इति लिङ्गानुशासनसूत्रात्, 'भवति नपुंसकयोगः संख्यापूर्वस्य रात्रिशब्दस्य' इति वररुचिकारिकायाश्च नपुंसकत्वम्। तदुक्तं समासान्ता इत्यत्र भाष्य इति शेषः। द्विरात्रेत्यादि वृत्तौ तु पुंस्त्वमुक्तम्, समासभेदेन वा कथञ्चित्समाधेयम्॥ कोशे यद्यपि गणशब्दस्य बहुत्वार्थकस्यैव ग्रहणं तथापि प्रकारान्तरेण समाधत्ते—बहुत्वेत्यादिना प्रतिषेधादिति। भाष्यमते तु अजेवात्र न टजिति प्रसक्तिरेवनेति। ठञ्निमित्तकोङीप्तु न, तस्य द्विगोर्ल्युगमपत्य इति लुकापहारात्। ठञोयोऽकार इति ङीप्सूत्रे व्याख्यानाद्वर्णाश्रयत्वेन प्रत्ययलक्षणमपि। द्विगोरित्यस्य तु अपरिमाणबिस्तेति निषेध इति टावेव। नागेशादयस्तु पुंस्त्वमेवात्र युक्तमिति वदन्ति॥

**अपथं नपुंसकम् ।। २।४।३० ।।**

कथम् 'अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' इति ? उच्यते । समासान्तनिर्देशात् ।। कथं 'विपथः[1] कदध्वा कापथः समाः' इत्यमरः । 'पथः सङ्ख्याव्ययादेः' इति क्लीबत्वात् । कुशब्दस्याव्ययस्य 'कुगतिप्रादयः' ( २।२।१८ ) इत्यत्र गतिसाहचर्याद् ग्रहणम् । अव्ययत्वं चासंख्यात्वाद् 'विभक्तिस्वरप्रतिरूपकाश्च' इति रक्षितः । 'विपथं कदध्वा कापथं समाः' इति वा पाठः कर्तव्यः । तथा क्लीबलिङ्ग-कारिका—'पथः सङ्ख्याव्ययात् परः' इति । 'लिङ्गमशिष्यं त्वेका-श्रयत्वाद्' इति कश्चित् । 'पथ' इति कृतसमासान्तनिर्देशाद् 'अतिपन्थाः सुपन्थाश्च' इति कोशः । अत्र समासान्तत्वं तु न 'न पूजनात्' ( ५।४।-५९ ) इति ।।

अपन्थानमिति । तत्पुरुषोयम् । निर्देशादिति । तथा त्र 'पयो विभाषा' इति समासान्तपक्षे एव सूत्रप्रवृत्तिः । न्यासादौ स्पष्टमेतत् । पथः संख्येत्यादि वार्त्तिक-मत्र सूत्रे भाष्ये पठितम् । ननु कुगति-सूत्रे पृथिव्यर्थकस्यैव कुशब्दस्य ग्रहणमिति कथं कापथादौ समास इत्यत्राह—अव्ययस्येति । विपथमिति । वामनादिसम्मतं चैतत् । पुंस्त्वत्वदन्तपथशब्देन समासे निर्वाह्यम् । एतेनैव कुपथो व्याख्यातः । पथ-शब्दश्च 'पथे गतौ' इत्यस्मात्पथाद्यजन्त इति मनोरमायां स्थितम् । 'वाटः पथश्च-मार्गः स्यात्' इति त्रिकाण्डषेशोऽपि । अयं च पथशब्दोऽर्धर्चादित्वादुभयलिङ्ग इत्यादि स्पष्टं पत्लृ-धातौ माधवग्रन्थे । विस्तरस्तत्रैव द्रष्टव्यः । इदं सूत्रं तत्पुरुष एव प्रवर्त्तते, परवल्लिङ्गतापवादत्वादित्यपि माधवादिग्रन्थे उक्तम् । अन्ये तु नैतन्मन्यन्ते । समासान्तेति । तेन पचाभाजन्ते न नपुंसकत्वमिति भावः । एतदपि विप्रतिपन्नम् अतिपन्था इत्यादि । न पूजनादित्यत्र स्वतीपूजायामिति नियमा-त्सत्पथ इत्यत्र समासान्तः ॥

**द्वितीयाटौस्स्वेनः ।। २।४।३४ ।।**

कथम्—

हे रोहिणि ! त्वमसि शीतकरस्य भार्या
एनं निवारय पतिं सखि ! दुर्विनीतम् ।

1. 'विपथं' इति मुद्रितः पाठो न मूले लभ्यते ।

जलान्तरेण मम वासगृहं प्रविश्य
श्रोणीतटं स्पृशति किं कुलधर्म एषः ।।

एनमिति न स्याद् अन्वादेशाभावात् ? उच्यते । 'श्रोणीतटं स्पृशति किं कुलधर्म एष' इति योजयित्वा एनं निवारयेति योज्यम् । 'बहुवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव' इति वेणी । अत्र एतामिति पाठः कर्तव्यः ।।

अन्वादेश इति किञ्चित्कार्यं विधातुं पूर्वमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । योज्यमिति । श्रोणीतटमित्यादिना पूर्वमुपात्तस्य पुनः सर्वनाम्नोपादानेनान्वादेशत्वमुपपन्नमित्यर्थः ।।

## अस्तेर्भूः ।। २।४।५२ ।।

'लावण्य उत्पाद्य इवास यत्नः' इति कुमारः । अनेन भूभावेन भाव्यम् ? उच्यते । 'अस गतिदीप्त्यादानेषु' । अस्मादुभयपदिनः । 'केचिदनुप्रयोगादन्यत्रास्तेर्भूभावं नेच्छन्ति' इति धातुप्रदीपः ।।

अस गतीत्यादि । मैत्रेयादयोप्येवमेवाहुः । धातूनामनेकार्थत्वाच्च सत्तार्थकत्वम् इति चारित्रवर्धनादयः मल्लिनाथस्तु दीप्त्यर्थत्वमेवाह । तिङन्तप्रतिरूपकमव्ययं बभूवेत्यर्थं इति शाकटायनादयः । बल्लभादयस्तु तादृशतिङन्तस्यैवाभावादयुक्तमेवैतदिति वर्णयन्ति । चान्द्रैः पुनरनुप्रयोगादन्यत्रापि क्वचिदस्तेर्भूभावो नेष्यते । तदेव संग्रहीतं रक्षितेन—केचिदित्यादिना । अनुप्रयोगे तु न भूभावः । तदुक्तम् अत उत्० सूत्रभाष्ये श्लोकवार्तिके—

अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः ।। इति ।।

## ब्रुवो वचिः ।। २।४।५३ ।।

कथं 'प्रेष्यब्रुवोः' ( २।३।६१ ) इति ? लाघवार्थमज इति वक्तव्ये 'अजो'ति इका गुरुनिर्देशात् । तेन ज्ञापयत्यार्धधातुकीयं कार्यमनित्यमिति । सामान्यज्ञापकात् क्विपि न वच्यादेशः । तथा च 'विकृतिः कटके कृताऽजिरैः'[१] इति प्रयोगः । एतदेव 'अजेर्व्यघञपोः' ( २।४।५६ ) इत्यत्र रक्षितेन सूचितम्, ज्ञापकसमुच्चये लिखितम् ।।

---

१. 'कृता जनैः' इति मातृकायाम् ।

अजीति । अजेर्व्यघञपोरित्यत्रेति शेषः । गुरुत्वं श्रूयमाणप्रत्ययनिमित्तकम् । ज्ञापकसमुच्चयः पुरुषोत्तमदेव कृतो ग्रन्थः ॥

**अजेर्व्यघञपोः ॥ २।४।५६ ॥**

कथं 'वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः' इति कुमारः । अनेन वीभावे वीयत इति स्यात् ? उच्यते । 'ईज गतिकुत्सनयोरि'-त्यस्य रूपम् । एवं रक्षितः[1] ? 'वातवीजनैरि'ति च ॥

'एवं दीक्षित' इति मुद्रितपाठस्थाने 'एवं रक्षितः' इति पठनीयम्, रक्षितेन धातुप्रदीपे तथोदाहरणात् (ईज गतिकुत्सनयोः १७९....वीज्यते) । चारित्रवर्धनेन चैवमुक्तम् ॥

**वा यौ ॥ २।४।५७ ॥**

कथं 'धवित्रं व्यजनम्' इत्यमरः । व्यजनमिति नित्यं न स्यात् । अनेन पक्षे वीभावात् ? उच्यते । 'संज्ञाच्छन्दसोर्बहुलम्' इति वार्तिकं सामान्येन प्रकरणे कार्यव्यभिचारार्थमिति व्याख्यातम् । व्यवस्थित-विभाषात्वाद्वा ॥

'धवित्रं व्यजनम्' इति । धवित्रं गाङ्कुटादिसूत्रे व्याख्यातम् । संज्ञाछन्दसो-रिति । एतच्च 'बहुलं तणि' इति वार्तिकार्थवर्णनपरं वृत्त्यादिषु पठितम् । वेति । यदि तु "नेयं विभाषा । किन्तर्हि ? आदेशो विधीयते—वा इत्ययमादेशो भवत्यजेर्यौ परतः । वायुरिति" ॥ भाष्यमाद्रियते तर्हि तु विकल्पप्रसङ्ग एव नेत्यपि ज्ञेयम् ॥

**तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ २।४।६२ ॥**

कथम्—

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्यौघनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥

इति वेणी । यतः 'कुर्वादिभ्यो ण्यः' ( ४।१।१५१ ) इत्यक्षत्रिय-वृत्तिकुरुशब्दात् ( सावकाश इति क्षत्रियवृत्तेः 'कुरुनादिभ्यो ण्यः'

१. दीक्षित इति मुद्रितः पाठः ।

( ४।१।१७२ ) इति भाव्यम् । तस्य च तद्राजत्वाल्लुक् । तथा च भारविः 'चिराय तस्मिन् कुरवश्चकासति' ? उच्यते । 'कुर्वादिभ्यो ण्यः' इत्यत्रापि क्षत्रियगोत्रग्रहणानुवृत्तेः सोऽपि क्षत्रियगोत्रवचनादेव । तस्यातद्राजत्वादलुगिति भागवृत्तिः । जयादित्यमते तु द्वयोरेकस्मिन् वा 'कुरुनादिभ्यो ण्यः' इति कौरव्यशब्दमुत्पाद्य ततः 'तत्र साधुः' ( ४।४।९८ ) इति यत् । अकारलोपयलोपौ कृत्वा कौरव्यो दुर्योधनो द्रोणो दुश्शासन इत्यादय उच्यन्त इति वाच्यम् ॥ यद्येवं 'परस्परं परिरेभिरे कुकुरकौरवस्त्रियः' इति माघः तथा 'सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः !' कच्छादि ( ४।२।१३३ ) पाठाद् 'मनुष्यतत्स्थयोश्च' ( ४।२।१३४ ) इति वुञा भाव्यम् ? उच्यते । शब्दव्युत्पत्तेर्विवक्षाधीनत्वात् । मनुष्याणां कुरुशब्देनाविवक्षितत्वान्न वुञ् । ततश्च तस्येदमर्थेऽण् । जनपदविवक्षायां वाञ् । 'विषयो देशे' ( ४।२।५२ ) इति अणि ता(त्स्थ्या)दिति[१] भागवृत्तिः । कथं तस्यामेव 'रघोः पाण्ड्याः प्रतापं न विषेहिरे' इति रघुः, यतो 'वृद्धेत्कोसल' ( ४।१।१७१ ) इत्यत्र जनपदशब्दात् 'पाण्डोड्र्यण् वक्तव्यः' इति ड्यणि तस्य तद्राजत्वाल्लुका भाव्यम् ? उच्यते । पाण्डौ साधवः पाण्ड्याः । 'तत्र साधुः' ( ४।४।९८ ) इति यत् ॥

अत्र कौरव्या इति कथमिति प्रश्नः । लुगिति । बहुत्वादिति हेतुरत्र बोध्यः । क्षत्रियगोत्रग्रहणानुवृत्तेरिति । अत्रेदं ज्ञेयम्—'यूनि लुक्' (४।१।९०) इत्यत्र 'प्राग् गोत्रसंज्ञायाः गोत्रे कुञ्जादिभ्यः इत्यतो गोत्रग्रहणानुवर्त्तनात्' इति कैयटोक्तेरत्रापि गोत्रग्रहणानुवृत्तिर्भवति । तथा च तदनुरोधेन कुर्वादिभ्यो ण्य इत्यत्र कुर्वादिशब्दः क्षत्रियवाचक इति प्रकृते क्षत्रियगोत्रलाभ इति । वृत्तौ तु 'शिवादिभ्योण्' इत्यत्रैव गोत्रग्रहणनिवृत्तिरुक्ता, तन्मतेन कौरव्या इत्युपपादयति प्रकारान्तरेण—जयादित्येत्यादिना । अलोपो 'यस्येति च' इति इत्यनेन, यलोपः 'हलो यमाम्' इति सूत्रेण बोध्यः । भाषावृत्तौ तु कुरुशब्दोत्र मुनिवचन इत्यप्युक्तम् ।

विवक्षेति । एतच्च 'तदाद्याचिरव्यासायाम्' इत्यनेन लभ्यत इत्युक्तपूर्वम् । ननु विषयो देश इत्यणन्तस्य कौरवशब्दस्य कथं विवक्षितार्थकत्वमित्यत आह—

१. 'ता(त्पर्या)दिति' गणपतिशास्त्रिसंशोधनमयुक्तम् ।

तात्स्थ्यादिति । 'तात्पर्यादिति' गणपतिशास्त्रिकल्पितः पाठोऽयुक्तः । तथा चौपचारिकोयं प्रयोग इति भावः । पाण्डौ साधव इति । पाण्डेय साधव इति दीक्षिताद्युक्तन्तु चिन्त्यम्, ड्यणं विनैव विवक्षितार्थलाभात् ॥

**अदिप्रभृतिभ्यः शपः ॥ २।४।७२ ॥**

कथम् 'न विश्वसेत् पूर्वविरोधितस्य' इति पञ्चतन्त्रम् । आश्वसेयुर्निशाचराः' इति भट्टिः ? पचाद्यजन्तादाचारे क्विपि लिङि रूपम् । गणकार्यमनित्यमिति ('आश्वस्युश्च…' इति वा) जयमङ्गला । भूवादेराकृतिगणत्वात् तत्र द्रष्टव्य इति । वृत्करणं तु यजादिसमाप्त्यर्थम् ॥ कथं 'वासुदेवं परित्यज्य योऽन्यं देवमुपासते' ? अस 'गतिदीप्त्यादानयोरि'ति भौवादिकस्योभयपदिनः ॥

पञ्चतन्त्रमिति । इदं पद्यं शार्ङ्गधरपद्धतावपि (प० सं० १३०१) लभ्यते । जयमङ्गलेत्यतः पूर्वं तदनुसारेण योजितः पाठो मूलेऽनुपलम्भात् कोष्ठके स्थापितः । गणकार्यमनित्यमिति च क्षमूषो घटादिपठितस्य 'घटादयष्षितः' इत्यनेनैव षित्त्वातिदेशे सिद्धेऽपि पुनः षित्करणेन ज्ञापितम् । तनादिकृञ्भ्य इत्यत्र कृञ्ग्रहणेन च । एतच्च न युक्तमिति परिभाषेन्दुशेखरादौ स्पष्टम् । तथाप्रयोगश्चार्षत्वादेव समाधेय इति स्पष्टं नदीसंज्ञासूत्रभाष्यकैयटादौ । एतेन 'न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्', 'प्रत्ययादाश्वसन्त्यः' इत्यादयोऽपि व्याख्याता एव ॥

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ २।४।७७ ॥**

कथं 'मा भैः शशाङ्क ! मम सीधुनि नास्ति राहुः' इति । सिचो भावान्मा भैषीरिति प्राप्नोति । तथा च भट्टिः—'मा स्म भैषीस्त्वयाद्यैव कृतार्थो द्रक्ष्यते पतिः' इति ? उच्यते । आगमशासनानित्यत्वाद् 'अस्तिसिचोऽपृक्ते' (७।३।९६) इति नेट् । ततो 'हल्ङ्यादिना' (६।१।६८) सिलोपे सिचो विसर्जनीयः । अथवा निर्देशे केनचिदाचार्येण भीग्रहणमपि ग्राहितम् । 'गातिस्थाघुपाभूम्यः' (२।४।७७) इति पञ्चम्येकवचनम् । तत 'एरनेकाचः' (६।४।८२) इति यणादेशे भूभ्य इति निर्देशात् । एतन्मते सिचो लोपे रूपम् ॥

**इति शरणदेवविरचितदुर्घटवृत्तौ द्वितीयाध्याये चतुर्थः पादः ॥**

आगमशासनानित्यत्वादिति। एतच्च 'आनि लोट्' इत्यत्र 'नि लोट्' इत्येवं-न्यासेनैव सिद्धे 'आनि'ग्रहणाल्लभ्यते। एतच्च भाष्याद्यसम्मतमिति स्पष्टं शेखरादौ। निर्देश इति। 'गाति''''भूभ्यः' इत्यत्रेत्यर्थः। भियो निर्देशस्या-साम्प्रदायिकत्वेन 'मा भैः' इत्यादयः प्रयोगाः प्रामादिका एवेति मन्तव्यम्॥

इति श्रीनारायणमिश्रविरचितायां दुर्घटवृत्तिविवृतौ द्वितीयाध्यायस्य चतुर्थः पादः॥

॥ इति द्वितीयाध्यायः॥



## अथ तृतीयाध्याये प्रथमः पादः ॥

### प्रत्ययः ॥ ३।१।१ ॥

### धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ३।१।७ ॥

कथं नदी कूलं पिपतिषतीति, कूलस्याचेतनत्वादिच्छाया असम्भवात् ? उच्यते । पदसंस्कारेण ॥ कथं मुमूर्षति, मरणस्यानिच्छाविषयत्वात् ? उच्यते । अतिदुःखितस्य मरणमपीप्सितमिति । तद् दृश्यते—'ईदृशं नाम तद्दुःखं येनेदं मरणं सुखम्' इति ॥

पदसंस्कारेणेति । वस्तुतोऽस्य पक्षस्य हेयत्वाद्भाष्योक्तान्येव समाधानानि युक्तानि । तत्र लोष्टविशरणादिप्रवृत्त्या कूलेऽप्यनुमितिरिच्छायाः, इच्छा च सर्वत्राचेतनेष्वपि चेतनाधिष्ठितत्वादिति श्रुतिः । एतेन श्वा मुमूर्षतीत्याद्यपि व्याख्यातम् । ग्रन्थकृत्तु प्रकारान्तरेण व्याचष्टे ॥

### कर्तुः क्यङ् सलोपश्च ॥ ३।१।११ ॥

कथं 'कस्त्वं भो निशि केशवः शिरसिजैः किं नाम गर्वायसे, चक्री चन्द्रमुखीं प्रयच्छसि स मे कुत्रों घटीं दोहिनीम्' । उपमानाद्यभावात् क्यङोऽभावात् ? उच्यते । गर्वयोगाद्गर्वः, अर्शआदित्वादचि रूपम् । गर्वः पुरुषः । ततः अगर्वो गर्वो भवतीति भृशादित्वात् क्यङि गर्वायते ॥

अस्मिंश्चन्द्रमसि प्रसन्नमहसि व्याकोचकुन्दत्विषि
प्राचीनं खमुपेयुषि त्वयि गते दूरं निजप्रेयसि ।
श्वासः कैरवकोरकीयति मुखं तस्याः सरोजीयति
क्षीरोदीयति मन्मथो दृगपि च द्राक् चन्द्रकान्तीयति ॥

कथं कैरवकोरकीयतीत्यादि । 'उपमानादाचारे' ( ३।१।१० ) इति क्यच् विधीयते यथा पुत्रीयति च्छात्रमिति । न चात्र कैरवकोरकादिकमिव ( श्वासाद)यः किञ्चिदाचरन्ति, किं तर्हि त एव कैरवकोरकादि

यथात्मभावमाचरन्तीति । अतः 'कर्त्तुः क्यङ् सलोपश्च' (३।१।११)इति क्यङ् युज्यते ? उच्यते । आत्मानमित्युपमेयं द्रष्टव्यम् । तदयमर्थः—श्वासः कैरवकोरकमिवात्मानमाचरति । एवञ्च 'उपमानादारे' इत्येव क्यच् ।। कथं 'प्रायः पुण्यवतां देशे शरदियं प्रावृषायते', क्यङि प्रावृष्यत इति हि स्यात् ? उच्यते । प्रावृषेति तृतीयान्ते अयवयमयेति अयति-धातोरयत इति । प्रावृषाशब्दोऽयं टाबन्तः । 'कालप्रभाता शरदा प्रावृषा तु जलार्णवा' इति कोशः । शरदि वर्षति वासव इति । केचित्तु ( वा ? ) क्षरं पठन्ति ।।

भृशादित्वादिति । अत्र गर्व ( गर्वयुक्तपुरुष ) इवाचरसीत्यर्थे प्रकृतसूत्रेणापि क्यङ् सम्भवतीति विवेचनीयम् ।

कथमिति । उपमानस्य कैरवकोरकादेः कर्तृत्वेन क्यङ् युक्त इति प्रश्नः । किं तर्हीत्यादि । यथा कैरवकोरकादय आचरन्ति तथा श्वासादयोपीत्यर्थः । प्रावृषायत इति । प्रावृष उपमानस्य कर्तृभूतत्वेन क्यङि युक्तं प्रावृष्यत इति रूपमिति भावः । अयत इति । अनुदात्तेत्त्वादात्मनेपदमित्याशयः । प्रावृषेति 'सहयुक्ते' तृतीया विनापि सहार्थशब्दयोगम् । समाधानान्तरमाह—टाबन्त इति । अदन्तत्वं चार्श आद्यजन्तत्वात् । तथा च प्रावृड्युक्तः कालः प्रावृष इति । स्त्रीत्वविवक्षायां प्रावृषा इति, सेवाचरतीति प्रावृषायत इत्युपपन्नम् ।।

**बाष्पोष्मभ्यामुद्वमने ।। ३।१।१६ ।।**

कथं 'धूमायन्त इवाश्लिष्टाः' इति, अनेन क्यङोऽभावाद् ? उच्यते । 'फेनाच्चेति वक्तव्यम्' इति केचित् 'फेनधूमाभ्याम्' इति पठन्ति । चकारानुवृत्तिसाध्यत्वादस्य । एवं चात्र 'लालायितः फणी' इति भाष्यकारप्रयोगः ।।

केचिदिति । "धूमाच्च' इति भर्तृहरिः" इति भाषावृत्तौ । चकारेति । एतच्च भृशादिभ्य इति सूत्रादिति स्पष्टं न्यासे ।।

**नित्यं कौटिल्ये गतौ ।। ३।१।२३ ।।**

कथं 'यायावराः पुष्पफलेन चान्ये' इति भट्टिः, गत्यर्थादनेन नियमात् समभिहारे[1] यङोऽभावात् ? उच्यते । 'सर्वे गत्यर्था ज्ञानार्थाः' इति ज्ञानार्थत्वात् ।।

---

१. समभिव्याहारे' इति मुद्रितः पाठोऽयुक्तः ।

नियमादिति। कौटिल्य एवेत्यादिः। समभिहारे = क्रियासमभिहारे। अभावादिति। एतच्च 'क्रियासमभिहारे च नैतेभ्यः' इत्यनेन धातोरेकाच इत्यादिसूत्रभाष्य उक्तम्। ज्ञानार्थत्वादिति। तथा च गत्यर्थकेभ्य एव कौटिल्यनियमान्नात्र कौटिल्याभावे यङनुपपत्तिः। माधवस्तु 'यश्च यङः' इत्यत्र चकारः पुनर्वरज्विधानार्थं इत्यकौटिल्येपि यङ् भवतीति मन्यते॥

**लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्॥ ३।१।२४॥**

कथं 'चरैराचरचञ्चुरा' इति भट्टिः, गत्यर्थत्वादनेन चरेर्भावगर्हायां यङो विधानात्? उच्यते। क्रियागर्हा तत्र विवक्षिता पदसिद्ध्यर्थम्॥

तत्र = सूत्रे। विवक्षितेति। अत्र चञ्चुरेत्यत्र सा न विवक्षितेत्यर्थः॥

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्॥ ३।१।२५॥**

कथं 'लिखापयति, वर्णापयति' इति कायस्थप्रयोगः? उच्यते। 'अर्थवेदसत्यानामापुग् वक्तव्यः'[1] इत्याकारे पुकि वा वक्तव्ये आपुको विधानमन्यत्र भावार्थम्। तेन लिखापयतीत्यादिरिति रक्षितः। आकारे कृते 'अर्त्तिह्री' (७।३।३६) इत्यादिना पुक्॥ कथं 'जुघुषुः पुष्यमाणवाः'[2] इति, नित्यण्यन्तत्वात्? उच्यते। 'घुषिरविशब्दने' (७।२।२३) इत्यस्माद् ज्ञापकाद् विशब्दने(वा)णिजिति वृत्तिः। अथवा भौवादिकः परस्मैपदी॥

रक्षित इति। हरदत्तस्तु शब्दापयेत्, प्रक्षालापयेदित्यादिप्रप्रयोगमार्षं मन्यमानोऽन्यत्रैवंविधः प्रयोगोऽसाधुरेवेति मन्यते। आकारे कृते कथं रूपसिद्धिरित्याह—अर्त्तिह्रीत्यादिनेति। ज्ञापकादिति। अयमाशयः—'घुषिरविशब्दने' इति सूत्रेण अविशब्दनार्थस्य घुषेर्निष्ठायामिण्निषेधः क्रियते। तत्राविशब्दनग्रहणाभावेऽपि विशब्दनार्थकस्य चौरादिकस्य नित्यणिजन्तत्वे न फलभेदः। तथा हि चौरादिकाण्णिचि निष्ठायामिडागमे सति निष्ठायां सेटीत्यनेन णिलोपे घोषितमिति, इडभावे तु णिलोपस्याप्यभावाद् घोषितमित्येवेति तत्रेट्प्रतिषेधाभावार्थमविशब्दनग्रहणं

१. '.........देत्यादिना आ.........' इति मुद्रितः पाठः।

२. 'पुष्पमालवाः' इति मुद्रितम्।

व्यर्थं सञ्ज्ञापयत्यनित्यणिजन्तत्वं चौरादिकस्य घुषेः। तथा चाविशब्दनग्रहणं तत्र णिजभावपक्ष इट्प्रतिषेधाभावार्थं सार्थकम्, अन्यथा घुष्टमिति रूपमापद्येतेति। वृत्तिः = काशिका। भाष्ये धातुप्रदीपे धातुवृत्त्यादौ चाप्ययमर्थः स्फुटः। ज्ञापकान्तराणि चात्र कैयटहरदत्तादिग्रन्थेषु निर्दिष्टानि तत एवावधेयानि। समाधानान्तरमाह—अथवेति। भौवादिक इति। विवक्षितार्थश्च मैत्रेयादिमतेन सुलभः, तन्मते तस्य विशब्दनार्थकत्वात्, मैत्रेयमते चौरादिकस्यैव अविशब्दनार्थकत्वाद् इति भावः। यथा तु भाष्यं तथा 'जुघुषुः' इति चौरादिकस्यैव णिजभावपक्षे रूपमिति बोध्यम् ॥

## हेतुमति च ॥ ३।१।२६ ॥

कथं 'रामो राज्यमकारयद्' इति रामायणम्। तथा—'सकलभुवनराज्यं कारयामास तेन' इति नन्दी। 'दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषम्' इति मेघः। 'कोकिला विष्णुरूपेण राजकन्यामजीहरन्'। स्वार्थे णिजभावात्? उच्यते। विवक्षाधीनत्वाल्लक्षणस्य णिजुत्पत्त्यर्थो हेतुहेतुमद्भावो विवक्षणीयः व्युत्पत्त्युत्तरकालं स्वार्थे वर्तते स्वभावादिति 'आरोहयते हस्ती स्वयमेव' इत्यत्र रक्षितः। 'सकलभुवनराज्यं कारयामास' इत्यत्र तु पादुकायाः प्रयोज्यकर्तृत्वेन हेतुहेतुमद्भाव इति जयमङ्गला। एवं 'कोकिला विष्णुरूपेण' इत्यत्र विष्णुरूपस्य प्रयोज्यत्वात् सिद्धिः ॥

अकारयदित्यत्राचीकरदिति लुङन्तः प्रयोगः प्रसिद्धः। प्रश्नस्तूभयत्र समान एव। 'कारयामास तेन' इत्यत्र 'कारयाऽस्मन्मतेन' इति जयमङ्गलासम्मतः पाठः। यथास्थितपाठे तु तेनेत्यस्यान्वये क्लेशोऽपि। मन्ये लेखकप्रमादादयम्। स्वभावादिति। तथा च भर्तृहरिः—'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इति। तेन 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादि सिद्धम्। जयमङ्गलेति। तत्र हि 'कारय अनुष्ठापय, पादुके इति योज्यम्' इत्यनेन सूचितमिदम्। प्रयोज्यत्वात् = प्रयोज्यकर्तृत्वात् ॥

## गुपूधूपविच्छिपणिपनिभ्य आयः ॥ ३।१।२८ ॥

कथं 'गुपितम्' इति, 'गुप् रक्षणे' इत्यस्य 'आयादय आर्धधातुके वा' ( ३।१।३१ ) इति विकल्पात् गुप्तं गोपायितमिति स्यात्? उच्यते। 'गुप गोपनकुत्सनयोः' इत्यतः निन्दादिषु सनुत्पत्तेरन्यत्र

गुपितमिति धातुप्रदीपटीका। चौरादिकस्य तु गोपितमिति ॥ कथं 'पणायितम्', पनिना साहचर्यात् स्तुत्यर्थं एवायप्रत्यय इष्यत इति वृत्तिकृदुक्तत्वात्? उच्यते। कैश्चित् साहचर्यम् नाद्रियत इति रक्षितः। तथा च भट्टिः—'न चोपलेभे वणिजां पणायान्' इति ॥ कथं 'गां विच्छतीति गोविड्' इति 'च्छ्वोः शूडनुनासिके च' (६।४।१९) इत्यत्र न्यासः? उच्यते। तुदादावस्य पाठसामर्थ्यादायप्रत्ययोऽत्र विकल्प्यत इति केचित्। अन्ये तु तुदादिपाठसामर्थ्यादायप्रत्ययान्तादेव शप्रत्ययः। तेन विछायन्ती विच्छायतीति नुमो विकल्पाद् भविष्यतीति रक्षितः ॥

गुपितमिति। निन्दार्थे नित्यसन्नन्तत्वेन जुगुप्सितमित्यनेन भाव्यम् इति प्रश्नः। गुप्तमिति। थलादावूदित्त्वेनेड्विकल्पाद् 'यस्य विभाषा' इतीट्प्रतिषेधे रूपम्। आयप्रत्ययान्तस्य तु धात्वन्तरत्वादनेकाच्त्वादिड्विकल्पाभावे तत्प्रतिषेधाभावाद् गोपायितमिति रूपम्। अन्यत्रेति। निन्दार्थभिन्ने वर्त्तमानस्यास्य गुपधातोरित्यर्थः। गोपितमिति। 'निष्ठायां सेटि' इति णिलोपोऽत्र बोध्यः।

पणायितमिति। व्यवहारार्थकत्वमत्रेति बोध्यम्। पाणायानिति। इदं भ्रान्तमिति साहचर्याश्रयणपरत्वात् तरङ्गिण्यामुक्तम्। अत एव "पण्यन्त इति पणाः, 'नित्यं पणः परिमाणे' इत्यप्, व्यवहर्त्तव्याः। ईयन्ते प्राप्यन्ते वणिग्भिरित्ययाः लाभाः, 'एरच्' इति इणः कर्मणि अच्। पणानामयाः पणायास्तान् इति जयमङ्गलायामुक्तम्।

अत्र = सार्वधातुकेऽपीत्यर्थः। केचित् = सुधाकरकाश्यपतरङ्गिणीकारादयः। रक्षित इति। धातुप्रदीपकृत्। आत्रेयादयोऽप्येवम्। विस्तरो माधवादिग्रन्थेषु द्रष्टव्यः ॥

## कास्प्रत्ययादाममन्त्रे लिटि ॥ ३।१।३५ ॥

कथं ददरिद्रौ, 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इति वचनादामा भाव्यम्? उच्यते। 'आत औ णलः' (७।१।३४) इत्यत्र ओकारे कर्तव्ये औकारकरणाद् 'दरिद्रातेरार्धधातुके लोपो वक्तव्यः' इति वचनाद्विषयभावेनाकारलोपे ददरिद्राविति यथा स्यादित्येवमर्थम्। स च दरिद्रातेरामो दरिद्रत्वं ज्ञापयति ॥ कथं 'कासाञ्चक्रे पुरी सौधैः'

इति भट्टिः। 'कासृ शब्दकुत्सायाम्' इत्यस्यात्र ग्रहणम्। न च 'काशृ दीप्तौ' इत्यस्य ग्रहणम्, 'चकाशे तीर्णलौहित्य' इति प्रयोगात्? उच्यते। शब्दकुत्सार्थस्यैवानेकार्थत्वात् प्रकाशार्थत्वे रूपं युक्तम्॥

ददरिद्राविति। दरिद्राञ्चकारेत्यनेन भाव्यमित्याशयः। ओकार इति। प्रथमातिक्रमे मानाभावात्, रूपसिद्धिस्तु वृद्धया भविष्यत्येवेत्याशयः। विषयभावेनेति। वार्त्तिके आर्धधातुक इत्यस्य विषयसप्तमीत्वेन प्रागेवार्धधातुकोत्पत्तेराकारलोप इत्यर्थः। दरिद्रत्वं वैकल्पिकत्वम्। एतत्सर्वं धातुपारायण उक्तं काश्यपादिसमर्थितं च। 'वस्वेकाजाद्घसाम्' इत्यत्र वृत्तावप्येवमुक्तम्। आत्रेयस्तु सर्वमेतदभ्युपगमवादेनेति मन्वान आम्नित्य एवेति स्वीकरोति। तन्मते ददरिद्राविति नेष्टम्।

चकाश इति। तथा च दीप्त्यर्थकस्य तालव्यघटितत्वाद् आम्प्रकृतित्वाभावाच्च न तस्येदं रूपं कासाञ्चक्र इति स्पष्टम्॥

## इजादेश्च गुरुमतोऽनृच्छः॥ ३।१।३६॥

कथं 'समीहे मर्तुमानर्चे' इति भट्टिः? उच्यते। 'इन्धिभवतिभ्यां च' (१।२।६) इति कित्त्वं ज्ञापयति इजादिनिमित्त आमनित्य इति न्यासः॥

समीहे इति। समीहाञ्चक्रे इति युक्तमित्याशयः। कित्त्वमिति। इन्धेः परस्य लिट इति शेषः। अनित्य इति नित्यत्वे त्वामैव व्यवधानादिट्परस्य लिटोऽसम्भवेन तस्य कित्त्वविधानं व्यर्थमेवेति भावः। खण्डनपरभाष्यकारादिमते तु समीह इत्यादयः प्रयोगा असाधव एव लिटीति ध्येयम्॥

## कृञ्चानुप्रयुज्यते लिटि॥ ३।१।४०॥

कथं 'तं पातयां प्रथममास पपात पश्चाद्' इति रघुः। आम्प्रत्ययस्यैवेति न्यासेऽवधारणात्? उच्यते। पातशब्द उपपदे यातेर्विचि द्वितीयान्तं पातयां, पातं यान्तमित्यर्थः। आसेति अस गत्यादे रूपम्। प्राप्तवानित्यर्थः। यद्वा आम्प्रत्ययान्तस्य क्रियासाधनप्रधानत्वात् तथाविधस्यैव व्यावृत्तिः। प्रथममिति तु क्रियाविशेषणं न साधनप्रधानम्। एवं 'सम्भावयां राघवमास वृष्टेः' इत्यपि सिद्धम्॥

अवधारणादिति। अतश्च व्यवधानं विपर्यासश्च न सम्भवतीति वार्त्तिकमतं परामृष्टम्। सर्वं चैतदनुप्रयोगशब्दमाहात्म्यम्। पातशब्द इति। द्वितीयान्तः स

ग्राह्यः। विचीति। आतो मनिन्० इतिसूत्रस्थचकारादिति भावः। पातं यान्त-मिति। शरीरमित्यर्थः, इषुमिति वा। गत्यादेरिति। 'गतिदीप्त्यादानेषु' इत्युक्तादानार्थकस्य गत्यर्थकस्यैव वा प्राप्त्यर्थकस्य ग्रहणम्। क्रियासाधनम् = कारकम्। एवमिति। विजन्तवदिति भावः। यद्वेतिकल्पे तु नात्र संगतिः। यथाविध्यनुप्रयोगसूत्रादिभाष्यपरिशीलनेन तु व्यवधानमपि लभ्यत एव। प्रयोगबाहुल्यं त्वव्यवधानपक्षपाति ॥

## र्त्तिशास्त्यर्त्तिभ्यश्च ॥ ३।१।५६ ॥

कथं 'समारन्त· ममाभीष्टाः' इति भट्टिः, यतश्चकारेण परस्मैपदेष्वित्यनुवृत्तेः भाष्ये योगविभागो वैचित्र्यार्थं उक्तः? उच्यते। योगविभागात् परस्मैपदेष्विति केचिन्न सम्बन्धन्ति। केचिदुत्तरार्थं त्वनुवर्त्तत एवेत्याहुरिति रक्षितः ॥

पृथग्योगकरणस्यात्मनेपदार्थत्वं वृत्त्यादावुक्तमित्यत आह—भाष्य इति। न सम्बध्नन्ति इति। ततश्च चकारो व्यर्थ इत्यत आह—केचिदिति। रक्षित इति। वृत्तावप्येवमेव। भाष्यविरोधस्तु न, तत्र भौवादिकस्यैव सिजन्तस्योदाहरणात्। प्रकृतसूत्रे तु शब्रहितशासिसाहचर्यज्जौहोत्यादिकस्यैवार्त्तेर्ग्रहणमिति स्पष्टं हरदत्तमाधवादिग्रन्थेषु। तस्यैव च समारन्तेत्यादयः प्रयोगाः ॥

## कृदतिङ् ॥ ३।१।९३॥

कथं 'ककार' इत्यादौ विभक्तिः, कारप्रत्ययस्य 'धातोः' (३।१।९१) इत्यविधानात् कृत्त्वाभावात्? उच्यते। धात्वधिकारे विधानसामर्थ्याद् बहुलवचनाद्वा ॥

वर्णाद्विहितस्य कारप्रत्ययस्य धातुविहितत्वाभावेन कृत्त्वाभावान्न प्रातिपदिसंज्ञेति कथं विभक्तिरित्याशयेन प्रश्नः—कथमिति। बहुलवचनादिति। कृत्यल्पुटो बहुलमित्यत्रेति भावः। क्वचिदन्यदेवेत्यनेन धातुभिन्नविहितस्यापि कृत्यत्वमित्याशयः ॥

## वाऽसरूपोऽस्त्रियाम् ॥ ३।१।९४ ॥

कथं नित्यं 'पचानि' इति। यतो वाऽसरूपेण 'तस्थस्थमिपां तान्तन्तामः' (३।४।१०१) इत्यमा पक्षे भाव्यम्? उच्यते। 'लिटः कानज् वा' (३।२।१०६) इति वावचनाल्लादेशेषु वाऽसरूपविधिर्नास्तीति ज्ञाप्यते ॥

कथं 'कण्डूतिर्वेदनापैति शिरसः' इति कण्ड्वादियगन्ताद् 'अ प्रत्ययाद्' (३।३।१०२) इत्यकारेण क्तिनो बाधा स्याद्, अस्त्रियामिति वाऽसरूपविधेर्निषेधात् ? उच्यते । 'क्तिन्नाबादिभ्यः' इति वचनात् । 'तदधीते तद्वेद' (३।२।५९) इति वचनाद् ज्ञापकाद् भावार्थक्तस्य 'क्तल्युड्' इत्यत्र ग्रहणाद् वर्तमानार्थक्तेन वाऽसरूपविधिना लडपि भवति । अपरं बहुत्वान्नोक्तम् ।

ज्ञाप्यत इति । अन्यथा वाऽसरूपसूत्रेणैव विकल्पस्य सिद्धतया वाग्रहणं व्यर्थमेव स्यात् । एवमेव हृशश्वतोर्लङ् चेत्यत्र लङ्विधानमप्येतज्ज्ञापकम् इति परिभाषेन्दुशेखरादौ विस्तरः ।

बाधेति । नित्यमिति शेषः । वचनादिति । एतेन स्त्र्यधिकारेऽपि यथाप्रयोगं विकल्पेन बाधोक्ता ॥

**अचो यत् ॥ ३।१।९७ ॥**

कथम् 'अनेन भाव्यं संस्कृतम्' ? उच्यते । 'ओरावश्यके' (३।१।१२५) इति ण्यत् ॥

संस्कृतमिति भाषार्थकम्, अन्नादिविशेषणं वा ॥

**पोरदुपधात् ॥ ३।१।९८ ॥**

कथं त्रिकाण्डे 'जाप्या स्यादघमर्षणः' इति ? बाहुलकादिति पारायणम् ॥

बाहुलकादिति । कृत्यल्युटो बहुलम् इत्यत्रोक्तादित्यर्थः ॥

**गदमदचरयमश्चानुपसर्गे ॥ ३।१।१०० ॥**

कथं 'तेन न तत्र भवेद्विनियम्यम्' इति 'इन्हन्' (६।४।१२) आदिसूत्रे वृत्तिः ? केवलाद्यत् पश्चाद्विनिशब्देन समासः । उपसर्गप्रतिरूपको विनिशब्दः । विनियमे साधुर्विनियम्यः । 'तत्र साधुः' (४।४।९८) इति यत्प्रत्यय इत्यन्यः ॥

समाध्यन्तरमाह—विनियमे साधुरिति । अत एव विनियम्यम् = साधु नियम्यमिति पदमञ्जर्यामुक्तम् । प्रकृतसूत्रव्याख्यायान्तु प्रमादपाठोऽयमिति मत्वा विनियाम्यमिति पठितव्यमित्यभिहितं तत्रैव । तथा च 'त्वया नियम्या ननु दिव्यचक्षुषा' इत्यादौ नियम्येति शब्दो नियमशब्दात् तत्करोतीति णिचि यति साध्यः ॥

## वदः सुपि क्यप् च ।। ३।१।१०६ ।।

चकारेण यदपि समुच्चीयते । कथं कर्तरि 'सत्यवद्यो रघूत्तमः' इति भट्टिः, कृत्यत्वाद् भावे विधानात् ? उच्यते । अर्शआदित्वादच् । अथवा बाहुलकात् कर्तरि यदिति ।। कथमनूद्यम् ? उपसर्गप्रतिरूपकत्वादनोः ।।

भाव इत्युपलक्षणम्, कर्मणीत्यपि द्रष्टव्यम् । ये तु ब्रह्मोद्यमित्याद्यर्थमत्रोत्तरसूत्राद् भावे इत्यनुवर्त्त्यं सकर्मकादपि धातोर्भाव एव वाचनिकः प्रत्यय इति मन्यन्ते तन्मते 'सत्यवद्यं ब्रवीमि' इत्यादिप्रयोगा बाहुलकात् । अजिति । एतदेव पुरुषोत्तमदेवमतम् । उपसर्गेत्यादि । तथा च यद्यनुरुपसर्गस्तर्हि ण्यदेव—अनुवाद्यमिति बोध्यम् ।।

## एतिस्तुशास्वृदृजुषः क्यप् ।। ३।१।१०९ ।।

कथं 'का ते स्तुतिः स्तव्यपरावरोक्तिः' इति चण्डी, अनेन क्यपो भावात् ? उच्यते । स्तवमर्हतीत्यस्मिन्नर्थे 'दण्डादिभ्यो यत्' ( ५।१।६६ ) इति यद् वक्तव्यः ।।

भावादिति । तथा च स्तुत्येति स्यादित्यर्थः ।।

## ऋहलोर्ण्यत् ।। ३।१।१२४ ।।

कथम्—

किं किं मां समुपेत्य चुम्बसि बलान्निर्लज्ज ! लज्जा कुतो
वस्त्रान्तं शठ ! मुञ्च मुञ्च शपथैः किं धूर्त्त ! निर्बन्धसे ।
खिन्नाहं तव रात्रिजागरतया तामेव वाचं प्रियां
निर्माल्ये सति पुष्पदामनिकरे का षट्पदानां रतिः ।।

जागरतयेत्ययुक्तम्, 'जागर्त्तेरकारो वा' इत्यकारे ण्यति च जागरा जागर्येति स्यात् ? उच्यते । पचाद्यचि भविष्यति । निर्बन्धस इत्यपशब्द एव, निर्बध्नासीति हि स्यात् । अथवा निर्बध्यत इति यका प्रथमपुरुषेण वा पाठः कर्तव्यः ।।

ण्यति इति । 'जागर्तेरकारो वा' इति 'इच्छा' (३।३।१०१) इति सूत्रवार्त्तिकाद्विकल्पेन शे यकि च जागर्येति भवति ।।

### ण्वुल्तृचौ ।। ३।१।१३३ ।।

कथम् 'अधिष्ठकः' इति कायस्थोक्तिः, ण्वुला अधिष्ठायक इति हि स्यात् ? उच्यते । 'आतश्चोपसर्गे' ( ३।१।१३६ ) इति कः । ततः स्वार्थे कः ।।

वृत्तिः स्पष्टा ।।

### दुन्योरनुपसर्गे ।। ३।१।१४२ ।।

'क्षपितचमरीबालभारो दवाग्निः' इति मेघः,'दवो दावो वनानलः' इत्यमरः, णप्रत्यये दाव इति स्यात् ? उच्यते । 'विभाषा ग्रहः' ( ३।१।१४३ ) इति विभाषापि सम्बध्यते ।।

**इति शरणदेवविरचितदुर्घटवृत्तौ तृतीयाध्याये प्रथमः पादः ।।**

सम्बध्यत इति । वृत्तौ तु दुनोतिरेवात्र गृहीतः । ततश्च निरनुबन्धकाद् भौवादिकाद्दवतेरर्थभेदेन पचाद्यचि दव इति पदमञ्जरी । करणसाधनो वा ऋदोरबित्यबन्तः । 'दुञो विभाषा' इत्यनेन करणे घञिति स्वामिमतमनादेयमेव, तादृशवचनाभावात् ।।

इति दुर्घटवृत्तिविवृतौ तृतीयाध्यायस्य प्रथमः पादः ।।

## तृतीयाध्याये द्वितीयः पादः ।।

### कर्मण्यण् ।। ३।२।१ ।।

कथं 'जातिस्मरौ नूनमिमावभूताम्' इति रघुः ? उच्यते । पचाद्यच् ।। कथं 'कलहंसराममहितः कृतवान्' इति भट्टिः ? उच्यते । अन्तर्भावितण्यर्थत्वात् सकर्मकत्वम् । घञन्तेन वा वैयधिकरण्ये बहुव्रीहिः ।।

जातिस्मराविति, जातेः स्मरौ तौ । स्मरश्च स्मरी चेति द्वन्द्वे पुमान् स्त्रियेत्येकशेषः । चारित्रवर्धनदिनकरादिसम्मतोऽयं पाठः । मल्लिनाथादयस्तु रतिस्मराविति पेठुः । अन्तर्भावितेति । तथा च कलहंसान् रमयतीति विग्रहः । वैयधिकरण्य इति । कलहंसै रामं यत्तदिति विग्रहः । तृतीयातत्पुरुषो वा बोध्यः ।।

## आतोऽनुपसर्गे कः ।। ३।२।३ ।।

कथं 'कर्षन् स शैवाललता नदीष्णः' इति रघुः, नद्यां स्नातो नदीष्ण इत्यधिकरणे उपपदे कः, कर्मणीत्यनुवृत्तेः ? उच्यते । मूलविभुजादित्वात् । 'निनदीभ्यां स्नातेः कौशले' ( ८।३।८९ ) इति षत्वविधौ वृत्तिकृता 'सुपि स्थः' ( ३।२।४ ) इत्यत्र योगविभागात् प्रत्यय इत्युक्तम् ।।

कर्षन्नित्यादि पाठान्तरं पञ्चमसर्गस्य ४७ पद्ये बल्लभचारित्रवर्धनादिसम्मतम् । योगविभागादिति । 'सुपि' इति रूपादिति शेषः ।।

## हरतेरनुद्यमनेऽच् ।। ३।२।९ ।।

कथं तमो(?)ज्योत्स्नाहरः ? उच्यते । हरतेरिति योगविभागे उद्भ्रमवृत्तिः ।।

उद्गमवृत्तिरिति । तथा चोद्गमार्थेऽप्यच् पूर्वेण 'हरतेः' इत्यनेनेति बोध्यम् । पचाद्यजन्तेन वा षष्ठीसमासः ।।

## अधिकरणे शेतेः ।। ३।२।१५ ।।

'गिरौ डश्छन्दसि' इति वक्तव्यम् । 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' इति, 'गिरीशो गिरिशो मृडः' इति च ? उच्यते । गिरिरस्याश्रयत्वेनास्तीति लोमादित्वाच्छः । अथवा यजुःक्रतुरिति कर्तव्ये 'अध्वर्युक्रतुः' ( २।४।४ ) इति ज्ञापकात् छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्त इति रक्षितः ।।

श इति । तथा चात्रैव वार्त्तिकम्-'तद्धितो वा' इति । केचित्तु गिरौ गिरौ शेत इत्यर्थे संख्यैकवचनादितिसूत्रेण शश्प्रत्ययेन व्युत्पादयन्ति, तन्मतेऽदन्तत्वं न सिध्यति, अव्ययत्वापत्तिश्चेति तन्मतमनादरणीयमेव । गिरिं श्यति = उपभोगेन तनूकरोति-इत्यर्थे गिरिशशब्दोऽजन्त इत्यपि केचित् ।।

## चरेष्टः ।। ३।२।१६ ।।

कथं 'प्रेक्ष्य स्थितां सहचरीम्' इति रघुः, अधिकरणे इत्यनुवृत्तेः ? उच्यते । चिन्त्यतामिति भागवृत्तिः । 'ट' इति योगविभागो वा तदा कर्तव्यः । भिक्षासेनेति चकाराद्वा[1] ।।

---

१. 'भिक्षासेनासहचराद्वा' इति मुद्रितः पाठः ।

'भिक्षासेनासहचराद्वा' इति मुद्रितपाठस्थानेऽर्थसंगत्यर्थं 'भिक्षासेनेति चकाराद्वा' इति पाठः कर्त्तव्यः। अनधिकरणार्थेऽस्मिन् सूत्रे चकारस्यानुक्तसमुच्चयार्थत्वादन्यस्मिन्ननधिकरण उपपदे चरेष्टो भवतीति तदर्थः। विवृतं चैवमेव दुर्घटवृत्तिकृन्मतं चारित्रवर्धनेन रघुटीकायाम्। पचादिषु चरडिति चरेष्टित्वान्ङीबिति काव्यालङ्कारकारः। समासश्च सुप्सुपेति। पदमञ्जर्यामप्येवमेवोक्तम्। पुंयागे ङीष्, गौरादित्वाद्वा ङीष्, ततः सह भूता चरी सहचरीत्यपि कश्चित् ॥

## पुरोऽग्रतोऽग्रेषु सर्त्तेः ॥ ३।२।१८ ॥

कथं 'पुरस्सरा वाचः' इति भाषावृत्तिः ? उच्यते। पचादिपाठात् सिद्धिरिति केचित् ॥

पुरस्सरेति। टित्त्वान्ङीबुचित इति प्रश्नाशयः। पचादिपाठादिति। पचादेराकृतिगणत्वादित्यर्थः ॥

## फलेग्रहिरात्मम्भरिश्च ॥ ३।२।२६ ॥

कथम् 'उदरम्भरयश्चकोराः' इतिः मुरारिः ? उच्यते। चकारात्। कुक्षिम्भरिरित्युपलक्षणम्। तथा च चान्द्रं सूत्रम्—'आत्मोदरकुक्षिभ्यः' इति ॥

कुक्षिभ्य इत्यत्र कुक्षिष्विति पाठान्तरं क्वचित् ॥

## अपे क्लेशतमसोः ॥ ३।२।५० ॥

कथं 'भयापहाः' तथा 'पटोलपत्रं पित्तस्य नसितस्य कफापहा' ? 'अन्येष्वपि दृश्यते' ( ३।२।१०१ ) इति डः ॥

ड इति। यद्वा आशिषि हन इति पूर्वसूत्रेणापि निर्वाहः कर्तुं शक्यः ॥

## अमनुष्यकर्तृके च ॥ ३।२।५३ ॥

कथं 'कृतघ्ने नास्ति निष्कृतिः', तथा 'ब्रह्मघ्नमपि चाण्डालम्', तथा 'बलभद्रः प्रलम्बघ्नः', तथा 'शत्रुघ्नो राजा' ? उच्यते। मूलविभुजादित्वात् कप्रत्यय इति भाषावृत्तिः। पदसंस्काराद्वा। पदान्तरसन्निधाने हि मनुष्यकर्तृकता। बाहुलकाद्वा टक् ॥

भाषावृत्तिरिति। पदमञ्जरीकारोऽप्येवमेवाह। बाहुलकादिति। माधवोऽप्येवम्। कप्रत्यये स्त्रियां टाप्, टकि तु ङीबिति विशेषः ॥

**स्पृशोऽनुदके क्विन् ॥ ३।२।५८ ॥**

कथम् 'उत्तार्य ते जलान्यष्टौ लङ्काया उदकस्पृशः'? उच्यते। औणादिकोऽत्र क्विप्रत्ययः ॥

उदकस्पृश इति। कर्मण्यणि उदकस्पर्श इति शब्दो भवेत् ॥

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ३।२।५९ ॥**

कथं 'नीचो वदति न कुरुते', न्यङ्ङिति स्यात्? उच्यते। क्विन्प्रत्यये सति 'अनिदितां हलः' (६।४।२४) इत्यनुनासिकलोपे 'अच् प्रत्यन्ववपूर्वात्' (५।४।७५) इत्यत्र 'अच्' इति योगविभागादच्। 'अचः' (६।४।१३८) इत्यकारलोपः। 'चौ' (६।३।१३८) इति दीर्घत्वे नीच इति स्यात् ॥

क्विन्प्रत्यय इति। निपूर्वकादञ्चुधातोरित्यादिः ॥

**सत्सूद्विषद्रुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्।३।२।६१।**

कथम् 'अनूद्यम्' इति, 'वदः सुपि क्यप् च' (३।१।१०६) इति क्यबुपसर्गे न स्यात्। इह सुपीत्यनुवृत्तावुपसर्गग्रहणमन्यत्र सुब्ग्रहणे नोपसर्गग्रहणमिति ज्ञापनार्थमिति वृत्तिः? उच्यते। उपसर्ग-प्रतिरूपकोऽत्रानुः ॥

ननु सुपीत्यनेनोपसर्गस्यापि ग्रहणं भवत्येवेति कथं न सोपसर्गात् क्यबित्यत आह—इहेत्यादि। अनुरिति। एतच्च पूर्वमपि विवृतम् ॥

**क्रव्ये च ॥ ३।२।६९ ॥**

कथं 'क्रव्यादः', 'अदोऽनन्ने' (३।२।६८) इति सिद्धे क्रव्यग्रहणं वाऽसरूपविधाननिवृत्त्यर्थमिति भाष्यम्? उच्यते। कृत्तविकृत्तशब्द उपपदे 'कर्मण्यण्' (३।२।१), पृषोदरादित्वात् कृत्तविकृत्तशब्दस्य क्रव्यादेश इति कश्चित् ॥

कृत्तविकृत्तशब्द इति। कृत्तविकृत्तपक्वमांसशब्द इत्यर्थो वृत्त्युक्तः। कश्चि-दिति। वृत्तिकारादिरित्यर्थः। एतन्मते कृत्तविकृत्तपक्वमांसभक्षः क्रव्याद इति, आममांसभक्षः क्रव्यादित्युच्यते। तदुक्तं शब्दार्णवेऽपि—

सदान्नादकणादौ च स्यात् क्रव्यादाममांसभुक्।
क्रव्यादः कृत्तविकृतपक्वमांसभुगुच्यते ॥ इति ॥

कृत्तविकृत्त इत्यत्र कृत्तविकृत इत्यपि पाठः। कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तमिति पूर्वकाल इति समासः, तस्य पक्वशब्देन स एव समासः, ततो मांसशब्देन विशेषणसमासः॥

सुप्यजातौ णिनिस्ताच्छील्ये ॥ ३।२।७८ ॥

कथं 'स्वैरिणी', वृद्ध्यभावादिति, स्वेन ईरितुं शीलमस्याः, णिनिः ? उच्यते। 'स्वादीरेरिणोर्वृद्धिर्वक्तव्या'॥

वार्त्तिकमनभिसन्धाय प्रश्नः॥

ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ३।२।८७ ॥

'न हिमहा हिमहानिकरोऽभवत्' इति माघः, तथा 'कामहा स महेश्वरः' तथा 'मधुहा' इत्यादि, ब्रह्मादिषु हन्तेरेवेति नियमात् ? उच्यते। 'बहुलं छन्दसि' ( ३।२।८८ ) इत्यतो बहुलग्रहणानुवृत्तेर्नियमव्यभिचारादिति रक्षितः। 'नहिमहा' इत्यादौ नहिशब्दोऽव्ययम्। अभीक्ष्णं न सूर्यो महाहिमहानिकरोऽभवदित्यर्थः॥ अन्ये त्वाहुः—कथं 'वृत्रस्य हन्तुः कुलिशम्' इति, अनेन क्विपः प्रसङ्गात् ? उच्यते। कालसामान्यविवक्षायां तृज् भविष्यति। एवं 'हिमहा' इत्यादौ च 'अन्येभ्योऽपि दृश्यते' ( ३।२।१७८ ) इति क्विप्॥

रक्षित इति। वृत्तावप्येवमेव सङ्केतितम्। तथा च क्विप् चेति सार्वकालिके क्विपि हिमहेति सिध्यति। समाधानान्तरमाह—नहि महेत्यादिना॥

परोक्षे लिट् ॥ ३।२।११५ ॥

कथम् 'अभून्नृपो विबुधसखः परन्तपः' इति भट्टिः, 'अभूदभूमिः प्रतिपक्षजन्मनाम्' इति माघः ? उच्यते। पदसंस्कारे भूतसामान्यविवक्षायां लुङ्। एवं च 'कौसल्ययासावि सुखेन रामः प्राक् केकयीतो भरतस्ततोऽभूत्' इत्यपि। केकयशब्दादुपचारेण दुहितृवृत्तेर्ङीपि केकयीति॥ कथं 'यावद् गिरः खे मरुतां चरन्ति' इति कुमारः। परोक्षे लिट् ? भस्मावशेषकरणापेक्षया यद्वर्तमानत्वं तदध्यारोप्य लट्॥

भूतसामान्येति युक्त्यन्तरम्। क्रियायाः सामान्येनातीन्द्रियत्वेपि यत्र साधनशक्त्याश्रयभूतं फूत्कारादिविशिष्टं द्रव्यं प्रत्यक्षं तत्र प्रत्यक्षविषयत्वाभिमानः क्रियायामपीति तद्व्यावर्त्तकत्वेन परोक्षत्वस्य विशेषणत्वं बोध्यम्॥

## वर्तमाने लट् ।। ३।२।१२३ ।।

'यथाह धात्र्या प्रथमोदितं वचः' इति रघुः, आहेति वर्तमाने ? उच्यते । तिङन्तप्रतिरूपकोऽयमाहेति शब्दः कालसामान्यवचनः । एवं च 'स मुक्तवति पौलस्त्ये भूयोऽप्याह महेश्वरः' इति कैलासोद्धरणम् । 'परिघोरुभुजानाह हसन्ती स्वागतं कपीन्' इति भट्टिः । कथाभिसन्धानेन वर्तमानविवक्षा यथा 'अद्य कंसो निहन्यत' इति । 'लेखके नास्ति दोषः' इत्यत्र नास्तिशब्दोऽयं विभक्तिप्रतिरूपकः कालसामान्यवाची ।। 'कथं न ज्ञास्यति प्रभुः' इति कुमारः, वर्तमाने लृट् ? उच्यते । 'प्रत्येकं विनियुक्तात्मा' इति प्रत्येकमात्मविनियोगात् तदनन्तरं ज्ञानस्य भाव्यमानत्वाल्लृङ् विवक्षावशात् ।।

कथाभिसन्धानेनेत्यनेन 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इति सूत्रं स्मारितम् ।।

## लटः शतृशानचावप्रथमासमानाधिकरणे ।। ३।२।१२४ ।।

कथम् 'अपि शाकं पचानस्य', मुका भाव्यम् ? उच्यते । आगमशास्त्रस्यानित्यत्वान्न मुक् । 'आतो ङितः' ( ७।२।८१) इति आदेशोऽपि नास्ति, गणकार्यानित्यत्वाच्छपोऽभावात् ।।

मुकेति । 'आने मुक्' इति सूत्रेण मुगागमे पचमानस्येति युक्तमित्यर्थः ।।

## स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ।। ३।२।१५८ ।।

कथम् 'ईर्ष्यालुः', 'बुभुक्षालुः', 'लज्जालु'प्रभृतयः ? उच्यते । ईर्ष्यामालातीति मृगय्वादित्वात् कुप्रत्ययः । शीतालुरिति शीतं न सहत इति तद्धितः ।।

मृगय्वादित्वादिति । 'मृगय्वादयश्च' इत्यौणादिकं सूत्रम् (१।३७) । मृगय्वादिराकृतिगणः । तद्धित इति । अत्र 'शीतोष्णतृप्रेभ्यस्तन्न सहते इत्यालुज्वक्तव्यः' इति वार्त्तिकं (५।२। २२) स्मर्त्तव्यम् ।।

## विदिभिदिच्छिदः कुरच् ।। ३।२।१६२ ।।

कथं 'कुलिशं भिदुरं पविः' इत्यमरः । तथा 'संसारबन्धच्छिदुरान्

द्विजातीन्' इति घोषः । 'करीन्द्रदर्पच्छिदुरं[1] मृगेन्द्रम्' इति विजयः । 'छिदुरयादुरयाचितमङ्गनाः' इति माघः । 'भिदेः छिदेः कर्मकर्तरि चायमिष्यते' इति वृत्तावुक्तत्वात् केवले न स्यात् ? उच्यते । छिदिभिदेः 'कर्तरि च' इति [2]वामनोक्तत्वात् । अत्र 'कर्मकर्तरि च' इति चकारोऽपि केवलेऽपीति लिङ्गम् ॥

'करीन्द्रबन्धच्छिदुरम्' इति मुद्रितः पाठो न युक्तः ।

विजयः इति । अत्र जाम्बवतीविजयाख्यं पाणिनीयं काव्यं परामृष्टमिति भाषावृत्तिः । भिदेश्छिदेरित्यत्र 'भिदिच्छिद्योः कर्मकर्त्तरि प्रयोगः' इति वर्त्तमानः पाठः काशिकायाम् । वामन इति । तदुक्तं काव्यालङ्कारे—'भिदुरादयः कर्मकर्त्तरि कर्त्तरि च' (५।२।३८) इति । अतएव वृत्तिकारोक्तं प्रायिकमित्यात्रेयोप्युक्तवान् ॥

## सनाशंसभिक्ष उः ॥ ३।२।१६८ ॥

कथं 'सन्तः प्रणयिवाक्यानि गृह्णन्त्यननुसूयवः' इति मीमांसावार्तिकम् । अनुसूयशब्दः कण्ड्वादियगन्तः । नह्यस्यात्रानुस्मरणम् ? उच्यते । 'डुप्रकरणे मितद्र्वादिभ्य उपसङ्ख्यानम्' इति डुः ॥

डुप्रकरण इति । एतच्च ३।२।१८० सूत्रे वार्त्तिकम् ॥

## विन्दुरिच्छुः ॥ ३।२।१६९ ॥

कथं तैलबिन्दवः ? उच्यते । 'शॄस्वृष्णिहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' ( उ० सू० ) इति चकाराद् विदि अवयवे इत्यतोऽप्युप्रत्ययः ॥

अत्रेतरस्मादनभिधानान्निपातनसामर्थ्याद्वा ज्ञानार्थकस्यैव विदो ग्रहणमिति हरदत्तादयः । अवयवबोधकस्तु पवर्गादिर्बिन्दुरिति । उप्रत्यय इति । मृगय्वादित्वादिति परे ॥

## मतिबुद्धिपूजार्थेभ्यश्च ॥ ३।२।१८८ ॥

कथं 'त्वया ज्ञातो वधाद् भीतः' इत्यादि । 'सत्यपि सम्भवे बाधनं भवति' इति वर्तमानात् क्तेन भूते क्तस्याभावाद्, वर्तमानात् क्ते च

१. बन्धच्छिदुरम् इति मुद्रितः पाठोऽयुक्तः ।

२. विद्यवयवतेजो''''इति मुद्रितम् ।

'क्तस्य च वर्तमाने' ( २।३।६७ ) इति षष्ठी स्यात् ? उच्यते। अपशब्द इति भागवृत्तिः। अस्ति च सम्भवो यदुभयं स्यात् इति भूतक्तेनापि भाव्यमित्यन्यः ।।

'मतिबुद्धिपूजार्थेभ्यश्च' इत्यनुक्तसमुच्चयार्थश्चकारः—

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ।।
हृष्टतुष्टौ तथाक्रान्तस्तथोभौ संयतोद्यतौ।
कष्टं भविष्यतीत्याहुरमृतः पूर्ववत् स्मृतः ।।

तथा सुप्तः शयित आशितो लुप्त इत्येवमादीनां वर्तमाने वृत्तिः। 'वर्तमानक्तेन भूतक्तस्य बाधनमिष्यते। तेन त्वया ज्ञातो मया ज्ञात इत्याद्यचिकित्स्यमिति भागवृत्तिः' इति भाषावृत्तिः। कथं भूते क्ते सति 'त्वया शीलितो मया ज्ञातः' इति, बुद्ध्यर्थत्वाद् वर्तमानक्तेन भूतक्तस्य बाधनात्। अत एव 'क्तस्य च वर्तमाने' (२।३।६७) इति षष्ठी न भवति। यदि वर्तमानक्तस्य ग्रहणं स्यात् तर्हि 'क्तस्य च वर्तमाने' इति षष्ठी स्यात्। कालदुष्टा एवापशब्दा ( इति ) भागवृत्तिः ।। कथं 'कलहंस-राममहितः कृतवान्' इति यमकं महित इति, अनेन भूतक्तस्य बाधनात् ? चिन्त्यम्। चिन्ता चात्र 'मतिबुद्धि' इत्यादिना वर्तमान-काले ह्यप्राप्तः क्तो विधीयते। यस्तु भूतविहितः स मत्यादिभ्यो भवत्येव। भूतक्तस्तु न बाध्यते मत्यादिक्तेन। तेन वर्तमानकाले भूतेऽपि। एके तु तक्रकौण्डिन्यन्यायेन मत्याद्यर्थेभ्यो भूते यः क्तः प्राप्तः, स वर्तमानक्तेन बाधितव्यः। तेन वर्तमाने, मत्यादिभ्यो भूतक्तो नास्ति। एतच्च 'क्तेन च पूजायम्' ( २।२।१२ ) इत्यत्रानु-न्यासकृतोक्तं विस्तरेण। अत एवाह—'उपज्ञाते' ( ४।३।११५ ) इति तृतीयासमर्थात् 'तेन प्रोक्तम्' ( ४।३।१०१ ) इत्यादिकारकात् प्रत्ययं कुर्वताचार्येणैव ज्ञापितं मत्यादिभ्यो विहितस्य क्तस्य योगे तृतीयासमासो भवत्येवेति। तेनेश्वरज्ञापितमिति निर्देशादेवास्ति मत्या-

दिभ्यो भूतेऽपि क्त इति । अत्र प्रकरणे तक्रकौडिन्यन्यायेन यदुक्तं तदनुन्यासकारेण दूषितमिति ॥

कथम् 'इष्यते ज्ञायते' इषिप्रभृतिभ्योऽनेन वर्तमानक्तेन लड्बाधकेन भवितव्यम् । नचात्र वाऽसरूपविधिः । 'क्तल्युट्तुमुन्-खलर्थेषु वासरूपविधिर्नास्ति' इति ? उच्यते । 'ल्युट्तुमुन्' इत्यत्र ल्युटा साहचर्याद् भावे ( क्तस्य ग्रहणं ) न वर्तमानक्तस्य । ततश्चात्र वाऽस-रूपविधेरप्रतिषेधादिषिप्रभृतिभ्यो युक्त एव पक्षे वर्तमाने लट् । एवं क्तल्युटोस्तूपादानं चिन्त्यम् । तथा हि नपुंसके घञि हासमिति मा भूत् । तन्निवृत्तिः पुनरेकेनैव क्तेन ल्युटा वा शक्यत इति । किराते 'श्रियः कुरूणाम्' इत्यत्र विदितो (ज्ञाने ज्ञानस्य वेशो नास्तीति नीते?) एतत् कथं यावता क्तेन न भाव्यम् । सम्बन्धात्तु घटते । अत्र 'धातुसम्बन्धे प्रत्ययाः' (३।४।१) इति विद्यते, यथाग्निष्टोमयाज्यस्य पुत्रो जनिता । अयथाकालोक्ताः प्रत्ययाः साधवो भवन्ति । न्यग्भूतवर्त-मानकालशक्तिविदिक्रियासमभिव्याहारवानिति भूतवृत्तिक्रियाया योगात् क्तोऽपि भूतकालवृत्तिर्भवति ॥

**इति शरणदेवविरचितदुर्घटवृत्तौ तृतीयाध्याये द्वितीयः पादः ॥**

कथमित्यादिना भाषावृत्त्युद्धरणस्य विवरणम् । अधिकं तु पूर्वमेवोक्तम् ॥

इति दुर्घटवृत्तिविवृतौ तृतीयाध्याये द्वितीयः पादः ॥

## अथ तृतीयः पादः ॥

### उणादयो बहुलम् ॥ ३।३।१ ॥

### भावे ॥ ३।३।१८ ॥

कथं 'मन्दाकिन्याः पयश्शेषम्' इति कुमारः । तथा 'शेषाण्य-हौषीत्' इति भट्टिः । दन्ति(?) 'शेषेति कीर्तिता' इति शाश्वतः । 'शेषं समानम्' इति, 'घञजबन्ताः पुंसि' इति भाष्याद्, घञपोरपि पुमानित्याधिकारिकसूत्राच्च ? उच्यते । प्रायिकमेतदिति 'ग्रहवृदृ'०

(३।३।५८) इत्यादौ न्यासः। भावेषु घञं प्रति पुंस्त्वमुक्तम्, करणादिघञन्तस्य नानालिङ्गतेति वल्लभः। यत्तु 'नद्याः शेषस्य' (६।३।४४) इत्यत्र रक्षितेनोक्तं शेषशब्दस्याविशिष्टलिङ्गत्वादिति, तत् परिशिष्टार्थे द्विलिङ्गाव्यभिचाराद्। इहालोपित्वात् कथं भागमिति सिद्ध्यतीति(?)। कथं 'सर्वे पदा हस्तिपदे प्रतिष्ठिताः' इति, क्लीबत्वात् पद(शब्दस्य)? उच्यते—

"तैले च तैले रसं प्रविष्टं घृते च मांसे च बलं प्रविष्टम्।
भव्यासु नीचासु मतिः प्रविष्टा सर्वं पदं हस्तिपदे प्रविष्टम्।" इति पाठः कर्तव्यः॥

पयश्शेषमिति। एवमेव सप्तर्षिहस्तावचितावशेषाणीत्याद्यपि द्रष्टव्यम्। न्यास इति। एतच्च न तत्र लभ्यते। वल्लभ इति। एतच्च 'त्रिष्वन्यत्रोपयुज्यते' इति केशवादिवचनेनापि प्रमीयते। उपपादितं चैतत् कौमुद्याम्। शेषशब्दस्याविशिष्टलिङ्गत्वादिति। अत्र शेषशब्दस्य विशिष्टलिङ्गत्वादिति युक्तं प्रतीयते विशिष्टशब्दस्य भिन्नार्थकत्वात्। द्विलिङ्गाव्यभिचारादिति। एतच्च 'उपयुक्तेतरे न स्त्री' इति मेदिनीकारादिवचनानुरोधेन॥

## परिमाणाख्यायां सर्वेभ्यः॥ ३।३।२०॥

कथं 'वुञ्छण'० (४।२।८०) सूत्रे 'सप्तदश प्रत्ययाः' इति वृत्तिः। तथा 'तिङोऽष्टादश प्रत्ययाः' इति? उच्यते। पदसंस्कारे॥

प्रत्यया इति। अजन्तो घान्तो वाऽयं प्रयोगः। प्रकृतेन घञा तु प्रत्याय इति भाव्यमिति प्रश्नार्थः। पदसंस्कार इति पुरुषोत्तमस्य समाधानम्। भाववृत्तिकारोऽप्येवमेवाह॥

## उपसर्गे रुवः॥ ३।३।२२॥

कथं 'भीषणारावगद्गदम्' इति? उच्यते। भाषार्थत्वाद् 'वृतुवृधु भाषार्थाः' इति चुरादिपाठाण्णिचि 'एरच्' (३।३।५६)॥

भीषणारावगद्गदमिति पाठे यदि 'भीषणा' इति पृथक्पदम् तदैव प्रश्नोदयः, भीषणारवगद्गदमिति पाठान्तरेपि स्वीकृते न निर्वाहः, विभाषाङि रुप्लुवोः इति सूत्रेणापपत्तेः। भीषणरावगद्गदमिति वा भवेत्। चुरादिपाठादिति। एतच्चासाम्प्रदायिकम्॥

## श्रिणीभुवोऽनुपसर्गे ।। ३।३।२४ ।।

कथं 'प्रादुर्भावः' इति । प्र, आङ्, दुरित्युपसर्गसमुदायस्याप्युपसर्गत्वादनेन घञा न भाव्यम् ? उच्यते । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (८।३।८७) इत्यत्रोपसर्गग्रहणं कृत्वा यत् प्रादुर्ग्रहणं करोति तद् ज्ञापयति नात्रोपसर्गकार्यमिति ।। कथं 'प्रभावः' ? प्रकृष्टो भावः प्रभाव इति वृत्तिः ।। कथं 'नयो नीतः ? उच्यते । संज्ञापूर्वकस्य विधेरनित्यत्वाद् वृद्ध्यभावात् ।।

प्रभाव इति । उपसर्गयोगान्न घञा भाव्यमिति प्रश्नः । वृध्यभावादिति । बाहुलकादजिति वृत्यादौ ।।

## उदि श्रयतियौतिपूद्रुवः ।। ३।३।४९ ।।

कथं 'पतनान्ताः समुच्छ्रयाः' इति ? उच्यते । 'विभाषाङि रुप्लुवोः' (३।३।५०) इत्यतो विभाषाग्रहणानुवृत्तेः ।।

अनुवृत्तेरिति । सिंहावलोकितन्यायेनेति भावः । बाहुलकाद्वा एरज् भवेत् । स्तिपानिर्देशाद् यङ्लुगन्तादजेव भवति । भाष्यानुक्तत्वादसाधुरेवायमित्यपि कश्चित् । तथा चोक्तभारतप्रयोग आर्षत्वात् समर्थनीयः ।।

## एरच् ।। ३।३।५६ ।।

कथं 'परिमलं कस्तूरिकाद्रं धनुः' इति । एरजन्तो ह्ययं क्रियावचनो गौणवचनो वा । तत्र द्रव्यसामानाधिकरण्यमयुक्तम् ? उच्यते । असाधुरेवायं 'परिमयः कस्तूरिकाद्रं धनुः' इति पाठः । अर्शआद्यचि स्त्रीत्वं स्यात् ।। कथं 'भयनं भीः' इति 'भीत्रार्थानाम्' (१।४।२५) इत्यत्र न्यासः । कथं 'भीतं शिशुना, वर्षणं वृष्टम्' इति । 'अज्विधौ भयादिग्रहणं नपुंसकक्तादिनिवृत्त्यर्थम्' इति वचनात् ? उच्यते । क्तादिनिवृत्त्यर्थमिति प्राप्तिमात्रोद्भावनम् । तेन वाऽसरूपविधिना ल्युडपि भवति । न च 'क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति' इति वाच्यम्, क्तादिना भयादावेतस्य[1] व्यापाराभावादिति 'भीत्रार्थानाम्' (१।४।२५)

१. 'घनाविति (?) एतस्य' इति मुद्रितमासीत् ।

इत्यत्र रक्षितः । एवं च व्यवस्थितविभाषासाध्यत्वादस्य वाक्यस्य । ज्ञापकं चात्र 'भयभीतभीतिभीभिरिति वक्तव्यम्' इति । तथा 'वृषभो वर्षणाद्' इति भाष्यम् ॥

परिमलमिति । एतदुद्धरणं न शुद्धरूपेण मुद्रितम् । परिमलशब्दस्यैरजन्तत्वाभावात् । परस्तान्मुद्रिते परिमय इत्यादिपाठेऽर्थासामञ्जस्यम् । गौणवचन इत्यत्र गुणवचन इति पाठो युक्तः, स्वार्थे वाण्प्रत्ययः । स्त्रीत्वापादनेन च कस्तूरिकाविशेषणं परिमल इति लक्ष्यते ।

भयनं भीरिति । न्यासे तु भीतिर्भीरिति लभ्यते सम्प्रति । भागवृत्तिमतेनाह—क्तादीत्यादि । प्राप्तीत्यादि । अप्राप्ते निषेधानर्थक्यात् । क्तादिना = तदन्तप्रयोगस्य प्रसिद्धत्वेन । तर्हि सर्वत्रैव वाऽसरूपविधिप्रवृत्तौ स्यादव्यवस्थेत्यत आह—व्यवस्थितेत्यादि । तथा च यथाप्रयोगं व्यवस्थेति न दोषः । वाक्यस्य = रक्षितवचनस्य । भाष्यम् पश्यशायामिति शेषः ॥

## ऋदोरप् ॥ ३।३।५७ ॥

कथम् 'अतिशयो भरः' इत्यमरः, भृञोऽदीर्घान्तत्वात् ? उच्यते । 'भॄ भरणे' इति क्र्यादेर्दीर्घान्तत्वात् ॥ कथं 'रूपावतारप्रक्रिया' ? उच्यते । करणाधिकरणयोः 'अवे तॄस्त्रोर्घञ्' (३।३।१२०) इति ॥ कथम् 'अवतारो नद्याः' ? उच्यते । बाहुलकाद् घञिति वृत्तिकारः ॥ कथं 'रुद्धोरुदन्तमुसलप्रसरं निपेते' इति माघः, सर्त्तेरदीर्घान्तत्वात् ? उच्यते । बहुलवचनाद्, घञि संज्ञापूर्वकत्वाद् वृद्ध्यभावे गुण इत्यन्यः ॥

भॄ भर्त्सने इत्यत्र भर्जने चेति स्वामी । भरणेप्येके पठन्तीति माधवादयः । तस्यैतद्रूपम् । भौवादिकस्यैव पचाद्यपि वा रूपम् । पूर्वमुपपादनं पुरुषकारेऽपि । बाहुलकादिति । प्रायग्रहणस्योपाधिभूतसंज्ञोपाधित्वादसंज्ञायामपीति तु काशिका । समाधानान्तरम्—घञीत्यादि ॥

## ग्रहवृदृनिश्चिगमश्च ॥ ३।३।५८ ॥

कथं 'कण्ठे स्वयंग्राहनिषक्तबाहुः' इति कुमारः, 'ग्राहं गतास्तत्र कथञ्चिदन्ये' इति ? उच्यते । बाहुलकत्वाद् घञ् । यद्वा ग्रह एव ग्राहः, प्रज्ञादित्वादण् ॥ कथं 'परिवारशतैर्वृतः' इति, सामान्यग्रहणाद् ? उच्यते । परिवारयति परिवारः । कथं तर्हि 'परीवारौ पर्यभूतां तथापि

माम्' इति भट्टिः। घञि सति 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६।३।१२२) इति दीर्घत्वात् ? उच्यते। बाहुलकाद् भावे घञि, वृद्धिः, दीर्घः ।। कथं 'क्रियते सारसङ्ग्रहः', 'हलश्च' (३।३।१२१) इति करणाधिकरणयोर्घञापो बाधनात् ? उच्यते। 'करणाधिकरणयोश्च' (३।३।११७)इति ल्युटा घञ् बाधितः, सोपि 'हलश्च' इति घञा, ततश्च वाऽसरूपविधिना यथा ल्युट्, तथा तद्विषये वाऽसरूपविधिना अबपि भवति। 'क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति' इत्यत्र भावल्युटो ग्रहणमिति 'प्रत्यय'सूत्रे 'एरच्' (३।३।५६) इत्यच् प्रवर्तत इति इन्दुनोक्तम्। रक्षितेन तु सामान्येन ल्युट् गृहीतः। तन्मते बाहुलकादच् ।। कथं 'याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा' इति मेघः। 'घञजपाः पुंसि' इति पुंस्त्वात् ? उच्यते। प्रायिकत्वमस्योक्तमेव। कर्मणि वा अप्। अव्ययं वा। तदुक्तम्—'देवादीप्सितजामात्रोर्वरं श्रेष्ठे पुनस्त्रिषु। मनागिष्टे भवेत् क्लीबमन्ये त्वाहुस्तदव्ययम्' इति ।।

कथमिति। विभाषा ग्रह इत्यस्य तु व्यवस्थितविभाषात्वान्न तेन निर्वाहः शक्यः। अर्थभेदश्च। सामान्यग्रहणादिति। वृङ्वृञोरित्यर्थः। तथा च न भौवादिकादपीष्टसिद्धिः। परिवारयतीति। एरज् भवतीत्यर्थः। यद्यजन्तः परिवारशब्दः कथं तर्हि दीर्घ इत्याशङ्कते—कथमिति। वरमित्यत्र प्रश्नः ।।

### व्यधजपोरनुपसर्गे ।। ३।३।६१ ।।

कथं 'कर्णजापः', 'शूद्रस्य मन्त्रजापं प्रत्यनधिकाराद्' इति न्यासः ? भाषार्थत्वाद् 'वृतु वृधु जप भाषार्थाः' इति चुरादिपाठाण्णिजन्तत्वाद् घञचोरन्यतरः ।।

घञपोरिति मुद्रितः पाठोऽयुक्तः। यद्वा प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणेन समाधेयम्। कर्णजाप इत्यत्र बहुलवचनात्सप्तम्या लुक् ।।

### मदोऽनुपसर्गे ।। ३।३।६७ ।।

कथं 'मादो मदः' इत्यमरः ? उच्यते। 'सध मादस्थयोश्छन्दसि' (६।३।९६) इति निर्देशात्। 'स्वनहसोर्वा' (६।३।६२) इति

वाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानादिति 'सध मादस्थयोः' इत्यत्रान्यः। 'भावे', 'अकर्तरि च कारके' ( ३।३।१९ ) इत्यनुवृत्तेः कर्तर्यसम्भवात्। न च कर्तरीत्यन्यः॥

निर्देशस्य छान्दसत्वेन कथं लोके प्रयोग इत्यत आह—स्वनेत्यादि। एतच्च छान्दसमेव न्यास उक्तम्। अतो बाहुलकाद् घञिति पुरुषोत्तमः। न्यासकृत्तु व्यधजपोरनुपसर्ग इत्यत्रैव मदिग्रहणेपि कर्त्तव्ये पृथग्योगकरणमस्यानित्यत्वज्ञापनार्थम्, तेन घञपि भवतीति समाधत्ते। हरदत्तस्तु अनार्षत्वान्निराचष्ट एतत्। मादयतीति णिजन्ताद् घञ् तु दुर्लभ इत्याह—भाव इत्यादिना। न चाप्ययं मादशब्दो बाहुलकात् कर्त्तरि व्युत्पन्न इत्याह—न च कर्त्तरीति। तथा सति विवक्षितार्थालाभादित्याशयः॥

## सङ्घोद्घौ गणप्रशंसयोः॥ ३।३।८६॥

कथं 'दमित्वाऽप्यरिसङ्घातान्' इति भट्टिः? उच्यते। 'पूर्वं धातुः साधनेन युज्यते' इति। (घात)यतेर्वा॥

संघातशब्दो घञन्त इति मत्वा प्रश्नः। पूर्वं धातुरिति। तथा च हनश्च वध इति भिन्नक्रमचकारेण घञोपि संग्रहात्पूर्वं घात इति घञन्तो व्युत्पाद्यः। हनस्तोऽचिण्णलोरिति तकारादेशः, हो हन्तेरिति कुत्वम्। ततश्च संशब्देन समासे सङ्घात इत्येकं समाधानम्। यद्वा हनश्च वध इत्यत्र घातशब्दस्य करणे व्युत्पादितत्वेन हनस्त च इत्यनेनानुपसर्गे सुप्युपपदे क्यब्विधानात् सोपसर्गादनुपपदाच्च भाव एव घञि घात इति शब्दो व्युत्पाद्यः। केचित्तु 'सङ्घसार्थौ तु जन्तुभिः' इत्यमरवचनात्प्राणिसमूह एव सङ्घेति निपातनादन्यत्र घञेवेति व्यवस्थामपीच्छन्ति। भागुरिप्रभृतयस्तु 'सङ्घसङ्घातपुञ्जौघसार्थयूथकदम्बकाः' इति वदन्तः पर्यायतामाहुः। घातयतेरिति। णिजन्तादच् कर्त्तव्य इति शेषः॥

## उपसर्गे घोः किः॥ ३।३।९२॥

कथं 'विश्वसृड्विधिः' इत्यमरः, 'भावे अकर्तरि च कारके' इत्यनुवृत्तेः कर्तर्यसम्भवात्। न च कर्तुः करणत्वविवक्षायां भविष्यति, ल्युटा बाधितत्वात्। न च वासरूपविधिः। 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति' इति 'समर्थ' ( २।१।१ ) सूत्रे रक्षितः? उच्यते। बहुलवचनात् कर्तरि किः॥

कर्त्तरि किरिति। मैत्रेयादयस्तु 'विध विधाने' इति तौदादिकस्यौणादिकेन्प्रत्ययान्तस्य रूपमाहुः। इगुपधात्किदिति कित्त्वाच्च न गुणः। सूचितं चैतत्समर्थसूत्रे भाष्येऽपि, स्पष्टीकृतं च कैयटे। आद्युदात्तत्वमिति। किप्रत्यये तु अन्तोदात्तत्वमिति विशेषः॥

## स्त्रियां क्तिन्॥ ३।३।९४॥

'ग्लाज्याहाभ्यो निः', कथं 'म्लानिः'? बाहुलकात्। पुरुषोत्तमदेवस्तु 'ग्लाज्याहाभ्यः' इत्यत्र म्लैधातुमपि पठति॥

पठतीति। माघवादयोऽप्येवम्॥

## ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च॥ ३।३।९७॥

कथं 'कीर्त्तना'? उच्यते। बाहुलकाद्युच्॥

कीर्त्तनेति। एतच्च कालापाः प्रयुञ्जते॥

## व्रजयजोर्भावे क्यप्॥ ३।३।९८॥

कथं 'यष्टिः'? उच्यते। बाहुलकाद्वासरूपविधिना। अस्त्रियामित्यल्पार्थे नञ्॥

बाहुलकादिति। पुरुषोत्तमादिमतेन। वाऽसरूपेति समाधानान्तरम्। अल्पार्थ इति। एतेन प्रायिकत्वमुक्तम्। दण्डार्थकस्य यष्टिशब्दस्य तु व्युत्पत्तिः जक्ष भक्ष हसनयोरित्यादादिकस्य अन्तस्थादित्ववादिमतेन क्तिना क्तिचा वेति केचित्। आत्रेयादयस्तु तदसाम्प्रदायिकमित्याहुः। तथा च यक्ष पूजायामिति चौरादिकादेव पूजार्थकस्यैवानेकार्थत्वाद्दण्डार्थकस्यापि निष्पत्तिः॥

## संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः॥ ३।३।९९॥

कथं 'भार्या'? उच्यते। स्वभावाद्भावे क्यप्। तेन 'भृञोऽसंज्ञायाम्' (३।१।११२) इति कर्मणि क्यपि भृत्या। संज्ञायां तु ण्यति भार्येति वृत्तिः॥ कथं 'भृतिर्वेतनम्'? उच्यते। 'कर्मणि भृतौ' (३।२।२२) इति निर्देशात्॥ कथं 'सभासमितिसंसदः'? उच्यते। बाहुलकादिना क्तिन्। 'इट किट कटी गतौ' इत्यत्र इ गताविंत्यतो वा॥ कथं 'मतिः', कथम् 'आसुतिः'? उच्यते। 'मतिबुद्धि' (३।२।१८८) इति, 'रजःकृष्यासुति' (५।२।११२) इति निर्देशात्॥

स्वभावादिति । भृत्येतिशब्दशक्तिस्वभावादित्यर्थः । अतः करणे ण्यदेवेतिभावः । बाहुलकाद्वा । एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति नियमाद् डुभृञो वा ण्यति भार्येति । प्रकृते भृञ एव ग्रहणम् । भरणार्थकत्वेन केषाञ्चिदभिमतात् क्र्यादिकाद् भृ इति दीर्घान्ताद्वेति । विस्तरस्तु भृञोऽसंज्ञायामिति सूत्रभाष्यवृत्त्यादौ । सह विद्यमाना मितिः प्रमा यस्यामित्येवमपि समितिशब्दो व्युत्पाद्यः । निर्देशादिति । तथा च मत्यादयः शब्दा निपातनात्साधवः ॥

## अ प्रत्ययात् ॥ ३।३।१०२ ॥

कथं 'कण्डूतिर्वदनादपैति शिरसः' इत्युदात्तः, कण्ड्वादियगन्तादनेनाकारप्रत्ययात् ? उच्यते । द्विविधाः कण्ड्वादयो धातवः प्रातिपदिकानि च । तत्र प्रातिपदिकस्योतिशब्देन प्रवेशे दीप्तौ वृद्धौ वा वृत्तेन कण्ड्वा ऊतिरिति षष्ठीसमासेन साधुः । यद्येवं कथं 'न पदान्त' ( १।१।५८ ) इत्यत्र क्तिन्प्रत्यये वलिलोपस्योदाहरणम् ? उच्यते । न्यासकृता 'स्त्रियां क्तिन्' इति यदुक्तं तत् 'कृत्यल्युटो बहुलम्' ( ३।३।११३ ) इति स्वीकृत्य । तथा चापशब्द एवायम् । बहुलवचनाद्वा क्तिन्निति रक्षितः । भाषावृत्तौ तु क्तिन्नन्तेन । 'कथं प्रथना(?) उच्यते । 'क्तिन्नावादिभ्यः' इति क्तिनि न चैवं क्तिना बाधितत्वाद् 'अ प्रत्ययाद्' इत्यप्रत्ययो न स्यात् ॥ यावता क्तिन्नात्यन्ताय बाधकः, यथा 'व्यवस्थायामसंज्ञायाम्' ( १।१।३४ ) इति निर्देशात् 'स्थागापापचो भावे' ( ३।३।९५ ) इति क्तिना नाङ् बाध्यते । औणादिको वा द्रष्टव्यः ॥

कथं 'शोभा', अगुरुमत्त्वात् ? उच्यते । 'शुभ शुम्भ शोभार्थे' इति निर्देशात्, चकारस्यानुक्तसमुच्चयार्थत्वाद्वा । अथवा घञेवायम् । लोकाश्रयत्वाल्लिङ्गस्य स्त्रीत्वम् ॥ कथं 'पीडा', 'पीड अवगाहने' इति चौरादिकः । ततो 'ण्यासश्रन्थ' ( ३।३।१०७ ) इति युचा भाव्यम् ? उच्यते । 'आर्धधातुके' ( ६।४।४६ ) इति विषयसप्तम्यां णिचो लोपे 'गुरोश्च' ( ३।३।१०३ ) इत्यकारप्रत्ययः । परसप्तम्यां तु वा । तेन 'कुरुराजनिर्दयनिपीडनाभयाद्' इति माघः ॥

अकारप्रत्ययादिति । तथा च कण्डूयेति स्यात् । वाऽसरूपसूत्रेपीदं विवेचितं वृत्तौ । ऊतिशब्दः अवधातोर्निष्पन्नः क्तिना, ज्वरत्वरेत्यादिनोठ् । 'प्रदेशे' इत्यपपाठो मुद्रितः । भागवृत्तिकृन्मतमाह—अपशब्द इति । क्तिन्नन्तः कण्डूतिशब्दस्तथा । भाषावृत्तावित्यारभ्य न स्यादित्यन्तो ग्रन्थो व्यस्त इवाभाति । तत्र "भाषावृत्तौ तु क्तिजन्त एव । 'क्तिन्नाबादिभ्यः' इति क्तिनि वा । न चैवं कथं कण्डूया, क्तिना बाधितत्वाद् 'अ प्रत्ययाद्' इत्यप्रत्ययो न स्यात् ? उच्यते" इत्येवं पाठो युक्तः प्रतीयते । मातृकान्तरोपलम्भे तु निर्णयः सम्भवति । न स्यादित्यतः परम् इति वाच्यम् इति शेषः । न पदान्तसूत्रस्थभाष्यस्वारस्यात्तु क्तिजन्तः कण्डूतिशब्दः, न क्तिन्नन्तः ।

निर्देशादिति । अर्थनिर्देशस्यानार्षत्वेन शोभार्थ इति निर्देशस्याप्रामाणिकत्वमाशङ्क्य पुरुषोत्तमादिसम्मतं समाधानान्तरमाह—चकारस्येति । गुरोश्च हल इत्यत्रेत्यर्थः । एतदप्यनाकरमित्यत आह—अथवेति । घत्रेवेति । पचाद्यचा वा समाधेयम् । विषयसप्तम्यामिति । तथा चार्धधातुकोत्पत्तेः पूर्वमेव णेरनिटीति लोपे पश्चात्प्रत्ययः । अकारप्रत्यय इति । भिदादिपाठादङ्ङित्येव युक्तम् । वेति । स्त्र्यधिकारेऽपि वाऽसरूपविधेः यथाप्रयोगं प्रवृत्तेरित्यर्थः ॥

## षिद्भिदादिभ्योऽङ् ॥ ३।३।१०४ ॥

कथम् 'उपलब्धिः', लभेः षित्त्वाद् अङा भाव्यम् ? उच्यते । रभेः क्तिनि रलयोरेकत्वस्मरणात् । लभेराबादित्वात् क्तिन् । केचित् पुनः 'डुलभ प्राप्तौ' इत्यषितमेनं पठन्ति । तन्मतेनाव्याहतमेव क्तिन् । बाहुल्यात् क्तिन्निति भाषावृत्तिः ॥ कथं 'क्षान्तिः' ? उच्यते । दैवादिकादषितः ॥ कथं 'सपक्षः परभित्तिकृद्' इति माघो विदारणार्थे, 'अन्यत्र तु भित्तिः, भिदा विदारणे' इतीष्टेः ? उच्यते । प्रायिकम् उपाधिवचनम्, 'धारा प्रपतने, धृतिरन्या' इत्यस्य प्रायिकत्वाद् । बहुलवचनाद्वा क्तिन् । 'सपक्षः परभेदनः' इति पठन्ति ॥ कथं 'मृजान्वयाः स्नेहमिव स्रवन्तीः' इति भट्टिः ? उच्यते । भिदादेराकृतिगणत्वात् 'चिन्तिपूजिकथिकुम्बिचर्चश्च' ( ३।३।१०५ ) इति चकाराद्वा । एवं स्पृहा चुरा रुजेति । यद्वा चुरेति 'छत्रादि' ( ४।४।६२ ) पाठाद्, आरुजेति 'रुजार्थानाम्' ( २।३।५४ ) इति निर्देशात् । मृष्टिरिति 'मृजू शौचालङ्कारयोः इति चौरादिकात् क्तिन् ॥

अर्थसङ्गतेः प्रकारान्तरमाह—लभेरिति। आबादित्वादिति। 'क्तिन्नाबादिभ्यः' इति वचनात्। अङि तु 'उपलम्भा' इति स्यात्। अषित इति। तथा च दैवे—'अषितः क्षाम्यतेः क्षान्तिः' (१४६) इति। वर्धमानादयोप्येवम्। ये तु अमुमपि षितं पठन्ति तन्मते बाहुलकादाबादित्वाद्वा क्तिन्। अनुनासिकस्य क्विझलोरिति दीर्घः। परभित्तिकृदित्यत्र 'परभिन्दकः' 'परभदेकः' इति च प्रसिद्धौ पाठौ। तत्र नाऽशङ्का। धारा प्रपतने, धृतिरन्येत्यत्र भिदा विदारणे, भित्तिरन्येति पाठ उचितः। प्रायिकत्वं भाष्याद्यनुक्तमित्यतो बाहुलकादित्यप्युक्तम्। मृजू शुद्धावित्यादादिकस्याषित्त्वाद्भिदादित्वादङ्ङित्युक्तम्। यद्यपि क्षीरतरङ्गिण्यामयमपि षिद् दृश्यते तथापि लेखकप्रमादजं तत्, अन्यथा भिदादित्वान्मृजेति तदुक्तिर्न संगच्छते। वृद्ध्यभावश्च मृजेत्यत्र गणपाठादेव। मृष्टिरिति। स्वामी तु चौरादिकं षितं मन्यते, तन्मते बाहुलकात् क्तिन्॥

**आतश्चोपसर्गे ॥ ३।३।१०६ ॥**

कथं 'प्रमितौ प्रमा' इत्यमरः, 'श्रीनिर्मितिप्राप्तघुणक्षतैकवर्णोपमावाच्यमलं ममार्ज' इति माघः? उच्यते। बाहुलकात् क्तिन्निति भाषावृत्तिः॥

प्रमितिनिर्मितिशब्दयोः प्रश्नः। भाषावृत्तिरिति। माधवादयोऽप्येवम्॥

**ण्यासश्रन्थो युच् ॥ ३।३।१०७ ॥**

कथं 'दंष्ट्रातुला'? उच्यते। 'अतुलोपमाभ्याम्' (२।३।७२) इति निर्देशात्॥ कथं पाचयतेः 'पाक्तिः'? उच्यते। बाहुलकात्॥

निर्देशादिति। अङ्, गुणाभावश्च साध्यौ निर्देशबलेन। चिन्तिपूजिकथीत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वादङ् स्वामिहरदत्तादिमतेन। मैत्रेयस्तु णिचोऽनित्यत्वादेव समाधत्ते। तथा च पचाद्यचापि सिध्यति॥

**रोगाख्यायां ण्वुल् बहुलम् ॥ ३।३।१०८ ॥**

'वर्णात् कारः'। कथम् 'एवकारः', 'हुङ्कारेणैव तम्' इति वर्णसमुदायात् कारप्रत्ययः? बाहुलकाद्। घञा वा समासः॥ 'रादिफः'। कथं 'रकारादीन् वर्णान्' इति कल्पपञ्जिका? उच्यते। क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तते॥

घञेति। कारशब्देन घञन्तेन एवस्य कार इति षष्ठीसमास इत्यर्थः। एवं सति 'उक्तं चकारकरणस्य प्रयोजनम्' इति विभाषा वृक्षेत्यादिसूत्रभाष्यप्रयोगादौ पौन-

रुक्त्येनाप्रामाणिकत्वप्रसंग इति बाहुलकादेव समाधेयम्। वषट्कार इत्यादिनिर्देशाच्च। प्रवर्त्तते इति। वाऽसरूपविधिनाऽपि समाधातुं शक्यते॥

### ल्युट् च ॥ ३।३।११५ ॥

कथम् 'इतिकरणो विवक्षार्थः' (इति) 'तत्र तेनेदमिति सरूपे' (२।२।२७) इत्यत्र वृत्तिः। 'इतिकरणो हेतौ' इति 'एकाचो द्वे' (६।१।१) इत्यत्र न्यासः? उच्यते। क्रियत इति करणः शब्दः। 'कृत्यल्युटो बहुलम्'। (३।३।११३) इति ल्युट्॥ कथं 'स ते करोतु कल्याणं यस्यैते पञ्च भूषणाः' इति? उच्यते। 'कृधमण्डार्थेभ्यश्च' (३।२।१५१) इति युचि पुल्लिङ्गोऽयम्॥

करण इत्यस्य प्रकृतसूत्रोक्तल्युडन्तत्वे भावार्थकत्वनपुंसकत्वे स्यातामिति प्रश्नः॥

### ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ ३।३।१२६ ॥

कथं 'दुर्योधनः' इति? उच्यते। केवलाल्ल्युट्॥

केवलाण्ण्यदिति मुद्रितोऽपपाठः। कर्त्तरि च ल्युट्, ततः प्रादिसमासः॥

### आतो युच् ॥ ३।३।१२८ ॥

कथं 'दुर्विज्ञेयमपि धर्मं श्रद्दधात्युदारधीः' इति प्रयोगः, वाऽसरूपविधिर्नास्ति; 'क्तल्युट्तुमुन्खलर्थेषु' इति वचनात्? उच्यते। दुःखेन ज्ञेयमिति प्रादिसमासः॥

दुर्विज्ञेयमिति। दुर्विज्ञानमिति युक्तमिति प्रश्नः॥

### लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ ३।३।१३९ ॥

कथं 'लज्जा तिरश्चां यदि चेतसि स्याद्' इति? उच्यते। क्रियातिपत्तेरविवक्षितत्वात्। विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणमित्युक्तम्॥

उक्तमिति। तदाद्याचिख्यासायामिति मानमत्र॥

### प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ ३।३।१६३ ॥

कथम् 'इदानीं करिष्यसि', इदानीमेवेति प्रेषणस्य वृत्तत्वात्

कृत्यलोड्भ्यां भवितव्यं सर्वलकारापवादत्वात् ? उच्यते। पदसंस्कारे साधुः। एवं 'श्वो गमिष्यसि' इत्यादिरपि साधुः॥

श्वो गमिष्यसीति तु नानद्यतनवत् क्रियाप्रबन्धइत्यादिना भविष्यत्यपि साधुः॥

**माङि लुङ्॥ ३।३।१७५॥**

कथं 'मा भवतु तस्याः पापम्' इति ? उच्यते। माशब्देऽङिति भविष्यति। कथं 'माच्छादयामि' इति रूपावतारः ? उच्यते। पदसंस्कारे॥

इति शरणदेवविरचितदुर्घटवृत्तौ तृतीयाध्याये तृतीयः पादः॥

अङितीति। आङ्माङोश्चेति सूत्रस्थभाष्यविरोधात्प्रामादिकोऽयं प्रयोग इत्यपि केचित्॥

इति दुर्घटवृत्तिविवृतौ तृतीयाध्यायस्य तृतीयः पादः॥

## अथ चतुर्थः पादः॥

**धातुसम्बन्धे प्रत्ययाः॥ ३।४।१॥**

**समानकर्तृकयोः पूर्वकाले॥ ३।४।२१॥**

**कथम्**

अवजानासि मां यस्मादतस्ते न भविष्यति।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा॥ इति रघुः।

तथा 'कूपोदके मुखं दृष्ट्वा सद्यस्तुष्यति केशवः'। 'स्नात्वा सुखं भवति'। 'मासेन भुक्त्वा तुष्टिः स्यात्'। भिन्नकर्तृकत्वात् ? उच्यते। स्थितस्येत्यध्याहार्यमिति भाषावृत्तिः। यद्वा 'अनाराध्य' इति तु हेतुमण्णिजन्तात्। प्रजैव प्रयोजककर्त्री॥ कथं 'केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम्' ? उच्यते। वृतेरन्तर्भावितण्यर्थत्वाद्युद्धमित्यभिहितं कर्मेति समानकर्तृकतेति रक्षितः॥ कथं 'कणेहत्य पयः पिबति', 'उदरं पूरयित्वा भुङ्क्ते', समानकालत्वात् ? उच्यते। 'कणेहत्य' इत्यत्राभिलाषनिवर्तनानन्तरं यत्पानं तदपेक्षया पूर्वकालत्वादिति 'कणेमनसो'

(१।४।६६) इत्यत्र रक्षितः। 'चक्षुषी निमील्य' इत्याद्युपसङ्ख्यानादिति भाषावृत्तिः ।। कथं 'कृत्वा विप्रकुलं व्रजति' इति, नपुंसकह्रस्वत्वप्रसङ्गात् ? उच्यते। तुमर्थेऽस्य विधानात् कर्तृक्लीबत्वस्याविधानाद् गुणत्वादिति रक्षितः। यद्येवं 'समासेऽनञ्पूर्वे' (७।१।३७) इत्यत्र न्यासे कर्तरि क्त्वाप्रत्यय उक्तः ? परमं[1] कृत्वेति समानाधिकरणनिर्देशपरं तदिति रक्षितः ।। कथं 'पूर्वापरौ वारिनिधी विगाह्य स्थितः' इति, अपूर्वकालत्वात् ? उच्यते। स्थितः स्थिर इत्यर्थः। ऊर्ध्वं स्थित इति पुरुषोत्तमदेवः ।।

प्रयोजककर्त्रीति। तथा च प्रजाया एवोभयत्र कर्तृत्वात्समानकर्तृकत्वमुपपन्नम्। अन्तर्भावितेत्यादि। तथा च युद्धप्रवर्त्तकस्यैवोभयत्र कर्तृत्वम्, युद्धमिति न कर्त्तरि प्रथमा, अपि त्वभिहिते कर्मण्येवेति भावः। कणेहत्येति। कणे शब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशयार्थकः। तथा चाभिलाषनिवृत्तिपर्यन्तं पयः पिबतीत्यर्थः। कणेमनसी····इति गतित्वात्समासे क्त्वो ल्यपि तुगादौ कणेहत्येति रूपम्। तत्र समानकालत्वमापातत एव प्रतीतम्। नपुंसकह्रस्वत्वेति। सुबन्ततिङन्तनिवृत्त्यर्थं ह्रस्वसूत्रे कृतेन प्रातिपदिकग्रहणेन यथा क्रियायां परम्परया लिङ्गवत्त्वं तथा कृत्वेत्यादीनामपि। यद्वा क्रियाविशेषणत्वादेव क्त्वान्तस्य वाचनिकं नपुंसकत्वम्। अतो ह्रस्वप्रसङ्ग इत्यर्थः। रक्षितग्रन्थस्त्वस्पष्टः ।।

**अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ।। ३।४।२७ ।।**

कथम् 'अन्यथा कृत्वा गतः', तथा 'कथं कृत्वा' इति। अनेन णमुल्भावात् ? उच्यते। 'अन्यथा कृत्वा चोदितम् अन्यथा कृत्वा परिहृतम्' इति भाष्याद्, वाऽसरूपविधिना वा। स्त्र्यधिकारात् परेण वाऽसरूपविधिः प्रायिक इति रक्षितः ।।

रक्षित इति। ज्ञापकं चात्र प्रैषातिसर्गादिसूत्रे कृत्यग्रहणादि ।।

**कषादिषु यथाविध्यनुप्रयोगः ।। ३।४।४६ ।।**

कथम् 'अपुषत् स्वपोषम्' इति भट्टिः, यतोऽनुप्रयोगः पश्चात्प्रयोगः ? अनुशब्दोऽयं समीपवाची 'अनुर्यत्समया' ( २।१।१५ ) इतिवत् ।।

---

१. 'परमः' इति मुद्रितः पाठोऽयुक्तः।

समीपवाचीति। एतच्च प्रयोगानुसारि व्याख्यानम्। अतएव भागवृत्तिपदमञ्जरीन्यासादिष्वप्येवमेव विवृतम् ॥

**कर्तरि कृत् ॥ ३।४।६७ ॥**

कथं 'स्वस्थे को वा न पण्डितः', स्वास्थ्य इत्यत्रार्थः ? 'सुपि स्थः' (३।२।४) इत्यत्र सुपीति योगविभागात् कः, 'आखूत्थं वर्तते' इतिवत्। 'स्वस्थः को वा'[1] इति पाठः ॥

अर्थं इति। तथा च भावेऽयं प्रत्ययोऽनुशासनविरुद्धः। समाधत्ते–सुपीत्यादिना। योगविभागश्च वृत्त्यादावुक्त एव ॥

**तयोरेव कृत्यक्तखलर्थाः ॥ ३।४।७० ॥**

कथं 'फलानामाशितः' इति 'पूरणादि' (२।२।११) सूत्रे वृत्तिः। अश्नातेः सकर्मकत्वात् कर्तरि क्तो न स्यात् ? उच्यते। 'आशितः कर्ता (६।१।२०७) इति स्वरसूत्रे निपातनात् कर्तरि क्त इति भाष्यम्। अविवक्षितकर्मत्वादकर्मकत्वे कर्तरि क्तः। आङ्पूर्वत्वाद् दीर्घ इति वृत्तिः। एवं 'गुरौ भक्तः' इत्यादौ गुरोः कर्मणोऽधिकरणत्वेन विवक्षितत्वादकर्मकत्वे कर्तरि क्तः। भक्तियोगाद्वा अर्शआद्यजन्तः। एवं 'भुक्ता ब्राह्मणाः' 'वनाय पीतप्रतिबद्धवत्साम्' इत्यजन्तः। 'पीतप्रतिबद्ध' इत्यत्र पिबतिर्वान्तर्भावितण्यर्थः। पायित इत्यर्थः ॥ कथं 'भवितव्यप्रियसङ्गमं वपुः' इति कुमारः, कर्मणोऽभावात् ? उच्यते। 'भू प्राप्तौ' इत्यस्य 'आधृषाद्वा' इत्यण्यन्तस्य रूपम् ॥ कथं 'शयनीयं शय्या' इति ? उच्यते। 'कृत्यल्युटो बहुलम्' (३।३।११३) इत्यधिकरणे ॥ कथं 'सोमनाथबन्धुमहं नतो जगदीश्वरम्' इति, 'कृष्णं श्रितः' इति कर्तरि क्तः ? उच्यते। नमनं हि गतिभेद इति वैशेषिकाः, यदाहुः—'भ्रमणाकुञ्चनप्रसारणोर्ध्वज्वलननमनादयो गतिविशेषाः'[2] इति। सेवाप्यर्थगतेरेवाश्रयणात्(?)प्राप्तिर्गतिरेवेति 'गत्यर्थाकर्मक'(३।४।७२) इत्यादिना क्तः ॥

१. 'सुस्थे (?) को वा' इति मुद्रितम्।
२. 'गतिविषयाः' इति मुद्रितः पाठः।

वृत्तिरत्र काशिका प्रतीयते, परमेतदुदाहरणं भाषावृत्तावेव लभ्यते, न काशिकायाम्। काशिकानुसारेण समाधत्ते—अविवक्षितेत्यादि। क्त इति। गत्यर्थाकर्मक इति सूत्रेण। अतश्च पदपाठेऽवग्रहाभावायोपधादीर्घत्वमपि वार्त्तिककृदभिमतम्। वृत्तिकारस्तु संहितापाठस्यैव नित्यत्वं मन्यमानो नात्र सम्मतः। अशेर्ण्यन्तस्य प्रयोज्यकर्त्तरि निष्ठायां क्तः। गतिबुद्धि० इति कर्मत्वात्, प्रयोज्यकर्त्तैवात्र भूतपूर्वगत्या विवक्षित इत्यपि केचित्। गतिविषया इति मुद्रितः पाठोऽयुक्तः॥ आदिकर्मणि क्त इत्यपि कश्चित्॥

## टित आत्मनेपदानां टेरे ॥ ३।४।७९ ॥

कथं 'कर्त्तारौ कर्त्तारः' इति न टेरेत्वम्? उच्यते। कृतटेरेत्वस्य आदेशौ जातौ। लक्षणाभावात्। यद्वा 'थासः से' (३।४।८०) इत्यत्र सकारादेशे कर्तव्ये एकारान्तादेशो ज्ञापयति आदेशादेशानां टेरेत्वं नेति। शेरते श्रयन्त इत्यत्र तु लादेशस्यैकदेशादेश इति टेरेत्वम्। एत्वे कृते वा अदादेशः॥

लक्षणाभावादिति। कृतैत्वस्यादेशे पुनष्टेरेत्वविधायकसूत्राभावादित्यर्थः। प्रकृतसूत्रं तु न प्रवर्त्तते, लक्ष्ये लक्षणन्यायादिति निगर्वः। स्थानिभेदेन लक्ष्यभेदान्न लक्ष्ये लक्षणन्यायस्यायं विषय इति मत्वा ज्ञापकेन तद्वारयितुमाह—यद्वेति। एत्वं नेति। एतत्सर्वं न्यासपदमञ्जर्यादिषु स्पष्टम्। एकदेशस्येति। व्यजनमात्रस्य झ् इत्यस्येत्यर्थः॥

## एरुः ॥ ३।४।८६ ॥

कथं लोटि 'जयति' इति प्रक्रिया? अनभिधानादिति केचित्। न, भाष्यादौ प्रत्ययानुक्तत्वात्, 'जयतु जयतु भट्टाः' इति ने(मि)-सन्धाने दर्शनात्। न च प्राकृतानुशासनमस्ति। किञ्च तुशब्दस्थानिकस्तातङ् च दृश्यते—

उत्पन्नसर्वमाङ्गल्यो नष्टनिश्शेषचेष्टितः।
स्वायगम्यनयः कोपि जयताद्राज्ञो महाचरः॥

प्रत्ययानुक्तत्वादित्यत्र 'तथाऽनुक्तत्वाद्' इति पाठः साधुः प्रतीयते। तथा च लोटि जयतीत्यसाधुरेवेति निष्कर्षः। विभक्तिप्रतिरूपकत्वेन वा कथञ्चित् समाधेयम्। जयतादित्यत्र जयेदिति पाठ उचितः प्रतीयते॥

## नित्यं ङितः ।। ३।४।९९ ।।

कथं 'मातः ! किं विदधामः' इति कुट्टनीमतम्, 'लोटो लङ्वद्' ( ३।४।८५ ) इत्यतिदेशेन 'नित्यं ङितः' इति सलोपप्रसङ्गात् ? उच्यते। 'लोटो लङ्वद्' इत्यत्र वृत्तौ 'विदो लटो वा' ( ३।४।८३ ) इत्यतो वाग्रहणानुवृत्तेरडादिव्यावृत्त्यर्थं व्यवस्थितविभाषाश्रयणादत्रापि न सलोपः। सलोपे च 'पदान्तेषु बहुलम्' इति गुरुत्वे द्विमात्रता। "विदधीमहि' इति वा पाठः कर्त्तव्यः ।।

अत्रापीत्यतः परं 'लङ्वत्त्वातिदेशाभावे' इति शेष ऊह्यः ।।

## यासुट् परस्मैपदेषूदात्तो ङिच्च ।। ३।४।१०३ ।।

कथं 'जिघांसन्तं जिघांसीयाद्' इति, जिघांसधातोर्लिङि तिपि यासुटि जिघांस्यादिति स्यात् ? उच्यते। 'जिघांसी' इत्यावश्यके णिनिः। 'इयाद्' इतीण्धातोर्लिङ् ।।

इति शरणदेवविरचितदुर्घटवृत्तौ तृतीयाध्याये चतुर्थः पादः ।।

जिघांसीः अवश्यं हन्तुकामः ।।

इति श्रीनारायणमिश्रविरचितायां दुर्घटवृत्तिविवृतौ तृतीयाध्यायस्य चतुर्थः पादः ।।
इति तृतीयाध्यायः ।।

# अथ चतुर्थाध्याये प्रथमः पादः ।।

## ङ्याप्प्रातिपदिकात् ।। ४।१।१ ।।

## अजाद्यतष्टाप् ।। ४।१।४ ।।

कथं 'त्वं ब्राह्मणी' इति, त्वादेशे लोपे च टाप्प्रसङ्गात् ? उच्यते। 'अलिङ्गे युष्मदस्मदी' इति भाष्यात्। कथं तर्हि 'युष्मदस्मत्तिङव्ययम्' इति लिङ्गादिसंग्रहे त्रिलिङ्गकाण्डशेषे अमरः ? उच्यते। लिङ्ग-सामान्यपरं हि तत्। अथवा 'शेषे लोपः' (७।२।९०) इति टिलोपो व्याख्येयः। तदुक्तम्—'टिलोपष्टाबभावार्थः कर्तव्यः' इति। 'भ्यसो-

ऽभ्यम्' (७।१।३०) अभ्यं वा कार्यः ।। कथं 'वृत्तौ' 'धेनौ'[1] इत्यत्रा दादेशे न टाप् ? सन्नियोगविधानादिति चेन्न, सर्वनामविष(व योविदि ? यवदिह) सन्नियोगाभावात् ? उच्यते । 'अच्च घेः' (७।३।११९) इति तपरनिर्देशो लक्षणान्तरायातदीर्घनिवृत्त्यर्थः । तेन टाब् भावी न भविष्यतीति भावः । 'गर्भवट्टाबादयो भवन्ति' इति ज्ञापकतुल्यत्वाद् असर्वविषयत्वात् । भाष्यकारस्तु सन्निपातलक्षणपरिभाषामाह । का सेत्यत्र सन्निपातलक्षणपरिभाषा न क्रियते, 'न यासयोः' (७।३।४५) इति निर्देशात् । क्तिनोक्तत्वादिति नोच्यते, भाषाशब्दे 'गुरोश्च हलः' (३।३।१०३) इत्यकारप्रत्ययेनोक्तत्वात् टापोऽभावप्रसङ्गात् ।।

त्वादेशे लोप इति । त्वादेशेऽन्तरङ्गत्वात्पररूपेऽन्त्यलोपे च कृते सतीत्यर्थः । भाष्यादिति । साम आकम् इतिसूत्रस्थादित्यादिः । ङे प्रथमयोरित्यादिसूत्रभाष्याद् युष्मदादेरपि लिङ्गवत्त्वम्, अलिङ्गत्ववचनन्तु लिङ्गवत्पदान्तरासमभिव्याहारे सत्येव सार्थकमित्यत आह—अथवेति । तदुक्तमिति । त्यदादीनाम इत्यत्र भाष्य इति शेषः । अदादेश इति । अच्च घेरिति सूत्रेण । टाबिति । तथा च आम्याटौ प्रसज्येते । सन्नियोगेति । औत्वसन्नियोगेनैवात्वस्य विधानात् सति टापि अत्त्वस्य निवृत्त्यौत्वस्यापि निवृत्तौ इष्टरूपासिद्धिरित्यतो न टाबिति शङ्कार्थः । सर्वनामवदिति । यथा यत्र सर्वनामत्वं तत्रैव सर्वनामत्वप्रयुक्तकार्यं तथौत्वात्वयोर्न स्थितिः, अत्वाविषयेऽपि सख्यावित्यादौ औत्वप्रवृत्तेरिति भावः । न भविष्यतीति । अन्यथा सवर्णदीर्घप्रसक्तौ तपरकरणमनर्थकमेव स्यादिति तात्पर्यम् । सन्निपातपरिभाषाया अनित्यत्वमाह—या सेत्यादिना । क्तिनेति वृत्त्यादिशब्दविषयम् ।।

## ऋन्नेभ्यो ङीप् ।। ४।१।५ ।।

कथं 'नप्ता कुमारी' ? उच्यते । भागवृत्तिकृन्नप्तृशब्दं स्वस्रादौ पठितवान् । तेन 'न षट्स्वस्रादिभ्यः' (४।१।१०) इति ङीपो निषेधः । कथं तर्हि 'नप्त्री पौत्री सुतात्मजा' इत्यमरः ? उच्यते । ये स्वस्रादौ न पठन्ति तन्मतेन ।।

भागवृत्तिकृदिति । पुरुषोत्तमानुसारेण भागुरिमतमप्येतदेव । भागुरेर्भागवृत्तिकर्तृत्वं सन्दिग्धमेव । क्वचिद् भागुरिमतेनाऽपि नप्त्रीत्येवेत्युक्तम् ।।

---

१. 'हनौ' इति मुद्रितः पाठोऽशुद्धः ।

## उगितश्च ॥ ४।१।६ ॥

कथं 'करिष्यमाणा पचमाना ब्राह्मणी', उगिल्लक्षणष्टिल्लक्षणश्च ङीप् प्राप्नोति ? उच्यते । यासुटो ङित्त्वेन ज्ञापितं लकाराश्रयं चानुबन्धाश्रयं च कार्यं लादेशे न स्वीक्रियते ॥

उगिल्लक्षणेत्यादि । आद्य उभयलक्षणोऽन्त्ये तु टित्त्वलक्षण इति विवेकः । ङित्त्वेनेति । श्नादेशस्य शानचः शित्त्वेन चेति बोध्यम् । वस्तुतस्तु ङीबेवोचित इत्यन्यत्र विस्तरः ॥

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥ ४।१।१५ ॥

कथं 'सहचरीमशङ्कः पुरुषायुषम्' इति भट्टिः, अधिकरणोपपदाभावात् 'चरेष्टः' (३।२।१६) इत्यस्याभावे पचाद्यच् ? उच्यते । 'भिक्षासेनादायेषु च' (३।२।१७) इति चकारस्यानुक्तसमुच्चयार्थत्वाट्टप्रत्यय इति जयमङ्गला । गौरादिपाठादित्यन्यः ॥ कथं 'मधुपी भ्रमरी', 'गापोष्टक्' (३।२।८) इत्यत्र 'सुराशीध्वोः पिबतेः' इति नियमात् टगभावे मूलविभुजादित्वात् कः, ततश्च टाप्प्रसङ्गात् ? उच्यते । 'जातेरस्त्रीविषयाद्' (४।१।६३) इति ङीप् ॥ कथं 'त्वं श्रीस्त्वमीश्वरी' इति चण्डी । 'स्थेशभास०' (३।२।१७५) इति वरचि टापा भाव्यम् । तथा च भारविः—'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति ? उच्यते । 'अश्नोतेराशुकर्मणि' इति वरटि 'ईच्चोपधायाः' इत्यनुवृत्तेरीत्वे ङीप् ॥ कथं 'लवणा यवागूः', 'लवणाल्लुग्' (४।४।२४) इति ठको लुकि ङीप् स्यात् ? उच्यते । अत इत्यनुवृत्तस्य टिदादिभिर्विशेषणाद् वर्णाश्रयाद् वर्णाश्रयविधौ प्रत्ययलक्षणं नास्तीति ङीबभावः । एवं 'श्रवणा रात्रिः' इति । श्रवणेति 'विभाषा फाल्गुनीश्रवणा' (४।२।२३) इति सूत्रनिर्देशादपि ॥ कथं 'किङ्कराः स्त्रियः' ? 'कृञो हेतुताच्छील्य' (३।२।२०) इति विधानात् ॥ 'तामैक्षन्त क्षणं सभ्या दुश्शासनपुरस्सराम्' इति भारविः, 'पुरोऽग्रतोऽग्रेषु सर्तेः' (३।२।१८) इति विधानात् ? उच्यते । पचाद्यच् कार्यः पदसंस्कारे ॥

सहचरीमिति पूर्वमेव चरेष्ट इत्यत्र व्याख्यातम्। ईश्वरीत्यत्र पुंयोगादिति ङीष्, तद्विवक्षया च टापीश्वरेति केचित्। छान्दसो ङीषिति चान्ये। अन्येभ्योऽपि दृश्यते इति क्वनिपि वनो र चेतिङीब्रावित्यपरे। विधानादिति। तथा च हेत्वाद्यभावे कियत्तद्बहुषु कृञोऽज्विधानमित्यचा टापि किङ्करेति साधुः। पुरस्सरेति पुरोऽग्रतइत्यादि सूत्रे व्याख्यातम्॥

## कौरव्यमाण्डूकाभ्यां च ॥ ४।१।१९ ॥

कथं 'यद्यसौ कूपमाण्डूकि ! तवैतावति कः स्मयः' इति भट्टिः, अत्र कौरव्यसाहचर्यादपत्यप्रत्ययान्तो माण्डूकः माण्डूकायनीति युज्यते ? उच्यते। मण्डूकस्य भार्येति 'तस्येदम्' (४।३।१२०) इत्यर्थे। जयमङ्गलायां तु 'ढक् च मण्डूकाद्' (४।१।११९) इति चकारादुक्तः॥

तस्येदमिति। वृत्त्याद्युक्तं समाधानमिदम्। चकारादुक्त इत्यस्याणिति शेषः। काशिकादावप्येतत् स्पष्टम्॥

## वयसि प्रथमे ॥ ४।१।२० ॥

कथं 'बालामबालेन्दुमुखीं बभाषे' इति रघुः ? उच्यते। अजादिपाठात्। एवं वत्सा॥ कथं 'कन्या' इति ? 'कन्यायाः कनीन च' (४।१।११६) इति निर्देशात्॥

## षिद्गौरादिभ्यश्च ॥ ४।१।४१ ॥

कथं 'त्रपा क्षमा', यथा स्तनन्धयीत्यत्र धेटष्टित्त्वाद् ङीप् तथा षित्त्वात् तत्र ङीष् स्यात् ? उच्यते। षित्त्वस्याङ्विधौ चरितार्थत्वात् समुदायार्थत्वानुपपत्तेः॥

अनुपपत्तेरिति। अवयवे चरितार्थं लिङ्गं समुदाये न प्रवर्त्तत इति नियमादिति भावः॥ अत एव ट्युट्युलोष्टित्त्वं सार्थकम्॥

## वोतो गुणवचनात् ॥ ४।१।४४ ॥

कथम् 'अनन्यगुर्व्यास्तव केन केवलः' इति माघः, अनेन ङीषि समासे 'नद्यृतश्च' (५।४।१५३) इति कप् स्यात् ? उच्यते। ङीषाऽभावपक्षे अनन्यगुर्वा इति पाठः। समासान्तानित्यत्वाद्वा। भो अनन्य ! विष्णोः सम्बोधने, 'सर्वमिदं जनार्दनः' इति दर्शनात्॥

कप् स्यादिति । ततश्चोपसर्जनत्वेन न ङीपः प्राप्तिः प्रकृतसूत्रेणेति भावः । प्रकारान्तरेण गुर्व्या इति पाठं समाधत्ते—भो अनन्येत्यादिना ॥

बह्वादिभ्यश्च ॥ ४।१।४५ ॥

'कृदिकारादक्तिनः,' 'सर्वतोऽक्तिन्नर्थादित्येके'। कुट्टनीमते 'वञ्चकवृत्त्यो वेश्याः', अक्तिन इति निषेधात् ? उच्यते । वृत्तेः 'ईक् कृष्यादिभ्यः' इतीगन्तात् । यद्वा 'वञ्चकवृत्ता' इति पाठः । (विसर्गश्रवणार्थः? ) ॥

वञ्चकवृत्ता इत्येव सम्प्रत्युपलभ्यते पाठः ॥

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ४।१।४९ ॥

कथं 'ब्रह्माणी' ? ब्रह्माणमनितीति अनितेः कर्मण्यण् । एवं राजकुलानी ॥ 'ब्राह्मी तु भारती भाषा' इत्यमरः ? तस्येदमर्थे अणि 'ब्राह्मोऽजातौ' (६-४-१७१) इति लोपः ॥ कथं 'भिक्षुणी' ? उच्यते । भिक्षुं भिक्षुत्वं नयति प्राप्नोतीति क्विपि 'कृदिकारादक्तिनः' इति ङीष् ॥

अनितीति अन प्राणन इत्यादादिकस्य । हेतुमण्णिजन्त आनयति = जीवयतीति दीक्षितादयः । पूर्वपदात्संज्ञायामिति णत्वम् । लोपः = टिलोपः ॥

क्तादल्पाख्यायाम् ॥ ४।१।५१ ॥

कथम् 'अक्षरलवक्षिप्ता जिह्वा' ? उच्यते । लवशब्देनाल्पत्वस्योक्तत्वादिति रक्षितः ॥

उक्तत्वादिति । 'भाषा' इत्यादिशब्दे अकारप्रत्ययेन स्त्रीत्वस्योक्तत्वाट्टाबभावापत्त्या चिन्त्यमेतत् । तथा च अजादित्वादेव कथञ्चिट्टाबुपपाद्यः ॥

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ४।१।५४ ॥

कथं 'शुभाङ्गी' ? उच्यते । चकारात् ॥

शुभाङ्गीत्यत्र संयोगोपधत्वादप्राप्तिं मत्वा प्रश्नः । समाधानम्—चकारादिति । अङ्गगात्रेत्यादिवचनन्तु चकारलब्धार्थकथनमेवेति स्पष्टं न्यासे ॥

**न क्रोडादिबह्वचः ।। ४।१।५६ ।।**

कथं 'कल्याणक्रोडी' ? उच्यते । क्रोडाशब्दोऽत्रोपात्त इति न्यास उक्तम् । तेन क्रोडशब्दात् कल्याणक्रोडीति रक्षितः ।।

न्यास इति । हरदत्तादयोऽप्येवम् । रक्षित इति । माधवोऽप्येवम् । वर्धमानस्तु क्रोड इति प्रातिपदिकमात्रं गणपठितं मन्यते । तेनैतन्मते टाबेव ।।

**ऊङुतः ।। ४।१।६६ ।।**

कथं 'सपदि वारिधरारवभीरवः' इति माघः, तथा 'विशेषास्त्व-ङ्गना भीरुः कामिनी वामलोचना' इत्यमरः ? उच्यते । 'इतो मनुष्य-जातेः' (४।१।६५) इत्यनुवृत्तौ (तद)विवक्षायां नोङ् ।।

ऊङन्तत्वे घित्वाभावाद् गुणाभाव इति प्रश्नः ।।

**ऊरूत्तरपदादौपम्ये ।। ४।१।६९ ।।**

कथं 'पीवरोरु ! पिबतीव बर्हिणः' इति कुमारः, औपम्याभावा-दूङोऽप्रवृत्तेः ? उच्यते । 'संज्ञापूर्वको विधिरनित्यः' इति गुणाभावात् । 'अप्राणिजातेश्चारज्ज्वादीनामुपसङ्ख्यानम्' इति ऊरुशब्दादूङि च बहुव्रीहिः ।।

संज्ञापूर्वक इति । भाष्येऽस्यादर्शनादसाधुरेवेदमिति नव्याः । अतः समा-धानान्तरमाह—अप्राणीत्यादिना ।।

**द्विगोर्लुगनपत्ये ।। ४।१।८८ ।।**

(कथं) 'पाञ्चकपालो भागः' । कथं 'पाञ्चकपालीयमिदम्' ? उच्यते । विभाषानुवृत्तेर्व्यवस्थितविभाषात्वात् । 'चातुरर्थिकस्त्रैवर्णिकः' इति अध्यात्मादिपाठसामर्थ्यात् । चातुरर्थिक इति 'कथादि' (४।४।१०२) पाठबलादिति रक्षितः ।। (कथं) 'चातुर्विद्य' इति, द्विगुत्वात् ? चतुर्विधा विद्या इति विवक्षितः ।। 'चतस्र एव विद्याश्चातुर्वैद्यम्' इति अनुश-तिकादित्वात् (७।३।२०) । प्राग्दीव्यतीयत्वाद्वा ।।

भाग इत्यनेनेदमर्थेऽण् इति दर्शितम् । अत्र संस्कृतार्थकतद्धितार्थविषये द्विगुः, ततोऽण् संस्कृतं भक्षा इति, स एव च द्विगोर्निमित्तमिति नात्रेदमर्थकस्याणो

लुगिति समाधानमेकं वृत्त्यादावुक्तम्। तदेतत्सम्बन्धषष्ठीं द्विगोरित्यत्र मत्त्वा। पञ्चम्याश्रयणे तु समाधानान्तरमाह—विभाषेत्यादि। समर्थानामिति सूत्रादित्यादिः। तथा च यथाप्रयोगं व्यवस्था। द्विगुत्वादिति। चतस्रो विद्या अधीते इति विग्रहाभिप्रायेण प्रश्नः। शाकपार्थिवादित्वात् समासे अण् इत्युत्तरम्। प्रादीव्यतीयत्वादिति। चातुर्वर्ण्यादित्युचितम्॥

## अत इञ् ॥ ४।१।९५ ॥

कथं वसुदेवस्यापत्यं 'वासुदेवः'? उच्यते। 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (४।१।११४) इत्यण् वृष्णित्वात्॥ कथं 'शौरिः'? 'बाह्वादित्वाद्' (४।१।९६)क्वचिदपवादविषयेऽप्युत्सर्गंप्रवृत्तेर्वा। एवं सावर्णिरिति॥

दाशरथ इति तु तस्येदमित्यणि बोध्यम्। इञिति। एतच्च कचिद्बाधकबाधनार्थं इत्यनेन दर्शितं काशिकायाम्। वर्धमानादिभिः पुनरयं शूरशब्दो गणे पठित एवेति विशेषविहितेनेञाण् बाध्यते॥

बाह्वादेराकृतिगणत्वात् सावर्णिरिति॥

## स्त्रीभ्यो ढक् ॥ ४।१।१२० ॥

कथं 'ज्ञातेयं कुरु सौमित्रे! भयात् त्रायस्व राघवम्' इति भट्टिः? उच्यते। बाह्वादित्वादिञ्॥ कथं 'सापत्नो भ्राता' इति? उच्यते। शिवाद्यण् (४।१।११२)॥

सुमित्रासपत्नीशब्दौ बाह्वादिशिवादिगणयोर्दृश्येते। अत एव 'सौमित्रिणा तदनु संससृजे' इति रघावपि॥

## द्व्यचः ॥ ४।१।१२१ ॥

कथं 'पार्थो धनञ्जयः'? पृथाशब्दात् शिवाद्यण्॥

पृथाशब्दो गणरत्नमहोदध्यादावत्र पठितः। तस्येदमित्यणीति दीक्षितः॥

## कौसल्यकार्मार्याभ्यां च ॥ ४।१।१५५ ॥

कोसलशब्दात् मूलप्रकृतेरेवापत्ये फिञ्प्रत्ययसन्नियोगेन युडागम इति वृत्तिः। कथं तर्हि 'उपलम्भ्यामपश्यन्तः कौसल्यायनिवल्लभाम्' इति भट्टिः, न ह्यसौ कोसलस्यापत्यमिति रक्षितः? उच्यते। 'इतो मनुष्यजातेः' (४।१।६५) इति ङीषन्तात् कौसल्यायनीशब्दाद् युवापत्ये

ढकि तस्य 'अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानम्' इति लुकि 'लुक् तद्धितलुकि' (१।२।४९) इति स्त्रीप्रत्ययनिवृत्तौ ॥

कौसल्यायनिशब्दो 'दगुकोसलकर्मारच्छागवृषाणां युड् वादिष्टस्य' इति स्मृत्यन्तरानुसारेण काशिकादौ साधितः ॥

**जनपदशब्दात् क्षत्रियादञ् ॥ ४।१।१६८ ॥**

कथं 'केकय्युपज्ञं वत बह्वनर्थम्', 'ऊचुस्तथान्ये भरतस्य मायां धिक् केकयीम्' इति भट्टिः। तथा 'प्राक् केकयीतो भरतस्ततोऽभूद्' इति। केकयस्यापत्यं स्त्रीति अनेनाञि 'अतश्च' (४।१।१७७) इति लुको 'न प्राच्यभर्गादियौधेयादिभ्यः' (४।१।१७८) इति निषेधे 'केकयमित्रयुप्रलयानाम्' (७।३।२) इतीयादेश आदिवृद्धौ कैकेयीति स्यात्। तथा च रघुः—'कैकेयि ! कामाः फलितास्तव' इति ? उच्यते। केकयशब्दो मूलप्रकृतिरेवोपचारात् स्त्र्यपत्ये वर्तत इति न्यासः। शार्ङ्गरवादिषु पठ्यते तेन ङीन् ॥

मूलप्रकृतिरेवेति। एतत्समाधानं भागवृत्तिकृत इति भाषावृत्त्यादौ स्पष्टम् ॥

**वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ ४।१।१७१ ॥**

'पाण्डोर्जनपदात् क्षत्रियाद् ड्यण् वक्तव्य' इति ड्यणि कथं पाण्डवाः ? तस्येदमर्थे अण् ॥

**इति शरणदेवविरचितदुर्घटवृत्तौ चतुर्थाध्याये प्रथमः पादः ॥**

पाण्डवशब्दो व्याख्यातपूर्वः ॥

इति दुर्घटवृत्तिविवृतौ चतुर्थाध्यायस्य प्रथमः पादः ॥

## अथ चतुर्थाध्याये द्वितीयः पादः ॥

**तेन रक्तं रागात् ॥ ४।२।१ ॥**

**लुबविशेषे ॥ ४।२।४ ॥**

कथम् 'अद्य रात्रौ पुष्यः' इति, पौषी रात्रिरितिवद्विशेषविहितत्वाल्लुपा न भवितव्यम् ? उच्यते। अन्तरङ्गत्वाद्विशेष्येण सामानाधिकरण्ये अविशेष इति न निषेध इति रक्षितः ॥

रक्षित इति। वस्तुतस्तु प्रकृते पुष्यशब्दस्य नक्षत्रमात्रार्थकत्वेन न प्रत्ययो न वा लुक् इति बोध्यम्। यथामुद्रितरक्षितग्रन्थाशयन्तु नावगच्छामः, सामानाधिकरण्येऽपि विशेषणस्यार्थोपस्थापकत्वाभावाभावात्। यद्वाऽद्येत्येव विशेष्यम्, तत्र च रात्रिपदार्थस्यान्वयेन स्वातन्त्र्येणार्थोपस्थापकत्वाभावादित्यादिरीत्या कथञ्चित् समाधेयम्॥

**आग्रहायण्यश्वत्थाट्ठक्॥ ४।२।२२॥**

कथम् 'आग्रहायणो मासः', 'आग्रहायणी पौर्णमासी', 'सास्मिन्' (४।२।२१) इत्यनुवृत्तौ नित्यं ठको भावात्? उच्यते। आग्रहायण्या अयमिति तस्येदमर्थे अण्। पूर्वनिपातव्यभिचाराद्वा ठकोऽनित्यत्वादौत्सर्गिकोऽण्॥

पूर्वनिपातेति। तथा च अजाद्यदन्ताल्पाच्तरत्वेऽप्यश्वत्थशब्दस्य पूर्वनिपाताऽकरणाद् ढकोऽस्य वैकल्पिकत्वेनाणि साधुराग्रहायणो मास इति भावः। यद्वा न्यासादिमते ज्योत्स्नादेराकृतिगणत्वेनाण् प्रत्ययो मत्वर्थीय इति बोध्यः॥

**सास्य देवता॥ ४।२।२४॥**

कथम् 'ऋद्धं हि राज्यं पदमैन्द्रमाहुः' इति रघुः, यावता देवतासम्प्रदानविषयेऽण् इष्यते? उच्यते। तस्येदमर्थे भविष्यति॥

**सोमाट्ट्यण्॥ ४।२।३०॥**

कथम् 'अपेतयुद्धाभिनिवेशसौम्यः' इति, सास्य देवता (४।२।२४) इत्यनुवृत्तेः? उच्यते। सोमदेवता हि तृप्तिहेतुः। अतः सुकुमारोऽपि तृप्तिहेतुत्वाद् उपचारात् सौम्य इत्युच्यते। तथा च 'सौम्यस्स्यात् सुन्दरे[1] सोमदैवते' इत्यमरः॥

उपचारादिति। क्षीरस्वामिनाप्यमरटीकायामेवमेवोक्तम्। शाखादित्वाद् यप्रत्यये प्रज्ञादित्वादणि च साधुः। यमात्रे तु सोम्य इत्यपि॥

**सङ्ग्रामे प्रयोजनयोद्धृभ्यः॥ ४।२।५६॥**

कथं 'भारतो ग्रन्थः', सङ्ग्रामे विधानात्? उच्यते। भारतान् 'अधिकृत्य कृते ग्रन्थे' (४।३।८७) इत्यण्। ग्रन्थानां भूयस्त्वेन महाभारतम्॥

---

१. 'सुकुमारे' इति मुद्रितः पाठः।

## क्रतूक्थादिसूत्रान्ताट्ठक् ।। ४।२।६० ।।

कथं 'चातुर्विद्यः', उक्थादित्वात् ठका हि भाव्यम् ? उच्यते । कृतलब्धक्रीतकुशलार्थे अणो 'द्विगोर्लुगनपत्ये' (४।१।८८) इति न लुक्, चतुर्विधा इति मध्यमपदलोपिसमासत्वादद्विगुत्वात् । अत एव 'विद्या चानङ्गक्षत्रधर्मत्रिपूर्वा' इत्युक्थादिगणसूत्रे प्रत्युदाहरणं वृत्तौ त्रैविद्य इत्युक्तम् । अध्येतरि चातुर्विद्यिक इति ठको गणपाठादपि न लुक् ।।

त्रैविद्य इति । त्र्यवयवा विद्या त्रिविद्या, तामधीत इत्यणि रूपम् । द्विगौ तु त्रिविद्य इति स्यात् । गणपाठात् = गणपाठसामर्थ्यात् । चातुर्वैद्य इत्यपि कश्चित् ।।

## कुमुदनडवेतसेभ्यो ड्मतुप् ।। ४।२।८७ ।।

कथं 'पुरीं माहिष्मतीं द्विषः' इति माघः, 'महिषाच्चेति वक्तव्यम्' इत्यनेन ड्मतुपि महिष्मतीति स्यात् ? महिष्मत्या साध्यं भवे[2] वा अर्थेऽण् ।।

अणिति । स्वार्थे महिष्मच्छब्दादणि रूपमित्युचितम् ।।

## कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ।। ४।२।९६ ।।

कथं 'सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः' इति रघुः, अनेन ठकञि ग्रैवेयकमिति स्यात् ? उच्यते । 'ग्रीवाभ्योऽण् च' (४।३।५७) इति ढकञि ग्रैवेयकम्, अणि तु ग्रैवेयमिति भवति ।।

ढकञि भवार्थ इति शेषः ।।

## द्युप्रागपागुदक्प्रतीचो यत् ।। ४।२।१०१ ।।

कथं 'प्रपेदिरे प्राक्तनजन्मविद्याः' इति कुमारः, अनेन यतो भावात् ? उच्यते । अव्ययात् कालवचनाद् अस्मात् परत्वात् ट्युट्युला-विच्छन्ति ।। कथं तर्हि 'प्राच्यासु वृत्तिषु' इति शास्त्रारम्भे न्यासः ? उच्यते । साध्वर्थे यता ।।

इच्छन्ति—वृत्तिकारादय इति शेषः । प्रागित्यतोऽस्तातिप्रत्ययस्य अञ्चेर्लुगिति लुकि सायं चिरमित्यादिना प्रत्ययः । सम्प्रति न्यासे नाऽयं पाठः ।।

---

२. 'भावे' इति मुद्रितम् ।

## इञश्च ॥ ४।२।१२२ ॥

कथं 'पाणिनीयं शास्त्रम्' । पणिनोऽपत्यमित्यण् । 'गाथिविदथिकेशिगणिपणिनश्च' (६।४।१६५) इति प्रकृतिभावे पाणिनशब्दादपत्यार्थे इञि पाणिनिना प्रोक्तमित्यर्थे त्वनेनाणा भाव्यम् ? उच्यते । अणतो नास्ति गोत्राधिकारात् । 'वृद्धस्य च पूजायाम्' (४।१।१६५) इति युवसंज्ञया चात्र गोत्रसंज्ञा बाध्यते । तथा च 'प्रोक्ताल्लुक्' (४।२।६४) इत्यत्रोक्तम्—'पाणिनिना प्रोक्तमित्यर्थे वृद्धाच्छे पाणिनीयम्' इति । यद्वा पाणिनेन प्रोक्तमित्यणन्तादेव च्छः । पाणिनिरपि पणिनोऽपत्यं भवत्येव ॥

अपत्यम् = गोत्रापत्यम् । प्रकृतिभावेन टिलोपाभावः फलम् । अतः = पाणिनिशब्दात् । गोत्रेति । इञश्चेति सूत्र इत्यादिः ॥

## वृद्धाच्छः ।। ४।२।११४ ।।

कथं 'कातीयश्चेष्टसिद्धयः' इति, कतशब्दस्यावृद्धत्वात् ? उच्यते । कतशब्दाद् गर्गादिपाठाद्यञ् । 'यञिञोश्च' (४।१।१०१) इति फकि कात्यायनशब्दाद् 'वृद्धाच्छः' (४।२।११४) इति च्छे विषयीभूते 'फक्फिञोरन्यतरस्याम्' (४।१।९१) इति फको लुक् कातीयः कात्यायनीय इति ॥

## धूमादिभ्यश्च ।। ४।२।१२७ ।।

कथं 'दाक्षिणापथी वृत्तिः', शेषे धूमादित्वाद् वुञि दाक्षिणापथिकेति भाव्यम् ? उच्यते । क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तत इति तस्येदमर्थेऽण् ।।

## मनुष्यतत्स्थयोर्वुञ् ।। ४।२।१३४ ।।

कथं 'सैन्धवो मनुष्यः', कच्छादौ सिन्धुशब्दोक्त्यानुवृत्तौ अनेन वुञि सैन्धवक इति हि स्यात् ? उच्यते । अभिजनेऽर्थे 'सिन्ध्वपकराभ्यां कन्' (४।३।३२) इति मनुष्यवृत्तेः 'अणञौ च' (४।३।३३) इत्यणि अञि वा सैन्धवः ।।

अनुवृत्तौ = कच्छादिभ्य इत्यस्यानुवृत्तौ सत्यामभिजनेऽर्थं इति। जातेऽर्थं इति तु युक्तम्। वर्त्तमानादित्यध्याहृत्य वा सङ्गमनीयम्। अञि वेति वृत्त्यादि-विरुद्धम्, सिन्ध्वपकराभ्यां यथासंख्यमणञोर्विधानात्। अत एव योगविभागोऽपि सार्थकः॥

**गहादिभ्यश्च ॥ ४।२।१३८ ॥**

कथं 'लुब्योगाप्रख्यानाद्' (१।२।५४) इत्यत्र 'स्वकीयस्य प्रत्याख्यानम्' इति न्यासः, यतः 'कुग् जनस्य परस्य च' इत्युक्तं वृत्तौ? उच्यते। अत एव न्यासात् स्वार्थिकक[१]प्रत्ययान्तस्वकशब्दोऽत्र द्रष्टव्यः। परस्य चेति चकाराद्वा स्वशब्दस्यापि कुक्। तथा च चान्द्रं सूत्रम्—'स्वपरजनदेवराज्ञां कुक्च' इति। केवलात्तु स्वशब्दाद् अणि सौवमिति। तथा 'द्वारादीनां च' (७।३।४) इत्यत्र वृत्तौ सौवमित्युदाहृतम्। 'स्वीयम्' इति तु 'तस्मै हितम्' (५।१।५) इत्यर्थे 'प्राक् क्रीताच्छः' (५।१।१)॥ 'नान्तरीयक' शब्दे चान्तराशब्दाद् गहादित्वेन च्छप्रत्यये नञ्समासे स्वार्थिकः कन्। पाठसामर्थ्यात् नञः प्रकृतिभावः॥

इति शरणदेवविरचितदुर्घटवृत्तौ चतुर्थाध्याये द्वितीयः पादः॥

स्वकीयस्येति। एतच्च सम्प्रति न्यासे न लभ्यते। कुग्जनस्येत्यादि स्पष्टम् अन्तःपूर्वपदादिति सूत्रभाष्ये॥

इति दुर्घटवृत्तिविवृतौ चतुर्थाध्यायस्य द्वितीयः पादः॥

## अथ चतुर्थाध्याये तृतीयः पादः॥

**युष्मदस्मदोरन्यतरस्यां खञ् च ॥ ४।३।१ ॥**

**कालाट्ठञ् ॥ ४।३।११ ॥**

कथम् 'अनुदितौषसराग' इति किरातः। तथा 'शार्वरस्य तमसो निषिद्धये' इति कुमारः? उच्यते। कालादिति योगविभागादण्। 'विभाषा रोगातपयोः' (४।३।१३) इति विभाषानुवृत्तेर्व्यवस्थित-

१. 'कन्' इति मुद्रितः पाठः।

विभाषात्वाद्वाण् । क्वचिदपवादविषयेऽपीति वा तस्येदमर्थे अण् । वृत्तिकारादिभिः प्रतिपादितत्वात् प्रागुक्त एव वा ॥

योगविभागादिति । एतच्चासाम्प्रदायिकम् । अतोत्र अन्तिमं वाक्यम् इत्थं पठनीयम्—"वृत्तिकाराद्यप्रतिपादितत्वाद् (योगविभागस्य) अयुक्त एव वा" इति । वामनदीक्षितादिभिरप्यस्य प्रामादिकत्वमेवोक्तम् । भवार्थेऽणि शार्वरमिति तु कोशेषु लभ्यते ॥

**सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्टचुटचुलौ तुट् च ॥ ४।३।२३ ॥**

कथं 'साम्प्रतिकाभावे भूतपूर्वगतिः' इति ? उच्यते । 'असाम्प्रतिके' ( ४।३।९ ) इति निर्देशात् । अध्यात्मादित्वाट्ठञ् । 'इसुसुक्तान्तात् कः' ( ७।३।५१ ) इत्यपि नास्ति, अत एव निर्देशादिति 'येषां च' ( २।४।९ ) इत्यत्र रक्षितः ॥ कथं 'शाश्वतस्तु ध्रुवो नित्यः' इत्यमरः ? 'कालादि'ति योगविभागादण् । 'अव्ययानां भमात्रे टिलोपः' इत्यपि नास्ति, 'बहिषष्टिलोपः' इत्यनेनास्यानित्यत्वज्ञापनात् ॥ कथम् अकस्माद्भवमाकस्मिकम् ? उच्यते । अकस्माच्छब्दाद्विभक्तिप्रतिरूपकान्निपातादध्यात्मादिपाठाट्ठञि टिलोपः ॥ कथं 'दधतः पुरातनमुनेर्मुनिताम्' इति किरातः, 'पुराणप्रोक्तेषु' ( ४।३।१०५ ) इत्यनेन टचुटचुलोर्बाधात् ? उच्यते । 'अबाधकान्यपि निपातनानि भवन्ति' इति टचुटचुलौ च । 'बाधकान्येव निपातनानि भवन्ति' इति भाष्ये स्थितम् । 'पुरातनमुनेः' इत्यादयः कालदुष्टा एवापशब्दा इति भागवृत्तिः । नैतत् तथा, यतः 'पूर्वपदात् संज्ञायामगः' ( ८।४।३ ) इत्यत्र भाष्य एवोक्तम् 'अणृगयनादिभ्यः' ( ४।३।७३ ) इति निपातनादृगयनमिति सिद्धे 'अग' इति प्रतिषेधो ज्ञापयति अबाधकान्यपि निपातनानि भवन्तीति । तथा च जाम्बवतीविजये पाणिनिनोक्तम्—

अस्ति प्रतीच्यां दिशि सागरस्य वेलोर्मिगूढे हिमशैलकुक्षौ ।
पुरातनी विश्रुतपुण्यशब्दा महापुरी द्वारवती च नाम्ना ॥

इति द्वितीयसर्गे,

अनेन यात्रानुचितं धराधरैः पुरातनं साजलतं महीक्षिताम् ।
ददर्श सेतुं महतो जरन्तया विशीर्णसीमन्त इवोदयश्रिया ।।(?)

इति चतुर्थे,

त्वया सहार्जितं यच्च यच्च सख्यं पुरातनम् ।
चिराय चेतसि पुरस्तरुणीकृतमद्य मे ।।

इत्यष्टादशे । कैयटेन तु पृषोदरादित्वात् सिद्धिरुक्ता । 'सर्वादीनि सर्वनामानि' ( १।१।२७ ) इत्यत्रोक्तम् ।।

अध्यात्मादित्वादिति । यद्वा सम्प्रतिशब्दात्प्रज्ञादित्वादणि विनयादिभ्यश्चेति स्वार्थे ठक् । कालादिति । योगविभागस्यादृष्टत्वाद् भवार्थेऽण् इति युक्तम् । अनित्यत्वेति । मुखपार्श्वतसोर्लोपश्चेति अन्तःपूर्वपदादिति सूत्रभाष्यप्रामाण्यादप्येतल्लभ्यते । भाष्ये = सर्वादीनि सर्वनामानि इत्यत्र । अबाधकान्यपीति । पूर्वपदादिति सूत्रस्थभाष्यपर्यालोचनया तु नैतल्लभ्यते । उक्तम् इति । कैयटेनेति पूरणीयम् ।।

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ।। ४।३।७२ ।।

कथं शास्त्रे भवं 'शास्त्रीयम्', द्व्यच्त्वात् ठको भावात् ? उच्यते । 'ततः आगतः' ( ४।३।७४ ) 'तस्येदम्' ( ४।३।१२० ) इति वा अण् । तदन्ताच्छः । एवं वार्त्तमिति च ।।

## अधिकृत्य कृते ग्रन्थे ।। ४।३।८७ ।।

कथं 'ज्योतिषं' शास्त्रम्, अनेनाणि वृद्धिसम्भवात् ? उच्यते । संज्ञापूर्वविधेरनित्यत्वाद् वृद्ध्यभाव इति सुभूतिः । ज्योतींषि नक्षत्राणि अस्य सन्ति गणनीयत्वेनेत्यर्शआद्यच् ।। साहचर्यात्तु वासवदत्ताख्यायिकेति भाषावृत्तिः । 'लुबाख्यायिकाभ्यः' इत्यणो लुकि वा ।।

लुकि वेति । अभेदोपचारेण ताच्छब्द्यलाभाद् अभिधानलक्षणत्वाच्च तद्धितस्य तथा प्रयोगाभावेनैव तद्धितानुत्पत्तौ लुबाख्यायिकाभ्य इति व्यर्थमिति स्वीकारे तु पूर्वमेव समाधानं युक्तम् ।।

**नित्यं वृद्धशरादिभ्यः ।। ४।३।१४४।।**

कथं 'पुरीं द्रक्ष्यथ काञ्चनीम्' इति भट्टिः, 'काञ्चनी वासयष्टिः' इति मेघः, वृद्धसंज्ञकत्वान्मयटा भाव्यम् । तथा च श्रीगोविन्दे 'तेनेदं काञ्चनमयं निर्मितं पुरमुत्तमम्' इति वाल्मीकिः ? उच्यते । 'क्वचिद-पवादविषयेऽप्युत्सर्गोऽभिनिविशते' इति । 'अनुदात्तादेश्च' (४।३।१४०) इत्यत्रापीति 'जातरूपेभ्यः' ( ४।३।१५३ ) इत्यत्र मैत्रेयः ।। कथं 'जगतोऽस्य जगन्मये' इति चण्डी, मयटि ङीपा भाव्यम् ? उच्यते । जगन्मयते जानातीति मयधातोः पचाद्यच् । अजादेराकृतिगणत्वाट्टाप् ।। कथम् 'आप्यमम्मयम्' इत्यमरः, 'नित्यमेकाचो मयटमशरादेर-पीच्छन्ति' इति वचनाद् वाङ्मयमित्यादिवदप्शब्दान्नित्यं मयटा भाव्यम् ? उच्यते । आप्यमिति प्रमादपाठ इति व्याख्यानशीलः । 'तद्धिताः' ( ४।१।७६ ) इति बहुवचननिर्देशादनित्य इत्यन्यः ।।

**इति शरणदेवविरचितदुर्घटवृत्तौ चतुर्थाध्याये तृतीयः पादः ।।**

प्रमादपाठ इति । विकारार्थकाण्प्रत्ययान्ताच्चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञिति रामाश्रमः । लक्ष्यवशादयं प्रयोग इति 'आप्यं वा' इति चान्द्रसूत्रेण लभ्यते ।।

इति दुर्घटवृत्तिविवृतौ चतुर्थाध्यायस्य तृतीयः पादः ।।

## अथ चतुर्थः पादः ।।

**प्राग्वहतेष्ठक् ।। ४।४।१ ।।**

**समानोदरे शयित ओ चोदात्तः ।। ४।४।१०८ ।।**

**सोदराद्यः ।। ४।४।१०९ ।।**

कथं 'सहोदरस्यातिमदोद्धतस्य' इति भट्टिः, एवम् 'अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' इति । 'विभाषोदरे' ( ६।३।८८ ) इति सभावेन सोदर्य इत्येव हि स्यात् ? उच्यते । 'समानस्य च्छन्दसि' ( ६।३।८४ ) इत्यत्र योगविभागेन साधुरिति सोमनन्दी । यद्वा सह-शब्दः समानार्थः । तथा च प्रयोगः—'सर्वे ते सह जायन्ते' इति ।

तेन सह समानमुदरमस्येति 'वोपसर्जनस्य' ( ६।३।८२ ) इति सभावे सोदर इति 'यत्र भ्राता सहोदरः' इति वाक्यं च सिद्धम् ॥

इति शरणदेवविरचितदुर्घटवृत्तौ चतुर्थाध्याये चतुर्थः पादः ॥

सोदर इति प्रयोगवशात् सह तुल्य उदरे जात इत्यर्थे अन्येष्वपि दृश्यते (३।२।१०१) इति डप्रत्ययेऽपि सिध्यति ॥

इति श्रीनारायणमिश्रविरचितायां दुर्घटवृत्तिविवृतौ चतुर्थाध्यायस्य चतुर्थः पादः ॥

इति चतुर्थाध्यायः ॥



## अथ पञ्चमाध्याये प्रथमः पादः ।।

### प्राक् क्रीताच्छः ।। ५।१।१ ।।

### आत्मन्विश्वजनभोगोत्तरपदात् खः ।। ५।१।९ ।।

कथं 'पञ्चनीयः' 'विश्वजनीयः', आभ्यां खप्रसङ्गात् ? उच्यते । विश्वजनादेः 'कर्मधारयादेवेदम्' इति वचनात् षष्ठीसमासादौ 'प्राक्-क्रीताच्छः' ।। कथं 'सार्वजनीनः' इति । 'सर्वजनाट्ठञ्च' इति वार्त्तिकेन ठञि पक्षे सार्वजनिकसर्वजनीनाभ्यां भाव्यम् ? 'प्रतिजनादिभ्यः खञ्' (४।४।९९) इति खञ् । असाधुर्वा । 'विना(श)कालीनादयः' 'खः सर्वधुराद्' (४।४।७८) इत्यत्र योगविभागात् ।।

षष्ठीसमासादाविति । आदिपदेन बहुव्रीहिर्ग्राह्यः, विश्वो जनो यस्येति । सर्वं चैतद् भाष्यवृत्त्यादिषु स्पष्टम् । ठञ् चेति चकारेण खः समुच्चीयते । योग-विभागस्यानार्षत्वादाह—असाधुर्वेति । योगविभागादिति । अस्याप्यदृष्टचरत्वाद-साधव एवैत इत्यपरे ।।

### तेन तुल्यं क्रिया चेद्वतिः ।।५।१।११५।।

कथं 'पुत्रं मित्रवदाचरेद्' इति, क्रियातौल्याभावात् ? उच्यते । मित्रकर्मकाचरणक्रियया तुल्यं यथा स्यात् तथा पुत्रमाचरेदित्यर्थात् क्रियातौल्याद्वतिः ।। कथं 'पितृवत् स्थूलः पुत्रः' इति 'स्थानिवत्' (१।१।५६)सूत्रे न्यासः, अत्र ह्युक्तं क्रियाग्रहणं गुणतौल्ये मा भूदिति ? स्थूलशब्दोऽयं धर्मप्राधान्यात् स्थौल्यवृत्तिः । एवं च 'तत्र तस्येव' (५।१।११६) इति वतिः । पुत्र इति सप्तम्यन्तं पितरि यत् स्थौल्यं तत् पुत्र इत्यर्थः । यद्वा स्थूल इति विशेषणेन हेतुनिर्देशः । स्थौल्याद्धेतोर्ग-मनादिना पित्रा तुल्य इत्यर्थः । एवं चानेन वतिः ।।

मित्रवदित्यत्र पुरुषोत्तमोक्तं समाधानमुपनिबद्धं वृत्तिकृता । धर्मप्रधान्यादित्य-नेन द्रव्यैकयोरितिवद्भावप्रधानोऽयं निर्देशः स्थूल इति सूचितम् ।।

## तस्य भावस्त्वतलौ ।। ५।१।११९ ।।

कथं 'स्त्रीत्वं', 'पुंस्त्वम्', 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनाद्' (४।१।८७) इत्यस्य भावात् ? उच्यते । 'आ च त्वाद्' (५।१।१२०) इति चकारात् त्वतलौ ।। 'यस्याः समस्तसुरता समुदीरणेन' चण्डी, भावस्य समुदीरणायोगात् समूहे तु तलोऽभावात् ? उच्यते । धर्मधर्मिणोरभेदोपचारात् धर्मी ग्राह्यः ।। कथम् 'अस्तित्वं' 'ममत्वम्' इति, प्रातिपदिकाधिकारात् ? उच्यते । विभक्तिप्रतिरूपकनिपातत्वात् ।। कथं 'नानात्वान्यथात्वयौगपद्यपौनःपुन्यादयः' इति, असत्त्ववाचित्वात् षष्ठीसम्बन्धाभावात् ? नानादयोऽत्र नानाभूतादिवचना ग्राह्याः ।। एवं च 'प्रेम स्नेहोऽथ दोहदम्' इति, प्रियस्य भाव इतीमनिचि 'प्रियस्थिर' (६।४।१५७) इति प्रादेशे प्रेमा इति भाव्यम् ? उच्यते । प्रीधातोर्मनिन् 'सर्वधातुभ्यः' इत्यनेन । पृथ्वादिभ्य इमनिजन्तसम्भवात् पुंसि । तथा च इमनिजभावे 'द्व्यच्कम्' इत्याद्यमरलिङ्गकारिका ।। कथं 'पौर्णमासी तु पूर्णिमा' इति, द्रव्यवचनत्वात् ? उच्यते । पॄधातोर्भावे क्तः । ततो 'भाववचनादिमब् वक्तव्यः' इति 'त्रेर्मब् नित्यम्' (४।४।२०) इत्यत्र वार्तिकेनेमप् ।।

चकारादिति । स्पष्टोऽयमर्थः प्रकृतसूत्रवृत्त्यादिषु । नानाभूतेत्यनेन सत्त्ववाचिता दर्शिता । सर्वधातुभ्य इति अन्येभ्योऽपि दृश्यन्ते (३।२।७५) इति सूत्रं स्मारयति । द्व्यच्कमिति । ततश्च प्रेमशब्दस्य क्लीवत्वमुपपन्नम् । पूर्णिमेति कथमिति प्रश्नः । इमबिति । ततस्टापि पूर्णिमेति सिध्यति ।।

## गुणवचनब्राह्मणादिभ्यः कर्मणि च ।। ५।१।१२५ ।।

कथं 'वैरम्' इति, वीरस्य भावः कर्म वेति ष्यञा भाव्यम् ? उच्यते । 'द्वन्द्वाद् वुन् वैरमैथुनिकयोः' (४।३।१२५) इति निर्देशात् ।। कथं 'सहजचापलदोषसमुद्धतः' इति माघः, अत्र चपलशब्दपाठात् ष्यञ्भावात् । तथा च स एव—'चापल्यादथ पयसस्तरङ्गहस्तैः' इति ? उच्यते । शिवादित्वादण् ।।

निर्देशादिति। हरदत्तेन तु तस्येदमित्यण् कृत इति प्रतीयते। युवादित्वादण् इति रामाश्रमोक्तं तु शिवादित्वादण् इति संशोध्य पाठ्यम्। शिवादित्वादिति। अत्र युवादित्वाद् (५।१।१३०) इति युक्तम्, शिवादेराकृतिगणत्वेन तत्र पाठकल्पनापेक्षया प्रत्यक्षपठितयुवादित्वस्यैवोचितत्वात् ॥

## सख्युर्यः ॥ ५।१।१२६ ॥

कथं 'ततो नियुक्तो दौत्येन' इति चण्डी। तथा 'वाणिज्यं चेति वृत्तयः' इत्यमरः। 'स्यात् सन्देशहरो दूतो दूत्यं तद्भावकर्मणोः' इति ? ब्राह्मणादौ पाठात् ष्यञ्भावात्। तथा च (माघः ?) 'ष्यञप्यत्र, तेन दौत्यम्' इति भाषावृत्तिः ॥

अत्र 'दूतवणिग्भ्याञ्च' इति वृत्तिकारोक्तेर्दूत्यमिति काशिकामतेन वणिज्यमिति पुरुषोत्तममाधवादिमतेन वणिज्येति वा युक्ते। तथा च प्रश्नः—कथमित्यादि। स्वामिप्रभृतिभिः स्वीकृतमपि काशिकावचनं भाष्ये नास्त्येवेति दीक्षित आह। अत्र मतभेदो दूतस्य भागकर्मणी इत्यत्र न्यासे स्पष्टः। अत एव 'दूत्यं तद्भागकर्मणी' इति केचित् पठन्ति। तन्मते प्रोक्तवार्त्तिकाभावे भावे ष्यञेव, न यो यद्वा ॥

## इगन्ताच्च लघुपूर्वात् ॥ ५।१।१३१ ॥

कथं 'कवेः कर्म काव्यम्', अणा कावमिति हि स्यात् ? उच्यते। ब्राह्मणादित्वात् ष्यञ्। अथवा 'कबृ वर्णे' इत्यस्माद् 'ऋहलोर्ण्यत्' (३।१।१२४)। 'कु शब्दे', मनोहरत्वादवश्यं कूयत इति 'ओरावश्यके' (३।१।१२५) इति ण्यद्वा ॥

ब्राह्मणादित्वादिति काशिकादिषु प्रसिद्धम्। 'कबृ वर्णे' इत्यत्रौष्ठ्यो बकारः श्रूयत इत्यत आह—'कु शब्दे' इति ॥

## योपधाद् गुरूपोत्तमाद् वुञ् ॥ ५।१।१३२ ॥

कथं 'साहाय्यम्', वुञो भावात्। तथा च माघः—'साहायकव्यग्रभुजं प्रसस्रे' इति ? उच्यते। जयादित्यमतेन साहाय्यमित्यपि, न भवति चेति भागवृत्तिः ॥

साहाय्यमिति। ब्राह्मणादित्वात् ष्यञिति भावः। भागवृत्तिरिति। यादवप्रकाशेऽपि—

'साहायकं सहायिका मैत्र्यं मैत्रीति वुञ्ष्यञोः' इत्युक्त्या साहाय्यमित्यस्य निषेध एव दृश्यते ॥

**द्वन्द्वमनोज्ञादिभ्यश्च ॥ ५।१।१३३ ॥**

कथं 'गुरुलाघवम्' ? उच्यते । पर्यायशब्दानां गुरुलाघवचिन्ता नास्तीति भाष्यकारवचनप्रामाण्यात् पूर्वविप्रतिषेधेन 'इगन्ताच्च' (५।१।१३१) इत्यण् । उत्तरपदस्य चेत्यस्य वृद्धेस्तत्र स्वीकारात् सिद्धिः । गुरुशब्देन धर्मवचनेनैव लाघवशब्दस्य वा द्वन्द्वः ॥

**इति शरणदेवविरचितदुर्घटवृत्तौ पञ्चमाध्याये प्रथमः पादः ॥**

उत्तरपदवृद्धौ क्लेशेन समाधानान्तरमाह—गुरुशब्देनेति । भावप्रधानेनेत्यादिः ॥

इति दुर्घटवृत्तिविवृतौ पञ्चमाध्यायस्य प्रथयः पादः ॥

## अथ द्वितीयः पादः ॥

**धान्यानां भवने क्षेत्रे खञ् ॥ ५।२।१ ॥**

**प्राणिस्थादातो लजन्यतरस्याम् ॥ ५।२।९६ ॥**

कथं 'शिखी', प्राण्यङ्गत्वाद् ? उच्यते । व्रीह्यादित्वादिनिः ॥

इनिरिति । मत्त्वर्थ इति शेषः ॥

**सिध्मादिभ्यश्च ॥ ५।२।९७ ॥**

कथं 'कुष्ठी', सिध्मादिषूपतापाच्च इति पाठात् ? उच्यते । दीर्घान्तादेव लच्प्रत्यय इष्यते । ह्रस्वान्तात्तु 'द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः' (५।१।१२८) ॥

पाठाद् इति । तथा च कुष्ठल इति युक्तम् । इष्यत इत्यतः परमुदाहरणसामर्थ्यादिति शेषः ॥

**रजःकृष्यासुतिपरिषदो वलच् ॥ ५।२।११२ ॥**

परिपूर्वात् सदेः 'सत्सूद्विष' (३।२।६१) इति क्विपि 'सदिरप्रतेः' (८।३।६६) इति षत्वे परिषच्छब्दाद्वलच् । तथा च घोषः—'या सम्प्रति प्राक् परिषद्वलानाम्' इति । एवञ्च कथं 'परिषद्वलान् महा-

ब्राह्मैः' इति भट्टिः। नवाक्षरत्वेन छन्दोभङ्गात् ? नवाक्षरेणैकपादे वृत्तभेदोऽस्ति, यथा 'प्रधाने कर्मण्यभिहिते लादीनाहुर्द्विकर्मणाम्' इति। तथा 'तस्मै तिलोदकं दद्यादपुत्राय भीष्मवर्मणे'। एवञ्च न च्छन्दोभङ्ग इति भागवृत्तिः। पृषोदरादित्वादिकारलोपे एकदेशविकृतस्यानन्यत्वात् पर्षच्छब्दाद्वलजिति भाषावृत्तिः। यद्वा 'पृषु स्नेहने'इत्यतः 'शृदृभसोऽदिः' इति बाहुलकाददिप्रत्यये। पर्षच्छब्दमत्र केचिदाचार्येण ग्राहिताः केचित् पूर्वं व्युत्पन्नम्। उभयमेतत् प्रमाणमुभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वादिति यथोक्त-(सिद्ध) ये 'युवा खलति' (२।१।६७) इत्यत्र न्यासकृत्॥ कथं 'रजोयुक्ता भूः' इत्यत्र (न) वलच् ? उच्यते। इतिकरणानुवृत्तेः॥

'अभिहिते' इत्यत्र 'अभिधेये' इति भागवृत्तिसम्मतः पाठो भाषावृत्त्यनुसारेण। भाषावृत्तिरिति। तत्र केशवमतमिदमित्युक्तम्। वर्त्तमानः पाठो यद्यप्यकथितं चेति सूत्रे 'प्रधानकर्मण्याख्येये.....' इति, गणरत्नमहोदध्यनुसारेण च 'प्रधाने कर्मण्याख्यये....', इति, भट्टिकाव्ये च 'पर्षद्बलान्.....' इति तथापि 'पर्षदेषा दशावरा' इत्यादिप्रामाण्यात्पर्षच्छब्दोपि वर्त्तत एव। न्यासकृदिति। तत्र जरच्छब्दविषय इदमुक्तमपि प्रकृतेऽपि समानम्। पदमञ्जर्यान्त्वत्राप्युक्तमेतत्। इतिकरणेत्यादि। 'तदस्यास्त्यस्मिन्निति' इति सूत्रात्सर्वत्र मतुप्तदर्थकप्रत्ययविधावितीत्यनुवर्त्तते। इतिशब्दश्च विवक्षार्थं इत्युक्तम्। तथा च यदा मतुप्तदर्थकेन वा प्रत्ययेनार्थाभिधानेच्छा वक्तुस्तदा प्रत्ययो नान्यथेति विवक्षाऽभावे रजोयुक्तेत्यादिप्रयोगाः साधव एवेत्याशयः॥

**ज्योत्स्नातमिस्राश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः॥ ५।२।११४॥**

कथं 'ज्योतिष्मती', इह संज्ञायां ज्योत्स्नानिपातनात् ? उच्यते। अन्यतरस्यांग्रहणानुवृत्तेर्मतुप् च॥

मतुप्चेति। एतच्च 'प्राणिस्थादातः' इतिसूत्रवृत्त्यादावुक्तम्॥

**अत इनिठनौ॥ ५।२।११५॥**

कथं हलन्ताद् ? व्रीह्यादित्वात्॥ कथं जातौ 'सर्पिणी', 'एकाक्षरात् कृतो जातेस्सप्तम्यां च न तौ स्मृतौ' इति वचनात् ? उच्यते।

सर्पणं सर्पः । तद्योगादिनिः । इनौ तु 'जातेरस्त्रीविषयाद्' (४।१।६३) इति ङीपि सर्पिणीत्येव । 'एकाक्षरात् कृतो जातेः' इत्यादि वाक्यं प्रयोगादितिकरणानुवृत्तिसाध्यम् । अतः प्रयोगदर्शनात् क्वचित् तौ भवतः 'पठिपठी' । पठिशब्दोऽपि हि पठनं पठः, भावे घञ् । संज्ञा-पूर्वकत्वाद् वृद्ध्यभावः । अत इनिः । 'नित्यवीप्सयोः' ( ८।१।४ ) इति द्विर्भावः 'पठिपठी' । यद्वा 'बहुलमाभीक्ष्ण्ये' ( ३।२।८१ ) णिनिः । वृद्ध्यभावः पूर्ववदेव । 'आभीक्ष्ण्ये द्वे भवतः' इति द्वित्वम् । ईमांश्च लक्ष्मीवान् । ईस्तु लक्ष्मीश्चला सामासर्जत्विलजिति(?)भागुरिः । एव पठी अभ्यासशीलः । ( उज्ज्वल ) स्तूणादिवृत्तौ 'इक् कृष्या-दिभ्यः' इति इक् । पठिर्भावोहक इत्याह ।। कथं 'श्रावी प्रत्ययः' प्रमाणे द्वयसज् ( ५।२।३७ ) इत्यत्रोक्तम् ? उच्यते । अपो विषये घञ् बहुलवचनादिति । एवं च श्रवणं श्राव इति घञन्तात् पूर्ववदिनिः । यद्वा श्रावयतीति श्रावी । आवश्यके णिनिः । शब्दश्चोच्चार्यमाण आत्मसंश्राव इति ।। कथं 'गुर्विणी' ? उच्यते । गुरुत्वमिन्वतीति । 'इव व्याप्तौ' इत्यतः क्विपि वलिलोपे 'ऋन्नेभ्यो ङीप्' ( ४।१।५ )। गुरुरुदरे अस्या अस्तीति व्रीह्यादीनिर्वा ।।

हलन्तात् = कर्मन् इत्यादिशब्दात् । कृतो जातेरिति । एकाक्षरात् शब्दात्, कृदन्तात्, जातिवाचकाच्च शब्दाद्, दण्डा अस्यां शालायां सन्तीति सप्तम्यर्थ-विवक्षायां च तौ = इनिठनौ न भवत इत्यर्थं मन्यते वृत्तिकारः । अत एवाग्रे पठीत्युदाहृतम् । भाष्ये तु कृद्या जातिस्तस्या इत्यर्थः कृतः । अन्ते चानभिधान-बलादिदं वचनं प्रत्याख्यातमेव । सर्पणं सर्प इति पचाद्यच्, भावे घञ् वा । इनिः, प्रकृतसूत्रेणेत्यादिः । 'इनिरयं कृत् स्याद्' इति गणपतिशास्त्रिकथनन्तूपेक्ष्यम् । इनाविति । इनिप्रत्यये कृते जातिविवक्षायामित्याशयः । इतिकरणम् मतुप्सूत्रे । प्रयोगदर्शनादिति । तथा च प्रत्ययद्वयमेतद् भवत्यपि न वेति यथाप्रयोगं व्यवस्था, नैकाक्षरादित्यादावाग्रह इति सूचितम् । अत एव कार्यी, कार्यिकः, तण्डुली, तण्डुलिक इत्यादयः सिद्धाः । प्रयोगभेदमेवोदाहरति—ईमानिति । ईशब्दार्थे प्रमाणं भागुरिवचनम् । एतच्चान्ते भ्रष्टम् । वस्तुतोऽत्र नास्यावतरणस्याञ्जसा सङ्गतिः । श्रावी प्रत्यय इति । 'प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज् वक्तव्यः'

इत्यत्र भाष्ये मात्रजर्थे श्राविप्रत्यय इत्युक्तम्। अप इत्यस्य ऋदोरबिति विहितस्येत्यादिः ॥

व्रीह्यादिभ्यश्च ॥ ५।२।११६ ॥

कथं 'मालिकः', व्रीह्यादौ 'शिखादिभ्य इनिरेव' इति वचनादिनिमतुपावेव, माली, मालावानित्येव भवति ? उच्यते। माला पण्यमस्येति 'तदस्य पण्यम्' ( ४।४।५१ ) इति ठक् ॥

इनिरेवेति नियमो भाष्यवृत्त्याद्युक्तः। अन्ते च तादृशप्रयोगस्यैवोपलम्भान्नियमोऽयं निराकृतोऽपि भाष्ये ॥

तुन्दादिभ्य इलच्च ॥ ५।२।११७ ॥

कथं 'जिह्वाले जुहवाम्बभूविम रुषा राजन्यसत्तामपि' इति मुरारिः, तुन्दादित्वादिलचि जिह्विल इति भाव्यम्? उच्यते। 'स्वाङ्गाद् वृद्धौ च' इति गणसूत्रार्द्धधिता जिह्वास्य जिह्विलः। वाचालस्तु जिह्वालः। 'प्राणिस्थादातः' ( ५।१।९६ ) इति लच् ॥

लजिति। प्राणिस्थादिति सूत्रे प्राण्यङ्गादेवेति नियमात् परशोर्जिह्वाल इति विशेषणं मुरारिपद्ये चिन्त्यमेवेति निष्कर्षः ॥

एकगोपूर्वाट्ठञ् नित्यम् ॥ ५।२।११८ ॥

कथम् 'एकदेशी अवयवी' इति वृत्तिः ? उच्यते। पूर्वनिपातव्यभिचारादस्यानित्यत्वादिनिः। ननु कर्मधारयान्मत्वर्थीयाद् बहुव्रीहिरिष्टो लघुत्वादिति कातीयन्यायान्नात्रेनिः ? यत्र बहुव्रीहिमत्वर्थीययोरेकार्थता तत्रायं न्यायः। इह तु एको देशोऽस्येति बहुव्रीहिणा अवयव एव प्रतीयते, नावयवी। यथा लोहितशालिमान् ग्राम इत्यादौ नायं न्याय इत्यपर (?) सूत्रे न्यासः। यद्येवं कथम् 'अइउण्' इत्यत्र 'अ इ उ इत्यादिको विशिष्टानुबन्धवच्छब्दः' इति न्यासः। तथा 'हेतुमति च' ( ३।१।२६ ) इत्यत्र 'भिक्षा हि प्रचुरतरव्यञ्जनवत्यः' इति। तथा विशेषणसूत्रे 'अनेकप्रकारवद् वस्तु'[1] इति। मनुसूत्रे च 'इकारानुबन्धवत्प्रातिपदिकम्' इति। तथा 'बिसकिसलयच्छेदपाथेय-

१. 'अनेकप्रकारवदस्तु' इति मुद्रितः पाठोऽशुद्धः।

वन्तः' इति मेघः। 'फलवत्पूगमालिना' इति रघुः। 'त्वगुत्तरासङ्ग-वतीम्' इति कुमारः। बहुव्रीहिमत्वर्थयोः समानार्थत्वात्? उच्यते। एकीयमतमेतत्। ये तु लाघवार्थं नानुमन्यन्ते, तन्मतेनैते प्रयोगाः। रक्षितस्तु 'बहुव्रीहेरेकदेशशब्दादिनिः। 'अइउण्' इत्यत्र नास्ति। स हि इतिकरणानुवृत्तेः कर्मधारयादेवेष्यते' इत्याह॥

पूर्वनिपातेत्यादि। अल्पाच्तरत्वेऽपि गोशब्दस्य पूर्वनिपाताकरणादित्यर्थः। नित्यग्रहणन्तु मतुम्मात्रनिवृत्त्यर्थम् अस्मिन् मते। यत्रेत्यादि। एतच्च 'प्रसव-धर्मेति वक्तव्ये प्रसवधर्मीति वचनं नित्ययोगमाख्यातुम्' इत्यनेन तत्त्वकौमुद्यां मिश्रैरप्युक्तम्। अवयव एवेति। एकदेशशब्दस्यावयव एव रूढत्वात्तदनुरोधेन बहुव्रीहिनिष्पन्नस्याप्यस्यावयवत्वसमानाधिकरणावयविन्येव वृत्तेः, न त्वन्त्या-वयविनीत्याशयः। तथा च लाघवात्कर्मधारय एवोचित इत्यपि बोध्यम्। लोहितेत्यादि। बहुव्रीहिनिष्पन्नेन लोहितशालिशब्देन व्यापकत्वमतिशयश्च न लभ्येते, मतुपा पुनर्लभ्येते इत्याशयः। अ इ उ इति। अत्र न्यासे 'अइउण् इत्येव-मादिको विशिष्टानुपूर्वीको विशिष्टानुबन्धकश्चाक्षरसमाम्नायः' इत्येव पाठः सम्प्रति। अनेकप्रकारवदस्त्विवति मुद्रितः पाठोऽयुक्तः। मन्सूत्र इत्यादि नाव-बुध्यते। ञमङणनम्-सूत्रन्यासे पुनः 'मकारानुबन्धवतः' इति लभ्यते। नास्तीति-तादृशः पाठो न्यास इति शेषः। कर्मधारयादेवेति। तेन बहुव्रीहेरन्ये मत्त्वर्थीया भवन्त्येवेत्याशयः। एकदेशिनेति (२।२।१) निर्देशाद्वाऽयं साध्यः॥

## अस्मायामेधास्रजो विनिः॥ ५।२।१२१॥

कथं 'सरस्वान् अर्णवः'? 'पयस्वान्,[1] यशस्वान्' इति भाष्योदा-हरणाद् 'एकगोपूर्वाद्' (५।२।११८) इत्यतः परेण मतुप् समुच्चीयत इति भाषावृत्तिः॥ कथं 'भवन्ति मायाविषु ये न मायिनः' इति भारविः, तथा 'जातवेदोमुखान् मायी' इति कुमारः? व्रीह्यादिपाठादिनिरपि॥ 'फलबर्हाभ्यामिनच्'। कथं 'फलवान् फलिनः फली' इत्यमरः। अनेन नित्यमिनचा भाव्यम्? बहुलग्रहणानुवृत्तेः॥

सरस्वीति भाव्यमिति प्रश्नः। भाष्यमत्र तसौ मत्त्वर्थे इति सूत्रस्थम्। भाषा-वृत्तिरिति। पूर्वं नित्यग्रहणेन तत्रैवान्यतरस्यामित्यस्य निवृत्त्याऽन्यत्र मतुप्-समुच्चय इत्याशयः। इनिरपीत्यपिना ठनोऽपि समावेश इति वृत्तौ स्पष्टम्॥

१. 'सरस्वती पयस्वान्' इति मुद्रितम्।

**द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ।। ५।२।१२८ ।।**

कथम् 'इयं चर्मवती कन्या' इति, अनेन नित्यमिनिप्राप्तेः । इन् ठन्नादेर्बाधकः ? उच्यते । चकारान्मतुप् समुच्चीयत इत्येके ।।

इति शरणदेवविरचितदुर्घटवृत्तौ पञ्चमाध्याये द्वितीयः पादः ।।

इत्येके इति । न्यासादिमते तु प्रकृतसूत्रेण मतुपो बाधस्योक्तत्वाद-साधुरेवेति स्थितम् ।।

इति दुर्घटवृत्तिविवृतौ पञ्चमाध्यायस्य द्वितीयः पादः ।।

## अथ तृतीयः पादः ।।

**प्राग्दिशो विभक्तिः ।। ५।३।१ ।।**

**सर्वैकान्यकिंयत्तदः काले दा ।। ५।३।१५ ।।**

कथं 'तत्र देव सर्वत्र' इत्यत्र न दाप्रत्ययः ? अन्तरङ्गत्वात् कालसामान्ये तस्येष्यमाणत्वात् (इति) 'कालविभागे चानहोरात्राणाम्' ( ३।३।१३७ ) इत्यत्र रक्षितः ।।

सर्वत इति मुद्रितः पाठोऽयुक्तः, अत्र त्रल एवास्य बाधकतया त्रलन्त एव प्रश्नोदयात् । अन्तरङ्गत्वादिति । अहोरात्रांशविभाजकोपाधिनिरपेक्षत्वेनेत्यादिः । तस्य = दाप्रत्ययस्य ।।

**इदमस्थमुः ।। ५।३।२४ ।।**

कथम् 'इमं प्रकारमापन्न इत्थम्भूत' (लक्षण ?) इति । प्रकारश्च सादृश्यम् । तत्र तृतीया युक्ता ? 'इत्थम्भूतलक्षणे' ( २।३।२१ ) (इति) निर्देशाद् द्वितीयान्तादपि थमुः ।।

तृतीयेति । तुल्यार्थैरिति सूत्रेणेत्यर्थः ।।

**दक्षिणादाच् ।। ५।३।३६ ।।**

कथं 'दक्षिणापथः' ? उच्यते । आबन्तस्यैव पथिशब्देन समासात् । एवं 'यशस्यं दक्षिणामुखम्' । एवमुत्तरापथम् उत्तरामुखमिति ।।

आबन्तस्येति । आजन्तस्येति युक्तम् । दिक्संख्ये संज्ञायामिति च समासः । दक्षिणामुखमित्यत्र दक्षिणामुख इति सम्प्रति पठ्यते मनुसंहितायाम् ।।

## अस्तातिं च ।। ५।३।४० ।।

कथं 'पश्यामि तां तत इतः पुरतश्च पश्चाद्' इति भवभूतिः । 'पुरः पुरतोऽग्रतः' इत्यमरः । तथा 'पुरतः प्रथमे चाग्रे' इति विश्वप्रकाशः ? चिन्त्यमिति भाषावृत्तिः । यद्वा पुरस्तिष्ठतीति प्रातिपदिकाद्धात्वर्थे णिचि टिलोपे च पचाद्यचि आद्यादित्वात् तसिः । पुरोवर्त्तिनीमित्यर्थः ।।

पुरत इति । पुरस्तादिति भाव्यम् । अन्ये तु दक्षिणोत्तराभ्यामतसुजित्यत्र तसुज्विधानेनैव सर्वनाम्नो वृत्तिमात्रे पुंवद्भावेन दक्षिणत इत्यादिसिद्धावकारोच्चारणमन्यतोऽपि विधानार्थमिति पुरत इति सिद्धम् । विशेषणार्थत्वेनाकारस्य प्रामादिक एवैष इति च केचित् ।।

## याप्ये पाशप् ।। ५।३।४७ ।।

कथं 'रक्षःपाशान्' इति भट्टिः, क्रियागुणयोर्निन्दाऽयोगात् ? उच्यते । अत्रापि राक्षसक्रिया निन्द्यते ।।

याप्यन्तेऽस्माद्गुणा इत्यपादाने व्युत्पन्नोऽयं शब्दो बाहुलकात् । तथा च कुत्सित इत्यर्थः । प्रवृत्तिनिमित्तभूतयोर्गुणक्रिययोर्निन्दायामेवायं प्रत्यय इति सिद्धान्तात् कथं द्रव्यकुत्सायामत्र पाशबिति प्रश्नः । सहचरितगुणक्रियाकुत्साश्रयेण सत्यभिधाने प्रवृत्तिनिमित्तकुत्साऽभावेऽपि प्रत्ययः । प्रकृते तु क्रव्यात्त्वादिना साक्षादेव प्रवृत्तिनिमित्तकुत्सा । यद्वा परम्परयैव सेति न दोष इत्युत्तराशयः ।।

## द्विवचनविभज्योपपदे तरबीयसुनौ ।। ५।३।५७ ।।

कथं 'गोतरः', क्रियागुणाभावात् । तौ हि प्रकृष्येते ? उच्यते । गोत्वगुणप्रकर्षे तरबत्र ।।

## प्रकारवचने जातीयर् ।। ५।३।६९ ।।

कथम् 'एकजातीया', 'सङ्ख्याया विधार्थे धा' (५।३।४२) इति धाप्रत्ययेन बाधितत्वात् ? उच्यते । गुणद्रव्यप्रकारे जातीयर्, क्रियाप्रकारे तु धाप्रत्यय इष्यते ।।

इष्यत इति । क्रियाप्रकारे धाप्रत्ययः, प्रकारवति च जातीयरिति तु निष्कर्षः ।।

**वा बहूनां जातिपरिप्रश्ने डतमच् ।। ५।३।९३ ।।**

कथं 'कतमो भवतां देवदत्तः', जातेरिह प्रश्नाभावात् ? उच्यते । 'कतरकतमौ जातिपरिप्रश्ने' (२।१।६३) इति जातिग्रहणाद् अन्यत्रापि भवति ।।

इति शरणदेवविरचितदुर्घटवृत्तौ पञ्चमाध्याये तृतीयः पादः ।।

अन्यत्रापीति । एतच्च वृत्त्यादौ स्पष्टम् ।।

इति दुर्घटवृत्तिविवृतौ पञ्चमाध्यायस्य तृतीयः पादः ।।

## अथ चतुर्थः पादः ।।

**पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च ।। ५।४।१ ।।**

**अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः ।। ५।४।७ ।।**

कथम् 'अस्मास्वधीनं किमु निस्पृहाणाम्' इति भारविः, केवलादधिशब्दात् खप्रत्ययाभावात् ? उच्यते । इनमधिगतोऽधीन इत्यायत्तपर्यायोऽस्ति, यस्यायं प्रयोगो वार्त्तिके 'वाक्यं वक्तर्यधीनम्' इति भाषावृत्तिः । तथा 'चाधीनो निघ्न आयत्तः' इत्यमरः । यद्वा 'धीङ् अनादरे' इति दैवादिकात् निन्दायां नञ्समासे आदरार्थं एव । अथवा अस्मास्वधीति 'सप्तमी शौण्डैः' (२।१।४०) इति समासे बहुलवचनादलुकि खप्रत्ययः ।।

वार्त्तिक इति । अथः परस्मिन्-सूत्रे भाष्ये श्लोकवार्त्तिकस्यायं चतुर्थः पादः । अनादर इति मैत्रेयरक्षितमतम् । क्षीरस्वामी तु आधारे पठति । माधवादिभिः पुनरादाने पठ्यते । खप्रत्यय इति । वक्तर्यधीनमिति प्रतीकमादाय कैयटेन तु अव्युत्पन्न एव आयत्तार्थवृत्तिरधीनशब्दः प्रोक्तः, खप्रत्ययस्याध्युत्तरपदाद् विधानात् । तथा च राजाधीनमित्यादौ अध्युत्तरपदत्वेपि शौण्डादिपठिताधिशब्देन समासाभ्युपगमाद् अस्मास्वधीनं वक्तर्यधीनमित्यादावव्युत्पन्न एवाधीनशब्दः । शरणदेवेन पुनरलुग् बाहुलकादुक्तः ।।

**किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।। ५।४।११ ।।**

कथम् 'उच्चैस्तरां वक्ष्यति शैलराजः' इति कुमारः, शिरोविशेष-

णत्वेन द्रव्यप्रकर्षात् ? उच्यते । वक्ष्यतीति क्रियाविशेषणत्वात् ॥

उच्चैस्तरामिति । मल्लिनाथेन तु उच्चैस्तरमिति पठितम् ॥

**यावादिभ्यः कन् ॥ ५।४।२९ ॥**

कथं 'सा कन्दुकैः कृत्रिमपुत्रकैश्च' इति कुमारः । 'पुत्रात् कृत्रिमे' इति गणसूत्रात् कनैव कृत्रिमार्थो लब्धः, कृत्रिमग्रहणानर्थक्यात् ? अनुकम्पाद्यर्थंकना अनुकम्प्याद्यर्थेऽपि पुत्रकशब्दोऽस्ति । तद्व्यावृत्तये कृत्रिमग्रहणम् ॥

**अपादाने चाहीयरुहोः ॥ ५।४।४५ ॥**

कथं 'मा दर्शतान्यं भरतं च मत्तः' इति भट्टिः, 'के न संविद्रते नान्यस्त्वत्तो बान्धववत्सलः' इति, 'अन्याराद्' (२।३।२९) इत्युपपदपञ्चमीत्वात् ? उच्यते । तसिरिति योगविभात् । 'आद्यादिभ्य उपसङ्ख्यानम्' इति वा ॥

योगविभागस्यादर्शनादाह—आद्यादिभ्य इति ॥

**सङ्ख्यायाश्च गुणान्तायाः ॥ ५।४।५९ ॥**

कथं 'सीतामूचे सुखाभव' इति भट्टिः ? अपपाठ एवायम् । सुखाकुर्विति पाठ आद्यः ॥

अत्रत्या वृत्तिरसङ्गतेव प्रतिभाति, सुखाभवेत्यस्य प्रकृतसूत्रविषयत्वाभावात् । सुखप्रियादानुलोम्य इत्यनेन डाचि साधुरेवायम् । मन्ये लेखकप्रमादात् स्खलितं किञ्चित् ॥

**अच् प्रत्यन्ववपूर्वात् सामलोम्नः ॥ ५।४।६५ ॥**

कथं 'नीचः' ? उच्यते । न्यञ्चतीति न्यक्, न्यगेव नीचः । पद्मनाभाद्यर्थंवदजिति योगविभागादच् ॥

नीचशब्द ऋत्विग्दधृगिति सूत्रे व्युत्पादितः । पद्मनाभ इति । पद्ममिव = पद्माकारो नाभिर्यस्येति विग्रहः ॥

**ब्रह्महस्तिभ्यां वर्चसः ॥ ५।४।७८ ॥**

कथम् 'अस्माकमपि ब्रह्मवर्चसो न बिभेषि' इति मुरारिः ? समासान्तविधेरनित्यत्वात् ॥

ब्रह्मवर्चस इत्यत्र ब्रह्मवर्चसादिति सम्प्रत्युपलभ्यते पाठः ॥

**तत्पुरुषस्याङ्गुलेः सङ्ख्याऽव्ययादेः ॥ ५।४।८६ ॥**

कथं 'गामेकां स्वर्णमेकं वा भूमेरत्यर्धमङ्गुलम्' इति, तथाच 'उच्छ्वसिता भूमिः साङ्गुलान्येकविंशतिः' इति, केवलादङ्गुलिशब्दादचोऽभावात् ? उच्यते । अङ्गुलिरस्य परिच्छेदिका विद्यत इति अर्शआदित्वादच् । एवं चाङ्गुलिपरिच्छिन्नो भागोऽङ्गुलः ॥

**राजाहस्सखिभ्यष्टच् ॥ ५।४।९१ ॥**

कथं 'वायुसख्या' ? उच्यते बहुव्रीहिणा ॥ कथम् 'आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी', विशेषणसमासात् टचा भाव्यम् ? उच्यते । आगामिवर्तमाने अहनी यस्याष्टप्रहरस्येति बहुव्रीहिः । समासान्तविधेरनित्यत्वाद्वा । 'रोऽसुपि' (८।२६९) इति रेफादेशाद् 'हशि च' (६।१।११४) इत्युत्वं न ॥

बहुव्रीहिरिति । यद्वा आगामिवर्त्तमाने अहनी युक्ते यस्यामित्येव विग्रहः । क्वचित्तु रेफरहित एव पाठः । तत्र नाशङ्का ॥

**उपसर्गाच्च ॥ ५।४।११९ ॥**

'यद्यहं नाथ ! नायास्यं विनसा हतबान्धवा' इति भट्टिः । यावता 'वेर्ग्रो वक्तव्यः' इत्यनेनाचि नासिकाया ग्रादेशे कृते विग्र इति स्यात् । तथा चामरः—'विग्रो विगतनासिकः' ? नसाशब्दस्यायं प्रयोगः । तथा च कोशान्तरम्—'नसा नासापि नासिका' । 'नस कौटिल्ये' इत्यस्य पचाद्यचीति धातुप्रदीपटीका । कथम् 'अपनासिको बालः', 'अनुनासिको वर्णः' ? 'मुखनासिकावचनोऽनुनासिकः'(१।१।८) इति निर्देशादस्यानित्यत्वात् ॥

मैत्रेयानुसारेण समाधत्ते—नसाशब्दस्येत्यादिना । कोशान्तरमिति । रामाश्रम्यां साहसाङ्कोऽपि—
'घ्राणं गन्धवहा नासा नसा नस्या च नासिका' इति । दीक्षितादयस्तु उपलक्षितेत्यध्याहृत्येत्थम्भूतलक्षणे तृतीयान्तोयं विनसाशब्दः पद्दन्नोमासेत्यादिनेति वदन्ति । विनासा हतबान्धवेति च पाठान्तरम् जयमङ्गलायाम् । पुरुषोत्तमस्तु

ग्रादेशो नैगमिक इति स्मृतिरित्यभिदधानोऽञ्जसैव प्रकृतसूत्रेण विनसेति प्रथमान्तं व्युत्पादयति ॥

धनुषश्च ॥ ५।४।१३२ ॥

कथं 'स्वलावण्याशंसाधृतधनुषमह्नाय तृणवद्' इति महिम्न-स्तोत्रम् ? समासान्ताविधेरनित्यत्वाद् 'वा संज्ञायाम्' (५।४।१३३) इत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानाद्वा सिंहावलोकनन्यायेन ॥

सिंहावलकनन्यायेनेत्यनुवृत्तेरित्यनेनान्वितम् ॥

गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥ ५।४।१३५ ॥

कथं 'क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ' इति माघः, 'तदेकान्तग्रहणं कर्तव्यम्' इति वचनाद् गस्यावयवत्वे स्वाभाविकत्वे इप्रत्ययविधानात् ? 'भग्नबालसहकारसुगन्धे' इत्याद्यः पाठः, सुगन्धाविति प्रमादपाठ एव । लक्ष्यपरतन्त्रत्वात् प्रायिकं वार्त्तिकमित्यन्यः । तथा च 'एवे चानियोगे' इत्यस्य प्रायिकत्वं रक्षितेनोक्तम् । 'महीरुहः पुष्पसुगन्धिराददे' इति भारवीयव्याख्यायामुक्तं प्रागवस्थातोऽन्यदीयगन्धस्य सम्पादनाद् गन्धः प्रारम्भक एवेति भवत्येकान्तग्रहणं गन्धविशेषणम् । (स्ताता ?) किन्त्वेवम् 'आघ्रायि वान् गन्धवहः सुगन्ध-स्तेनारविन्दव्यतिषङ्गवांश्च' इति भट्टिव्याख्याने जयमङ्गलायां यदुक्तम् 'गन्धस्येद्' इत्यादिना इकारो न भवति, तत्र तदेकान्तग्रहणादिति' तद्व्याहतं स्यात् ॥

एकान्त इति । समवेत इत्यर्थः । रूपादिसमुदायो द्रव्यमिति पक्षे तु एकान्तोऽवयव इत्यर्थः । तथा च गुणवचनो गन्धशब्दोऽत्र ग्राह्य इति फलितम् । माघोक्तौ तु सुगन्धिर्न समवेतः प्रतिबिम्ब इति प्रश्नः । प्रारम्भको घटकोऽवयव इति । तथा च युक्तमित्वं भारविपद्य इत्याशयः । व्याहतमिति । अत्र वायोरन्यदीयगन्धग्रहणेऽपि तस्य तदवयवत्वानभ्युपगमादित्यर्थः । स्वाभाविकरूपेण प्रतीयमाने सत्येवैकान्तता नान्यथेति भावः । वस्तुतस्तु द्वयोरविभागापन्नत्वमेवैकान्तता, सा च वैवक्षिकीति माघप्रयोगादाय उपपन्ना एव ॥

वयसि दन्तस्य दतृ ॥ ५।४।१४१ ॥

'सा दक्षरोषात् सुदती ससर्ज' इति कुमारः । तथा 'सुदतीं

सुनन्दा' इति रघुः। न चात्र वयो गम्यते ? भगवती गौरी इन्दुमती च तत्र बालापदेन विशेषिता। 'बालेति नियता नारी यावत् षोडशवत्सरम्' इति, तथा 'बालोनषोडशा' इति स्मृतेश्च पञ्चदशवर्षीया गण्यते। एवं चात्रापि यौवनं गम्यत एव॥

भगवतीत्यादिसमाधानं चारित्रवर्धनेनापि स्वीकृतम्। बालेत्यादिवाक्यं नागरसर्वस्वाद् गृहीतमित्यपि चारित्रवर्धनः। गम्यत एवेति। मनोरमादावप्ययमर्थः सङ्केतितः। तत्र कथञ्चिद् वयो गम्यत इत्युक्तिर्बालादिविशेषणान्तराऽसहकृते सुदतीत्यस्य प्रयोगे। हेमाद्रिस्तु रघुटीकायामन्यथा व्याचष्टे—"अग्रान्त (५।४।१४५) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्दत्रादेशः। 'वयसि दन्तस्य दतृ' इत्यत्र 'संख्यासुपूर्वस्य' इत्यनुवृत्तेरिति चेत् ? तन्न। सुदत्यादयः स्त्र्यभिधायिनो योगरूढाः शब्दाः। तेन 'स्त्रियां संज्ञायाम्' इति दत्रादेशे 'उगितश्च' इति ङीप्" इति। वामनस्तु—'सुदत्यादयः प्रतिविधेयाः' इत्याह। दक्षिणावर्त्तनाथस्त्वत एव 'सा दक्षरोषात्तु सती ससर्ज' इति पाठान्तरमाह॥

## नद्यृतश्च ॥ ५।४।१५३ ॥

कथं 'वरतनु ? सम्प्रवदन्ति कुक्कुटाः' इति। नदीसंज्ञकस्तनूशब्दोऽयम्। 'अम्बार्थनद्योर्ह्रस्वः' (७।३।१०७) इति ह्रस्वविधानात्। एवञ्च नित्यं कप् स्यात् ? उच्यते। समासान्तविधेरनित्यत्वादिति वाच्यम्। एवं च 'सुतनु ! सत्यमलङ्करणाय' इति। तथा 'ननु सुतनूमनुपालयानुयान्तीम्' इति माघः॥

इति शरणदेवविरचितदुर्घटवृत्तौ पञ्चमाध्याये चतुर्थः पादः॥

'वरतनु' इत्यस्य पद्यस्य पादत्रयं व्यक्तवाचामिति सूत्रे पदमञ्जर्याम्। क्षेमेन्द्रेण तु रूपान्तरेण पठितमौचित्यविचारचर्चायाम्॥

इति नारायणमिश्रविरचितायां दुर्घटवृत्तिविवृतौ पञ्चमाध्यायस्य चतुर्थः पादः॥

इति पञ्चमाध्यायः॥

## अथ षष्ठाध्याये प्रथमः पादः ।।

### एकाचो द्वे प्रथमस्य ।। ६।१।१ ।।

### श्लौ ।। ६।१।१० ।।

कथम् 'आदध्यादन्धकारे रतिमतिशयिनीम्' इति मयूरः, आशीर्लिङि श्लोरभावात् ? 'दध धारणे' इत्यात्मनेपदानित्यत्वादित्युक्तं प्राक् । आधेयादिति वा पाठः कर्तव्यः ।।

आदध्यादिति व्याख्यातम् अनुदात्तङित इति सूत्रे ।।

### वचिस्वपियजादीनां किति ।। ६।१।१५ ।।

कथं 'ववाह रक्तं पुरुषाः' इति ? उच्यते । भूवादेराकृतिगणत्वात् तत्र वहिः प्रकृत्यन्तरमस्ति । 'बाहृ प्रयत्ने' इत्यस्मादात्मनेपदानित्यत्वाद्वा ।। कथं 'यष्टिः', यजेः क्तिनि क्तिचि वा न सम्प्रसारणम् ? उच्यते । 'शक्तियष्ट्योरीकक्' (४।४।५९) इति निर्देशात् ।। कथं 'वाच्यति' इति, 'क्विब्वचि' इत्यादिना क्विप्सन्नियोगेनासम्प्रसारणादप्येकदेशविकृतत्वात् सम्प्रसारणप्रसङ्गात् ? साहचर्यादविकृतवचिग्रहणाद् व्यक्तौ शब्दान्तरत्वाद्वा ।। कथं 'कर्णवेधः', 'व्यधौ वेधे' इत्यमरः ? उच्यते । 'विध विधाने', घञ् । (धातो)रनेकार्थत्वात् ।।

आत्मनेपदानित्यत्वादिति । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति न्यायादिति भावः । यष्टिः व्रजयजोः इति सूत्रेऽपि विवेचिता । वाच्यतीति । 'क्विब्वचि···· श्रीणां दीर्घश्चाऽसम्प्रसारणं च' इति वार्त्तिकात् (३।२।१७८) वच्धातोः क्विपि दीर्घे सम्प्रसारणाभावे वाक्शब्दो व्युत्पन्नः । तस्माच्च वाचमिच्छतीत्यर्थे क्यचि वाच्यतीति । क्विप्सन्नियोगेनेत्यतः परं दीर्घविधानबलादिति पूरणीयम् । साहचर्यमत्र स्वपियजादिभिः । शब्दान्तरत्वं च क्यचः सुबन्तप्रकृतिकत्वेन । सम्प्रसारणविषयश्च धातुः । तथा च क्यचि परे वाचोऽधातुत्वेन न सम्प्रसारणमिति भावः । कर्णवेध इत्यत्र व्यध ताडने' इत्यस्माद्दैवादिकाद् व्यधजपोरित्यनेनापा कर्णव्यध इत्यनेन भाव्यम् ।।

## श्रृतं पाके ।। ६।१।२७ ।।

कथं 'श्रृतं धान्यपटोलयोः' इति ? क्षीरहविषोर्नित्यं व्यवस्थित-विभाषात्वात् क्वचिदन्यत्रापि भवति । पक्वमिति वा पाठः । 'पाके क्षीराज्यपयसाम्' इति चान्द्राः ।।

अत्र वृत्तौ क्वचिदन्यत्रापि भवतीति यदुक्तं तन्न क्वचिदुपलभ्यते, व्यवस्थित-विभाषाऽभ्युपगमविरुद्धं च । पक्वमिति । 'श्रृतं पक्वम्' इति वैजयन्त्याम् (४।३।९५) अपि दृश्यते । पाक • इत्यादि दृश्यतेऽमरेऽपि ( ३।१।९५ ) । क्षीरस्वामिमते हविषामिति पयसाम् इत्यत्र पाठः ॥

## आदेच उपदेशेऽशिति ।। ६।१।४५ ।।

कथं 'गारुत्मतं मरतकाह्वयः' इति, आहूयतेऽनेनेति पुंसि संज्ञाया घे आत्वभावात् ? 'का गा शब्दे' इति दिवादौ पठितव्ये 'कै गै शब्दे' इति भ्वादौ पाठाद् ज्ञापकाद् आत्वमनित्यमिति ज्ञापकसमुच्चयः । पृषोदरादिपाठाद्वा आत्वाभाव इति केचित् ।।

घे आत्वभावादिति । घे परे आत्वभावाद् इत्यर्थः अशितीत्यस्य पर्युदासत्वे । प्रसज्यप्रतिषेधपक्षे तु अनैमित्तिकोऽयमादेशः प्रत्ययात्पूर्वमेव भवतीति 'घे' इति विषयसप्तम्या निर्वाहः कार्यः । केचिदिति । रामाश्रमस्तु प्रकारान्तरेण व्युत्पादयत्यमरटीकायामाह्वय इति पदम् ॥

## पदन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ।। ६।१।६३ ।।

कथं 'माघे मासि रटन्त्यापः' इति, छन्दसीत्यनुवृत्तेः ? उच्यते । भाषायामपीष्यत इति वृत्तिः । एवञ्च 'पद्गा भरद्वाजमुनिं सशिष्यम्' इति भट्टिः । 'व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च' इति । पच्छब्दोऽयं पादपर्याय इति रक्षितः ।।

छन्दसीति शीर्षंश्छन्दसीत्यतः । भागवृत्त्यादिमत इदम् । इष्यत इति मतान्तरम् । अत एव 'क्षीणश्चन्द्रो विशति तरणेर्मण्डलं मासि मासि' इति वाराहमिहिरोऽपि प्रायुंक्त । रक्षित इति । तथा च पदादिशब्दाः प्रकृत्यन्तराणीति स्थितिः । छन्दसीत्यनुवृत्तिस्तु न युक्ता, अचि शीर्षं इति मध्यवर्त्तिसूत्रेण विच्छिन्नत्वात् ॥

## लोपो व्योर्वलि ।। ६।१।६६ ।।

कथम् 'अन्वलश्च रसाः' इत्यमरः । 'रवि लवि अवि शब्दे' इत्यतः 'मूशक्यविभ्यः क्लः' इति क्लप्रत्यये वलोपात् ? उच्यते । यकारसाहचर्यादन्तस्थविषयो[1] लोपः । अस्य पवर्गान्तगणे पाठः । कथं तर्हि 'व्रश्चकः'[2] इति ? उच्यते । 'व्रश्चको व्रीहिर्व्रणः' इत्यादौ तु प्रतिषेधः' इति भाषावृत्तिः । 'असिद्धं बहिरङ्गमन्तरङ्गे' [3]शस्याऽसिद्धत्वे वलोपाद् वकारस्यैवाभावात्[3] ।।

वृश्चिक इति पाठस्त्वसंगतः, तत्र वल्परत्वाभावेन सूत्राऽप्रवृत्तेः । प्रतिषेध इति । स चोपदेशसामर्थ्यात् । ननु वृश्चतीत्यादौ सम्प्रसारणे कृते वल्परत्वाभावेन वकारश्रवणमुपदेशफलमिति व्रश्चक इत्यादौ भवत्वेव लोप इत्यत आह—असिद्ध-मित्यादि । कर्त्रर्थसार्वधातुकसापेक्षत्वेन बहिरङ्गस्य शविकरणस्य वर्णमात्राश्रया-पेक्षे लोपे कर्त्तव्येऽसिद्धत्वेन सम्प्रसारणस्य सुतरामसिद्धतया वलिलोपप्रसङ्गो वृश्चतीत्यादावपीति न तत्रापि वकारश्रवणमुपदेशप्रयोजनमिति सर्वत्रैवोपदेश-सामर्थ्यादेव व्रश्चक इत्यादावपि न वलिलोपो भवतीति मन्तव्यम् । मूले लेखक-प्रमादादागतः पाठः संशोध्योऽर्थानुरोधेन ।।

## हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ।। ६।१।६८ ।।

कथम् 'अर्धपिप्पली', प्रत्ययग्रहणपरिभाषया ङ्याबन्तादेव सुपो भावात् ? तत्र दीर्घग्रहणान्नात्र तदादितदन्तनियमः । तद्धि निष्कौशा-म्बिरित्याद्यर्थमिति रक्षितः ।।

प्रत्ययग्रहणेत्यादि । पिप्पलीशब्दस्य एकविभक्ति इति सूत्रेणोपसर्जनत्वात् स्त्रीप्रत्यये चानुपसर्जने नेति परिभाषाया अप्रवृत्तौ भवत्येव तदादितदन्तविधिरिति पिप्पलीशब्दात्परस्यैव सुपो लुक् सम्भवति नार्धपिप्पलीशब्दादिति प्रश्नार्थः । भावादिति । लुको भावादित्यर्थः । उत्तरग्रन्थार्थस्तु—ङ्यन्ताबन्तयोर्दी-र्घत्वाऽव्यभिचारात् निष्कौशाम्ब्यादो लोपाभावस्य चप्रत्ययग्रहणपरिभाषयैव सिद्धत्वाद् दीर्घग्रहणं व्यर्थं सज्ञापयति—उपसर्जनेऽपि स्त्रीप्रत्यये प्रत्ययग्रहणपरि-

---

१. '(य?प) रलवि(ष)ये लोपः' इति मुद्रितः पाः ।

२. 'वृश्चिकः' इति मुद्रितमसङ्गतम् ।

३. अत्र शपोऽसिद्धत्वे वलोपाद्वा शपोऽसिद्धत्वेन वकारस्यैवाभावात्' इति मुद्रितः पाठः प्रामादिकः ।

भाषा न प्रवर्त्तते। या, सा इत्यादौ लोपानापत्तिभिया च ङ्याबन्ताद् विहितस्येत्येवं विशेषणत्वाभावे सिद्धे सोर्निष्कौशाम्ब्या विहितत्वेऽपि ङ्यन्तात् परत्वेन प्राप्तस्य लोपस्य निषेधार्थं दीर्घग्रहणं सार्थकम्। पिप्पलीशब्दस्य च नोपसर्जनत्वम्, एकविभक्तावषष्ठ्यन्तवचनमित्यनेन निषेधात्। अतश्च पिप्पलीशब्दस्य गोस्त्रियोरिति ह्रस्वत्वाभावेन सोर्लोपो भवत्येवेति।

अत्र स्त्रीप्रत्यये चानुपसर्जने नेत्येतावतैव निर्वाहे सत्यपि निष्कौशाम्ब्यादिपर्यन्तानुधावनं ग्रन्थकृतः शिष्यव्युत्पादनार्थमेव॥

## आद् गुणः॥ ६।१।८७॥

कथं 'दग्धां गुहां पश्य उलूकपूर्णाम्' इति? 'संहितायाम्' इत्यनुवृत्तेर्नासंहितायाम्॥ कथम् 'आउदकान्तं पद्गं प्रियमनुव्रजेद्' इति 'संहितैकपदे नित्या' इति वचनात्? उच्यते। 'ऊदनोर्देशे' (६।३।९८) इति दीर्घोच्चारणग्रहणादवग्रहार्थकादेकपदेऽपि संहिता अनित्येति। 'शक्तियष्ट्योरीकक् (४।४।५९) इति दीर्घोच्चारणाच्च। तथा च 'उपसर्गाद्ध्रस्व ऊहतेः' (७।४।२३) इत्यत्र रक्षितेनोक्तम्—'संहितैकपदे नित्येत्यादि प्रायिकमिदम्'। ओदकान्तमिति वा पाठः॥

नासंहितायामिति। वाक्ये तस्या वैवक्षिकत्वात्। अवग्रहार्थकादिति। अनु ऊपोऽनूप इत्यत्रेत्यर्थः। संहितायां तु ह्रस्वादेशेऽपि सवर्णदीर्घेणेष्टसिद्धेः। समासस्यैकपदत्वे विप्रतिपत्तेराह—शक्तीत्यादि॥

## वृद्धिरेचि॥ ६।१।८८॥

कथं 'शुद्धोदनः' इति? शकन्ध्वादित्वाद् ओत्वम्। 'द्रष्टुमुत्सुकमिति पुञ्ज (?) एतौ'? उच्यते। असंहितायां भविष्यति॥

असंहितायाम् = संहिताया अविवक्षायाम्॥

## औतोऽम्शसोः॥ ६।१।९३॥

कथं 'चित्रगुम्', स्थानिवत्त्वादात्त्वप्रसङ्गात्? अनल्विधाविति निषेधान्न स्थानिवत्त्वम्॥

स्थानिवत्त्वात् = स्थानिवत्त्वेन गु इत्यस्य गोशब्दत्वात्॥

## अकः सवर्णे दीर्घः॥ ६।१।१०१॥

कथं 'नैष अध्ययनस्य समयः' इति, 'कर्मणा यमभिप्रैति' (१।४-

३२ ) इत्यत्र च 'अभिप्रयणमभिप्राय:' इति न्यासः ? उच्यते । 'गतिकारकोपपदानाम्' इति सुपः प्राक् समासे । परपूर्वत्वं[1] वा ।। कथं 'तपोवनं प्राध्ययनाभिभूतं समुच्चरच्चारुपतत्त्रिशिञ्जम्' इति भट्टिः ? 'तत्पुरुषे कृति बहुलम्' ( ६।३।१४ ) इति ज्ञापकात् प्रायिकं 'गतिकारकोपपदानाम्' इति रक्षितः ।। कथम् 'अधीयते' । दीर्घे कृते इयङा भाव्यम् । 'अधियते[2]' इति स्यात् ? 'नेन्द्रस्य परस्य' (७।३।२२) इति ज्ञापकात् पूर्वोत्तरयोस्तावत् कार्यं, पश्चादेकादेश इति । 'वार्णादाङ्गं बलीयः' इति वा इयङि दीर्घत्वम् । 'सार्वधातुकमपिद्' ( १।२।४ ) इत्यत्र 'च्यवन्ते[3]' इति प्रस्तावे न्यासकृता व्याश्रयेऽपीयं स्वीकृता । 'विप्रतिषेधे' (१।४।२) इत्यत्र मैत्रेयेणाप्युक्तम्—'लक्ष्यवशात् क्वचिद् व्याश्रयेऽप्येषा प्रवर्त्तते अभिप्रयणादौ' इति ।। कथं ( धन्वन्तरिसस्तनमर्थसनमिति ? ) ? उच्यते । शकन्ध्वादिः ।। कथं 'परोक्षम्' । अक्ष्णः परं पराक्षमिति प्राप्नोति, 'अव्ययीभावे शरत्प्रभृतिभ्यः' ( ५।४।१०७ ) टच् ? 'परोक्षे लिट्' ( ३।२।११५ ) इति निर्देशात् ( इति ) शरत्प्रभृतौ न्यासः ।।

अभिप्रयणमभिप्राय इति सम्प्रति न्यासे न दृश्यते । अभिप्रायणशब्दस्तु प्रयुक्तस्तत्र नाऽशङ्का । समासे इति । समासे सति धातूपसर्गकार्यस्यान्तरङ्गत्वेन गुणेऽभिप्रयणमित्येव युक्तमित्यर्थः । परपूर्वत्वं च शकन्ध्वादित्वात् । पूर्वरूपत्वमित्यपपाठः । ज्ञापकादिति । अन्यथा सुबुत्पत्तेः प्राक्समासे कर्णेजप इत्यादौ पूर्वपदे विभक्तेरेवाभावेन तदलुग्विधानं व्यर्थं स्यात् । अम्बाम्बगो० सूत्रे गवादिग्रहणादपीयमनित्येत्यन्यत्र विस्तरः । दीर्घ इति । अन्तरङ्गत्वात्सवर्णदीर्घे कृत इत्यर्थः । ज्ञापकादिति । पूर्वमेकादेशे इन्द्रशब्दस्य वृद्धावप्राप्तायां निषेधस्य व्यर्थतया ज्ञापकत्वम् । स्पष्टं चैतददस औ सुलोपश्चेतिसूत्रे न्यासे, नेन्द्रस्य परस्येत्यत्र वृत्तौ, अन्तादिवत्सूत्रभाष्ये च । व्याश्रयत्वम् = भिन्नस्थानिकत्वं भिन्ननिमित्तकत्वंचेहाभिप्रेतम् । अधीयत इत्यादावाद्यं च्यवन्त इत्यादावन्त्यमिति विवेकः । अन्त्यं च न

---

१. पूर्वत्वमित्यत्र रूपत्वमिति संशोधनमनावश्यकम् ।

२. अधीयत इति मुद्रितः पाठोऽयुक्तः ।

३. च्यवन्तप्रस्ताव इति मुद्रितः पाठो न साधुः ।

युक्तमिति स्पष्टं शेखरादौ। अभिप्रयणादावित्यत्राभिप्रायणादावित्युचितम्। शकन्ध्वादित्वाद्वा यथाश्रुतमपि साधु। अथवा प्रत्यय इत्यादिनिर्देशादपि समाधेयम्। परोक्षमिति प्राप्नोतीति मुद्रितमसाधु। निर्देशादिति। अक्ष्णोऽकारस्योत्वमिति शेषः॥

प्रथमयोः पूर्वसवर्णः ॥ ६।१।१०२ ॥

कथं 'देवो याति' इति, उत्वे कृते अनेन दीर्घात्? उच्यते। 'नादिचि' (६।१।१०४) इति निषेधः॥

सम्प्रसारणाच्च ॥ ६।१।१०८ ॥

कथं 'संविव्ययुर्देहान्' इति भट्टिः, 'न व्यो लिटि' (६।१।४६) इत्यात्वनिषेधेऽप्यनेन पूर्वरूपत्वात्। अत एव 'संविव्युरम्बरविकासि चमूसमुत्थम्' इति माघः? उच्यते। चिन्त्यम्। 'संज्ञापूर्वको विधिरनित्यः' इति वा सम्प्रसारणाभावः॥

सम्विव्ययुरिति। अत्रापि लिट्यभ्यासस्योभयेषामिति द्वित्वात्परस्ताद्धलादिशेषाच्च पुरस्तात्सम्प्रसारणं मस्वोपपत्तिर्जयमङ्गलायां समर्थिता। किति च लिटि अभ्यासात्परस्यापि ग्रहिज्येति सम्प्रसारणम् मत्त्वा पूर्वरूपे विवि उस् इत्यवस्थायामेरनेकाच इति यणि विव्युरिति स्यादिति प्रश्नः। अभाव इति। वस्तुतस्तु लिट्यभ्यासस्योभयेषामित्यस्याकिदर्थत्वेन किति लिटि परत्वात्सम्प्रसारणे कृते द्वित्वमिति विव्ययुरित्यसाध्वेव॥

ऋत उत् ॥ ६।१।१११ ॥

कथं 'जाग्रोऽविचिण्णल्ङित्सु' (७।३।८५) इति, अनेन जागुरितिस्यात्। यथा 'उपविद्जागुः' इति? अत एव निर्देशात्। नावश्यं लक्ष्ये लक्षणं प्रवर्तते, लक्ष्यपरतन्त्रत्वाच्छास्त्रस्येति वा वाच्यम्॥

'उपविदजागृ' इत्येव पाठः, वृत्त्युक्तस्तु न कुत्रापि दृश्यते प्रामाणिकग्रन्थेषु॥

ख्यत्यात् परस्य ॥ ६।१।११२ ॥

कथं 'एकः सख्यास्तव सह मया' इति मेघः, विकृतनिर्देशादनेन भाव्यम्? उच्यते। विकृतनिर्देशस्य क्यजन्ते कृतार्थत्वादिति। इह परत्वाद् 'आण्नद्याः' (७।३।११२) इति आटा भाव्यम्॥

क्यजन्त इति। सह खेन वर्त्तत इति सखस्तमिच्छतीति क्यचि सखीयतेः क्विपि सखीरिति। तस्य ङसिङसोस्सख्युरित्यत्रेत्यर्थः॥

## दिव उत् ।। ६।१।१३१ ।।

कथं 'दिवोकसः' इति, उत्वे कृते पूर्वोत्तरपदयोर्यणि द्योकस इति स्यात् ? उच्यते । शब्दपरविप्रतिषेधादुकारस्य यणि रूपमिति रक्षितः । 'अचः परस्मिन् पूर्वविधौ' ( १।१।५७ ) इति स्थानिवत्वादिकारस्य न यण्, 'सकृद्गतौ विप्रतिषेधे' इति न्यायात् । चान्द्रैः पृषोदरादित्वादुत्वाभाव इष्यते, तत एवान्ये दिवौकस इति । अकारान्तोऽपि दिवशब्दोऽस्ति—

इदं पुरं तेन विसर्जितं वनं वनं च तत् तेन समन्वितं पुरम् ।
प्रशोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवम् ।।

इत्यश्वघोषप्रयोगात् । 'दिवं नभः' इत्यपरः । तेन वा दिवौकस इति । कनिन्प्रत्ययान्तेन दिवा ओको येषामिति भागवृत्तिः ।।

शब्दपरेत्यादि । व्युत्पाद्यमाने शब्दे पूर्वपरयोः प्राप्तौ परस्यैव कार्यमितिविप्रतिषेध इष्टान्वाख्यानमूलकः । स्थानिवत्त्वादिति । अनादिष्टादचः पूर्वस्येति पक्षे तु प्राप्तिरेव नास्य । इत्यपरः । त्रिकाण्डशेषकर्त्तेत्यर्थः । अमर इति संशोधनमयुक्तम् । कनिन्निति । उणादीनां बहुलवचनात् केवलादपि 'कनिन् युवृषि''''प्रतिदिवः' ( उ. सू. १।१४२) इति सुत्रेण कनिन्नित्यर्थः ।।

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।। ६।१।१३२ ।।

कथं 'सो वा कम्बलविक्रयी', अनेन सलोपात् ? उच्यते । त्यच्छब्दस्य 'स्यो वा कम्बलविक्रयी' इति पाठः कर्त्तव्यः । यद्यपि त्यच्छब्दश्छान्दस इति वृत्तिः, तथापि छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्त इति ।।

प्रयुज्यन्त इति । ज्ञापकं चात्राध्वर्युक्रतुरनपुंसकमित्यत्र अध्वर्युशब्दप्रयोगः ।।

## सम्पर्युपेभ्यः करोतौ भूषणे ।। ६।१।१३७ ।।

कथं 'अनित्यः सर्वसंस्कारः', तथा 'सर्वं संस्कारमनित्यम्' इति, कार्यपर्यायत्वात् ? अव्युत्पन्नोऽयमिति भाषावृत्तिः । 'सुट् कात् पूर्वः' ( ६।१।१३५ ) इति विधिश्चाधिकारश्चेत्यन्यः ।।

इति शरणदेवविरचितदुर्घटवृत्तौ षष्ठाध्याये प्रथमः पादः ।।

अनित्याः सर्वसंस्कारा इति पाठो बौद्धग्रन्थे प्रसिद्धः। विधिरिति। अत्र पक्षे सुडव्याहतः॥

इति दुर्घटवृत्तिविवृतौ षष्ठाध्यायस्य प्रथमः पादः॥

## ( द्वितीयः पादो न व्याख्यातः )

## अथ तृतीयः पादः॥

### अलुगुत्तरपदे॥ ६।३।१॥

### ओजस्सहोम्भस्तमसस्तृतीयायाः॥ ६।३।३॥

कथं 'सततनैशतमोवृतम्' इति भारविः, अनेन तृतीयाया अलुक्प्रसङ्गात्? उच्यते। इगुपधलक्षणे के कृते नैशतमो वृतं वर्तमानमस्येति रक्षितः। यद्वा ग्रहणवता प्रातिपदिकेन तदन्तविधेर्निषेधान्नैशशब्देन समासे अलुङ् नास्त्येव। 'पूर्वपदभूतं यत्र तमस्तत्रालुक्, न तु यत्र तमोऽन्तं पूर्वपदम्'[1] इति भाषावृत्तिः॥

रक्षित इति। अत्र मते तमःशब्दो न तृतीयान्तः। पुरुषोत्तमीयं समाधानमाह–यद्वेति। हरदत्तेन चोत्तरपदस्याधिकृतत्वाद् यत्र सूत्रोपात्तं पूर्वपदं तत्रैव विधिर्नान्यत्रेत्युक्तम्। अतो यत्र तदन्तविधिरिष्टस्तत्रोपात्तेनाक्षिप्तं पूर्वपदं विशेष्यते, तेन तस्य तदन्तस्य च भवति—इष्टकचितम्, पक्वेष्टकचितमिति। क्वचित्तु—यदेवोपात्तं तस्यैवानन्तर उत्तरपदे तत्कार्यम्, न तूपात्तस्य—तदन्तस्य वा पूर्वपदत्वमपेक्ष्यते, यथा आनङ् ऋतो द्वन्द्वे—'होतृपोतृनेष्टोद्गातारः' इति। अत्र नेष्टृशब्दो न पूर्वपदं नापि तदन्तं पूर्वपदमपि तु होतृशब्दः, न च तस्योत्तरपदमनन्तरमिति स्पष्टं पदमञ्जर्याम्॥

### आनङ् ऋतो द्वन्द्वे॥ ६।३।२५॥

कथं 'अध्येतृवेदित्रोरुत्पन्नस्य' इति 'प्रोक्ताल्लुग्' (४।२।६४) इत्यत्र वृत्तिः। तथैव 'होतृपोतृनेष्टोद्गातारः'[2] इति मीमांसकप्रयोगः? विद्यासम्बन्धस्याविवक्षितत्वान्नात्रानङ्। विवक्षापि शब्दव्युत्पत्तेः

---

१. 'चोभयमि'ति मुद्रितम्।

२. 'नेष्टोद्गातारौ' इति मुद्रितः पाठः।

प्रधानं कारणमिति 'तदाद्याचिख्यासायाम्' इत्यत्र सन्प्रयोगेण ज्ञापितम् । होतृपोतृनेष्टोद्गातार इत्यत्र मध्यमपदे आनङ् नास्ति । समासे सर्वान्तं पदमुत्तरपदमिति पूर्वाचार्यप्रसिद्ध्याश्रयणात् । अत एव 'नैककीर्त्तिः' इति त्रिपदबहुव्रीहौ समासे नलोपाभाव इति रक्षितः ॥ कथम् 'पुत्रौ दुहितात्मजौ' इति त्रिकाण्डशेषः, ऋत इत्यनुवृत्तेः ऋदन्त-द्वन्द्वस्य ग्रहणात् ? उच्यते । असाधुरेवायम् । 'पुत्रेऽन्यतरस्याम्' (६।३। २२) इत्यतोऽनुवृत्तस्य पुत्रस्यार्थग्रहणादिति केचित् । तन्न । अति-प्रसङ्गादव्याख्यातत्वाच्च ॥

**देवताद्वन्द्वे च ।। ६।३।२६ ।।**

कथं 'रविचन्द्रावपि लोपलक्षितौ' इति घटकर्परः ? उच्यते । द्वन्द्वग्रहणेऽनुवर्तमाने पुनर्द्वन्द्वग्रहणं वेदप्रसिद्धद्वन्द्वग्रहणार्थम् । न च रविचन्द्रयोर्द्वन्द्वो वेदप्रसिद्ध इति रक्षितः ॥

रक्षित इति । चिन्त्यमिति पुरुषोत्तमः ॥

**ईदग्नेः सोमवरुणयोः ।। ६।३।२७ ।।**

कथमुत्तरकाण्डे 'एवं विनिश्चयं कृत्वा सम्प्रगृह्य कुशीलवौ' । तथा 'भविष्यदुत्तरं काव्यं यतस्तौ च कुशीलवौ' । अत्र कुशलवयोरनन्तर्भावा-दिति ? उच्यते । 'दीर्घत्वेन सिद्धेरीद्विधानमन्यत्रापि यथा स्यादित्येव-मर्थमिति, तेनेह कुशीलवौ सिद्धौ' इति भाषावृत्तिः । न चैवं 'कविः कुशलवावेव चकार किल नामतः' इति रघुः न सङ्गच्छते, 'राम इव कुशलवयो रूपोच्छ्रायः' इति सम्बन्धश्च । 'विभाषा स्वसृपत्योः' ( ६।३।२४ ) इत्यतो विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वात् क्वचिन्नेति ॥

दीर्घत्वेनेति । अग्निशब्दस्येदागमेनापि सवर्णदीर्घविधानमात्रेणैवैत्यर्थः । एतदनुरोधेनोत्तरसूत्रे दीर्घनिषेधो वा कर्त्तव्यः, यथाश्रुतमेव वा ॥

**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।। ६।३।३४ ।।**

कथं 'दृढभक्तिश्च शूरश्च' इति चाणक्ये, भक्तिशब्दस्य प्रियादिषु

पाठान्निषेधात् ? अस्त्रीपूर्वपदस्य विवक्षितत्वादिति वृत्तिः । दृढं भक्तिरस्येति वाच्यं पदसंस्कारेण । एवम् (अभाषिष्ट पृथिवीव्यक्तकातरः १) ॥ कथम् 'एकोऽहं भवतीसुतक्षयकरो मातः ! कियन्तोऽरयः' इति वेणी, 'भवतीप्रसादाद्' इति चण्डी, 'सर्वनाम्नो वृत्तिमात्रे पुंवद्' इति वचनात् ? उच्यते । पुंवदिति योगविभागसाध्यमिदं क्वचिदेव । अत एव वृत्तौ न लिखितम् । 'एवे चानियोगे' इति च प्रायिकम् ॥

अस्त्रीत्यादि । पूर्वपदेऽदार्ढ्यनिवृत्तिपरे स्त्रीत्वस्याऽनुपयोगेन तस्याऽविवक्षितत्वादित्यर्थः । पूर्वपदमार्षमिति च भागवृत्तिकृत् । न लिखितमिति । भाष्ये तु दृश्यत एव । इति च = इतिवत् ॥

**तसिलादिष्वाकृत्वसुचः ॥ ६।३।३५ ॥**

कथं 'सतीत्वं सखि ! रक्षणीयम्' इति, 'तन्वीत्वम्' ? उच्यते । 'न कोपधायाः' (६।३।३७) इत्यत्र योगविभागात् प्रतिषेधः ॥

प्रतिषेध इति । भाष्योक्तपरिगणनपक्षे सतीशब्दादेर्द्रव्यवाचित्वान्न पुंवद्भाव इत्यपि केचित् । चिन्त्यमिति पुरुषोत्तमः ॥

**पुंवत् कर्मधारयजातीयदेशीयेषु ॥ ६।३।४२ ॥**

कथं 'गौरीब्राह्मणितरा' इति 'सुप्तिङन्तं पदम्' (१।४।१४) इत्यत्र वृत्तिः, गौरत्वं स्त्रोपुंसयोः प्रवृत्तिनिमित्तमिति समानायामाकृतौ भाषितपुंस्कत्वात् पुंवत्प्रसङ्गात् ? उच्यते । यदा गौर इति पुंयोगनिमित्तः स्त्रीप्रत्ययः तदेदमुक्तम् । अतो गौरब्राह्मणितरेति लक्ष्यत इति रक्षितः । 'महाष्टमी' इत्यादौ पुंवत्त्वात्, अपूरणीप्रियादिष्वित्यस्याननुवृत्तेः ॥

तदेदमुक्तम् इति । तथा च विग्रहप्रदर्शनमेतन्न समस्तं रूपमिति फलितम् । समस्तरूपमाह—गौरेत्यादिना ॥

**आन्महतः समानाधिकरणजातीययोः ॥ ६।३।४६ ॥**

कथं 'महतीप्रियः', लिङ्गविशिष्टपरिभाषया आद्भावात् ? उच्यते । 'घटघटी'ग्रहणेनास्या अनित्यत्वात् ॥

महतीप्रिय इत्यत्र महती प्रिया यस्येति बहुव्रीहिः । अयं च दोषेष्वन्यतमोऽस्याः स्वीकार इति ङ्याप्सूत्रभाष्ये । तत्र प्रतिविधानमाह—घटेत्यादिना । शक्तिलाङ्गूलाङ्कुशेत्यादिवार्त्तिक इत्यर्थः ॥

## द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ।। ६।३।४७ ।।

कथं 'सन्देहद्वापरौ चाथ' इत्यमरः, परशब्दस्यासंख्यात्वात् ? उच्यते । 'आन्महतः' (६।३।४६) इत्यत्र आदिति योगविभागात् । अत एव 'प्रागेकादश स्मृताः' इति । 'कुसीददशैकादशाद्' (४।४।३१) इति निपातनाद्वा । 'सप्तविंशतिमौक्तिकैः' इति योगविभागादेव । 'अन्येषामपि दृश्यते' (६।३।१३७) इति दीर्घेण वा (वृद्धसुवर्णे ?) । एवं पूर्वामुखः, पश्चिमामुखः, उत्तरापथः, दक्षिणापथो देशः, दक्षिणे पन्था अस्येति बहुव्रीहौ । यद्वा 'दक्षिणादाच्' (५।३।३६) 'उत्तराच्च' (५।३।३८), इति 'दिक्संख्ये' (२।१।५०) इति समासः ।।

द्वापरशब्दः संशयार्थको द्वौ परौ पक्षौ यत्रेति बहुव्रीहिनिष्पन्न इति तत्राबहुव्रीहीत्यनेनैव प्रतिषेधे द्वाभ्यां परमिति पञ्चमीतत्पुरुषव्युत्पन्नो युगार्थकः प्रष्टव्यः । एकादशेत्यत्र संख्येयवाचित्वमुभयोरिति नानेनात्वप्राप्तिः । एवञ्च प्रागेकादशभ्योऽच्छन्दसि (५।३।४९) इति निर्देशोऽपि ।।

## ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ।। ६।३।६३ ।।

कथं 'वैदेहिबन्धोर्हृदयं विदद्रे' इति रघुः, असंज्ञात्वात् ? उच्यते । बहुलवचनादसंज्ञायामपि । अत एव 'प्रमदवनमन्तःपुरोचितम्' इत्यमरः । अथवा प्रमदार्थं वनं प्रमदवनम् । यदा तु प्रमदाया वनमिति समासस्तदा 'प्रविष्टः प्रमदावनम्' इति भट्टिः ।।

वैदेहीति योगरूढं नामेत्यपि कश्चित् ।।

## त्वे च ।। ६।३।६४ ।।

कथं 'जातेरेकत्वात्', 'परिभाषयाः स्वरूपविषयत्वाद्' इति, 'संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि' इति वृत्तिव्याख्यानात् ? सामान्योपक्रमेण स्त्रीत्वस्याविवक्षितत्वात् । 'उपधात्वाद् इति तूपदधातीत्युपधः, 'आतश्चोपसर्गे' (३।१।१३६) इति कः । उपधायक उपध इत्येवं सिध्यति । 'अनुपधात्वाद्' इति तु 'धिन्विकृण्व्योर च' (३।१।८०) इति न्यासः प्रमाद एव ।।

सामान्योपक्रमादिति। इको ह्रस्व इत्यादिना लोकवेदसामान्येन ह्रस्वविध्युपक्रमादित्यर्थः। समाधानान्तरम्—स्त्रीत्वस्येति। यद्वा एकमेव समाधानम्। अनुपधत्वादित्येव सम्प्रति पाठः। अङ्प्रत्ययान्तस्योपधाशब्दस्य तु स्त्रीलिङ्गतया तत उपधत्वं लोके न युक्तं वृत्त्याद्यनुरोधादिति॥

**अरुर्द्विषदजन्तस्य मुम् ॥ ६।३।६७ ॥**

कथम् 'आढ्यंसुकरणः' इति व्यवधाने मुम्? 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति वचनात्॥ कथं 'धुरन्धरः', मुमो लक्षणाभावात्? उच्यते। पृषोदरादित्वात्॥ कथं 'मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः', मुमो लक्षणाभावात्, चन्द्रगोमी तु 'मध्यस्य दिने' इति सूत्रितवान्? उच्यते। पृषोदरादित्वात्॥

आढ्यं सुकरण इत्यत्र आढ्यसुभग इति ख्युन्। मुमो लक्षणस्य खित्प्रत्ययस्याभावात्। कथंचित्संज्ञात्वं स्वाम्यादिसम्मतमभ्युपगम्य संज्ञाया भृतृ० इत्यनेन तदुपपादनेऽपि पूर्वपदस्याजन्तत्वाऽभावादिति तात्पर्यम्। मध्यन्दिनेत्यत्र तु खित्प्रत्ययाभावेनैव मुम्लक्षणाभावः॥

**नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ॥ ६।३।७५ ॥**

कथं 'नासत्यश्चैव दस्रश्च द्वावेतावश्विनीसुतौ' इति, तथा च 'नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ' इत्यमरः, नासत्या इति बहुवचनान्तनिपातनात्? उच्यते। बहुवचनमतन्त्रं प्रयोगवृत्तिपरत्वात्॥

**सहस्य सः संज्ञायाम् ॥ ६।३।७८ ॥**

कथं 'भग्नवालसहकारसुगन्धौ' इति? उच्यते। यत्र सभावे सति संज्ञा गम्यते तत्र सभावः स्यान्नान्यत्र॥

**ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥ ६।३।८५ ॥**

कथं 'सपक्षः'? 'समानस्य' इति योगविभागादिति वृत्तिः॥ कथं तर्हि 'समानपक्षः'? वेति केवलमनुवृत्तिनियमात्। यद्वा अव्यया-

नामनेकार्थत्वात् सहशब्दस्य समानार्थस्य सभावे सपक्षः । समानशब्दे तु समानपक्ष इति भागवृत्तिः ॥

समानस्येति । समानस्य च्छन्दसीति सूत्र इत्यादिः । वेति । वोपसर्जनस्येत्यतः । योगविभागस्यानार्षत्वाद् भागवृत्तिकारसम्मतं समाधानान्तरमाह—यद्वेत्यादिना । सभावे वोपसर्जनस्येतिसूत्रेण, समानो धर्मोऽस्येति तु अस्वपदविग्रह एवेत्याशयः ॥

## विभाषोदरे ॥ ६।३।८८ ॥

कथं 'त्वं सोदरस्यातिमदोद्धतस्य' इति भट्टिः, 'अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' इति मुरारिः, 'तीर्थे ये' ( ६।३।८७ ) इत्यनुवृत्तेर्यत्प्रत्ययान्त एवोदरे सभावात् ? उच्यते । 'समानस्य च्छन्दसि' ( ६।३।८४ ) इत्यत्र योगविभागेन सभाव इति सोमनन्दी । सहशब्दस्य समानार्थस्य 'वोपसर्जनस्य' ( ६।३।८२ ) इति वा सभावो वाच्यः । तथा च 'तं तु देशं न पश्यामि यत्र भ्राता सहोदरः' इति दृश्यते । 'सोदराद्यः' ( ४।४।१०९ ) इति तु भावियप्रत्ययमाश्रित्येति तत्र न्यासः ॥

सोदरसहोदरशब्दौ सोदराद्य इत्यत्र व्याख्यातौ । भावीति । एतेन प्रकृतसूत्रे विषयसप्तमी सूच्यते ॥

## कोः कत्तत्पुरुषेऽचि ॥ ६।३।१०१ ॥

कथं 'कूक्तिः प्रयुक्ता' इति ? उच्यते । अर्थे विभाषा' ( ६।३।१०० ) इत्यनुवृत्तेर्व्यवस्थितविभाषात्वात् । असाधुर्वा ॥

कूपदेशप्रविष्टोऽयं वारितो न निवर्तते ।
न निमज्जत्यधो यावन्नरोऽपि च घटोऽपि च ॥

इति शूलपाणिः । द्व्यर्थो बहुव्रीहिणापि घटते ॥

द्व्यर्थः = विदारकः, प्रहिश्च (= प्रसिद्धः कूपः) इति । बहुव्रीहिणा = कुत्सिता आपो यत्रेति, ईषदापो यत्रेति च क्रमेण । ऋक्पूरब्धूरित्यचि ऊदनोर्देशे इत्यत्र दीर्घविधानसामर्थ्यादन्यत्राप्युदिति रूपसिद्धिः ॥

**उपसर्गस्य घञ्यमनुष्ये बहुलम् ।। ६।३।१२२ ।।**

कथं 'महाबलपरीवारो महांश्चापपतिर्बलिः' इति, मनुष्यसमुदायत्वाद् बलस्य अमनुष्य इति प्रसज्यप्रतिषेधात्, तथा 'प्रतीहार' इति ? उच्यते । बहुलवचनान्मनुष्येऽपि क्वचित् । 'अन्येषामपि (६।३।१३७) इति वा दीर्घः ।।

**इति शरणदेवविरचितदुर्घटवृत्तौ षष्ठाध्याये तृतीयः पादः ।।**

परीवारशब्दो ग्रहन्नृ० इति सूत्रे व्याख्यातपूर्वः ।।

इति दुर्घटवृत्तिविवृतौ षष्ठाध्यायस्य तृतीयः पादः ।।

## अथ चतुर्थः पादः ।।

**अङ्गस्य ।। ६।४।१ ।।**

**हलः ।। ६।४।२ ।।**

कथं 'तृतीया' ? उच्यते । 'तृतीया' इति निर्देशात् । अण इत्यनुवृत्तेर्वा ।। कथं 'पितृणाम्' इत्यत्र दीर्घः ? उच्यते । 'न तिसृचतसृ' (६।४।४) इति प्रतिषेधादत्राणिति नानुवर्तते । एवं वृत्तावुक्तम् ।।

तृतीयेति । त्रिशब्दात् त्रेः सम्प्रसारणञ्चेति तीयप्रत्यये सम्प्रसारणे च कृते स्त्रियां टापि तृतीयेति भवति । तत्र ऋकारस्य दीर्घः कथं नेति प्रश्नः । तृतीया तत्कृतेति निर्देशादित्येकमुत्तरम् । ढ्रलोप इत्यतोऽणनुवृत्तेरण् च पूर्वेणैव णकारेणेति ऋकारस्य न स्थानित्वमित्यपरम् । अत्र निर्देशस्यैव युक्ततरत्वमिति भाष्यादौ विस्तरः । नानुवर्तत इति । तथा सति न तिसृचतसृ इति निषेधो व्यर्थः स्यादृकारस्यानणत्वेन प्राप्त्यभावादित्यर्थः ।।

**नामि ।। ६।४।३ ।।**

कथं तर्हि 'नदीनां च नखीनां च शृङ्गिणां शस्त्रपाणिनाम् । विश्वासो नैव कर्तव्यः', अत्र नखिशब्दस्येन्नन्तत्वान्नुटोऽभावात् । आगतनुट्कस्यामो ग्रहणाद्दीर्घः[1] । तथा 'शस्त्रपाणिनाम्' इत्यत्र कथमदीर्घः ? उच्यते । नखशब्दान्नखेनातिक्रामतीत्यस्मिन्नर्थे 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिजन्ताद् 'अच इः' इति इप्रत्ययान्तोऽयं

---

१. 'ग्रहणाददीर्घः' इति मुद्रितम् ।

नखिशब्दः । तथा अत्यर्थं शस्त्रेण पणते व्यवहरति 'बहुलमाभीक्ष्ण्ये' (३।२।८१) इति णिनिप्रत्ययान्तोऽयं शस्त्रपाणिशब्दः । 'सुप्यजातौ' (३।२।७८) इति कश्चित् ।। कथं 'दरिद्राजागृदीधीनां ये चैकस्वर-धातवः' इति, ह्रस्वान्ताभावात् नुटोऽभावात् ? उच्यते । 'इक्श्तिपौ धातुनिर्देशे' इति इकि 'यीवर्णयोर्दीधीवेव्योः' (७।४।५३) इति ईकार-लोपे ह्रस्वान्तान्नुट् ।।

ग्रहणाद्दीर्घ इत्यत्र दीर्घं इत्यस्य 'कथं तर्हि' इत्यनेन सम्बन्धः । तथा = आगतनुट्कस्यामो ग्रहणे सति । कथमदीर्घ इति । शस्त्रपाणिशब्दस्येकारान्त-त्वेन निमित्तभावादित्यर्थः । नखिशब्द इकारान्तः शस्त्रपाणिन्शब्दश्चात्र प्रकृतिरिति पूर्वत्र निमित्तसद्भावदपरत्र च तदभावदीर्घत्वाऽदीर्घत्वे इत्युत्तरम् । सरस्वतीकण्ठाभरणे तु नखिनामित्येवोक्तम्, पदक्रमे भेदश्च तत्र दृश्यते ।।

**सर्वनामस्थाने चासम्बुद्धौ ।। ६।४।८ ।।**

कथं 'गुप्तिज्किद्भ्यः सन्' (३।१।५) इति ? उच्यते । अत एव निर्देशाल्लक्ष्यपरतन्त्रत्वाद्वा शास्त्रस्य । सन्देहप्रसक्तेश्च नात्र दीर्घलोपौ ।।

'सन्' इत्यस्य प्रथमैकवचनतयोपधादीर्घो नलोपश्च कथं नेति प्रश्नः ।।

**अत्वसन्तस्य चाधातोः ।। ६।४।१४ ।।**

कथं गोमन्तमिच्छतीति क्यचि क्विपि 'क्यस्य विभाषा' (६।४।५०) इति यलोपे 'गोमान्' इति दीर्घः ? उच्यते । आनन्तर्यादसन्तस्यै-वाधातोरिति प्रतिषेधः । 'चकाराद्वा धातोरपि' इति 'उगिदचाम्' (७।१।७०) इत्यत्र न्यासः ।।

गोमानिति । क्यजन्तस्य नः क्ये इति नियमात्पदत्वाभावेन जश्त्वाभावे गोमत्यशब्दः । तस्य सनाद्यन्तत्वाद् धातुत्वेन ततः कर्त्तरि क्विप् । यलोपे अतो-लोपे च गोमत् शब्दः क्विबन्तो धातुरेव, 'क्विबन्ता धातुत्वं न जहति' इति हेतोः प्रश्नः । उत्तरं च प्रकृतसूत्रे उगिदचामिति सूत्रे च न्यासोक्तम् ।।

**असिद्धवदत्राभात् ।। ६।४।२२ ।।**

**अनिदितां हल उपधायाः क्ङिति ।। ६।४।२४ ।।**

कथं 'राजा प्रकृतिरञ्जनाद्' इति रघुः, 'रजकरजनरजस्सूपसङ्ख्य-

चानम्' इति वचनात् ? उच्यते। रजस्साहचर्यादौणादिकस्य तत्र ग्रहणम्। ल्युटि तु रञ्जनमित्येव भविष्यति ॥

औणादिकस्येति। 'भूरञ्जिभ्यां[1] कित्' (उ० सु० ४।२१७) इत्यसुन्प्रत्ययान्तस्य रजःशब्दस्य ग्रहणादौणादिकक्युन्प्रत्ययान्तस्यैव रजनशब्दस्योपसंख्यानमित्यर्थः। रञ्जनमित्येवेति। तथा च 'रजनमिति ल्युट्' इति न्यासश्चिन्त्यः॥

**घञि च भावकरणयोः ॥ ६।४।२७ ॥**

कथं 'रङ्गरचनात्' ? उच्यते। 'रञ्जेश्च' (६।४।२६) इत्यत्र 'दंशसञ्जस्वञ्जां शपि' (६।४।२५) इत्यनुवृत्तेर्भौवादिकस्य ग्रहणम्, तस्यैवानुवृत्तेः। दैवादिकस्य रङ्ग इति रक्षितः ॥

ग्रहणम् इति दंशष्वञ्जसाहचर्यादुक्तम्। रक्षित इति। अधिकरणे तु घञि भौवादिकादपि रङ्गशब्दो भवत्येवेति माधवादयः ॥

**शास इदङ्हलोः ॥ ६।४।३४ ॥**

कथं 'शास्यैरर्थिनिभैर्दुष्टैः' इति (भट्टिः?) तथा 'अनाशास्यजयो ययौ' इति रघुः, 'एतिस्तुशास्वृदृजुषः' (३।१।१०९) इति क्यपि अनेनेत्वप्राप्तेः ? उच्यते। शासनं शासः। ततः 'तत्करोति' इति णिचि यत्। 'शसु हिंसायाम्' इत्यतो 'हन्त्यर्थाश्च' इति चुरादिपाठाण्णिचि यदिति धातुप्रदीपटीका॥ कथं 'शास्तिः' इति, इत्वप्राप्तेः शिष्टिरिति प्राप्नोति ? उच्यते। 'शसु हिंसायाम्'। 'हन्त्यर्थाश्च' इति णिचि 'क्तिन्नाबादिभ्यः' इति। प्रशस्तिरिति तु 'शंसु स्तुतौ' इत्यतः। 'प्रशंसा' इति 'प्रशंसावचनैः' (२।१।६६) इति निर्देशात् ॥

तत्करोतीति। हेतुमण्णिच्यपि शक्यते व्युत्पादयितुमिति माधवः। टीकेति। आत्रेयस्याप्येतदेव मतम्। शास्तिरिति। अत्राप्यात्रेयमतेन समाधत्ते—'शसु' इत्यादिना। अत्र युचा न क्तिनो बाधा, बाहुलकादिति अचः परस्मिन्-सूत्रभाष्ये ध्वनितम्। औणादिकोऽयं शास्तिः 'वसेस्तिः' (उ० सू० ४।६१९) इत्यत्र तिरिति-योगविभागादिति मैत्रेयः ॥

---

१. अयमेव पाठः सायणीयधातुवृत्तौ पदमञ्जरीसम्मतोऽपि। वर्त्तमानस्तु 'भूरञ्जिभ्यां किच्च' इति तत्र। भाष्ये प्रकृतवार्त्तिकव्याख्यायां 'कित एवैते औणादिकाः। तद् यथा—रुचकः, भुवनम्, शिर इति' इति दर्शनात् 'भूरञ्जिभ्याम्' इति यथामुद्रितपाठ एव भाष्यसम्मतः प्रतीयते।

**अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक-
लोपो झलि क्ङिति ।। ६।४।३७ ।।**

कथं 'नितान्तदीर्घैर्जनिता तपोभिः' इति कुमारः, नलोपप्राप्तेः ? उच्यते । तनोतेराधृषीयस्य णिचि रूपम् ।। कथं 'हन्वः' इति ? उच्यते । वसो दन्त्योष्ठ्यवकारत्वेन झल्परत्वाभावान्न ।।

तनोतेरिति । तनु श्रद्धोपकरणयोरित्यतः । अयं चोपसर्गयोगाद् दैर्घ्ये वर्त्तत इति दैवे धातुवृत्तौ च । स्वाम्यादयस्तु दैवादिकात् तमु कांक्षायामित्यतो मन्यन्ते । अनुनासिकस्येति दीर्घः । न्यासकारोप्येवमेवाह ।।

**वा ल्यपि ।। ६।४।३८ ।।**

कथं 'चतुर्दिगीशानवमन्य मानिनी' इति कुमारः, व्यवस्थित-विभाषया नकारस्य नित्यलोप इति वृत्तिः ? उच्यते । 'मन स्तम्भे' इत्यस्यानित्यण्यन्तारश्चुरादय इति उदात्तोपदेशस्य रूपम् । अवमत्येति वा पाठ इति रक्षितः ।।

मन स्तम्भ इत्यादिसमाधानं पुरुषोत्तमीयभाषावृत्तौ । अवमत्येति । नलोपे तुकि रूपम् ।।

**भ्रस्जो रोपधयो रमन्यतरस्याम् ।। ६।४।४७ ।।**

कथं 'भृष्टं लिखितम्' इति ? उच्यते । व्यवस्थितविभाषया सम्प्रसारणविषये रम् नास्तीत्येकः । सम्प्रसारणस्य बलीयस्त्वादिति भाषावृत्तिः । पूर्वविप्रतिषेधात् सम्प्रसारणे सकृद्गतिन्यायादिति वामनः ।।

बलीयस्त्वादिति । एतञ्च 'न वा सम्प्रसारणबलीयस्त्वाद्, अन्यत्रापि' इत्यादिना लिट्यभ्यासस्योभयेषामित्यत्र भाष्ये स्पष्टम् । पूर्वविप्रषेधादिति वार्त्तिकमतम् । नित्यत्वाद्वा कृताऽकृतप्रसंगित्वेनेत्यपि व्याख्यान्तरं भाष्ये । नच वर्णैकदेशस्य वर्ण-ग्रहणेन ग्रहणमादाय सम्प्रसारणात्परमपि रमागमः कथं नेत्यस्य समाधानम्--सकृ-द्गतिन्यायादिति । भाष्ये त्वन्ते उपदेशग्रहणाद्धारितो रम् सम्प्रसारणे कृते ।।

**णेरनिटि ।। ६।४।५१ ।।**

कथं 'गणेयं सङ्ख्येयम्' इत्यमरः, णिलोपप्राप्तेः ? उच्यते । 'क्यस्य विभाषा' ( ६।४।५० ) इत्यनुवृत्तेर्व्यवस्थितविभाषात्वादिति ।

'चिन्तिपूजिकथि' ( ३।३।१०५ ) इत्यादिना अकारे विधातव्ये अङो विधानाद् अस्य लोपस्य[1] अनित्यत्वाद्वा । एवञ्च चिन्तिया पूजिया इति । 'गण्या कपर्दिका' इति गणयतेर्णिलापे यति ॥

गणेयमित्यत्र प्रश्नः । चुरादिणिजन्ताद्गण्धातोर्यति रूपम् । पुरुषोत्तमसम्मतं समाधानम्—व्यवस्थितेत्यादि । मैत्रेयसम्मतं समाधानम्—चिन्तीत्यादि । अकार इति । तथा च गुरोश्च हल इत्यस्यानन्तरमेवेदं पठितव्यं स्यात् । अस्य लोपस्य = णिलोपस्य । अनित्यत्वादिति । अप्रत्ययमुपेक्ष्याङ्विधानं गुणाभावार्थम्, तत्सामर्थ्याण्णिलोपोऽनित्यः । तथा च गुणणिलोपयोरभावे इयङि चिन्तियेत्यादि भवति । णिलोपपक्षे यत्युदाहरति—गण्येति । चिन्त्योयं प्रयोग इति सर्वानन्दः ॥

## घुमास्थागापाजहातिसां हलि ॥ ६।४।६६ ॥

कथं 'शंस्थाः[2]', 'स्थः क च' ( ३।२।७७ ) इति क्विपि ईत्त्वप्राप्तेः ? उच्यते । 'स्थे च भाषायाम्' ( ६।३।२० ) इत्यत्र चेष्टाव्यावृत्तये गापाग्रहणादीत्वाभावोऽनुमीयत इति रक्षितः (?) । क्विपि ईत्वप्रतिषेध इति तु भाष्यम् ॥

शंस्था इति । अत्र संस्था इति मुद्रितः पाठो भाष्यादिविरुद्धत्वादस्माभिरुपेक्षितः । अत्र रक्षितग्रन्थाशयस्तु न स्पष्टः । क्विपीत्यादि । ईत्वे वकारप्रतिषेध इत्यादिवार्त्तिकार्थंकथनपरमीत्वमवकारादाविति कैयटपुरुषोत्तमादिग्रन्थेषु प्रसिद्धम् । अन्ते च वार्त्तिकस्य भाष्ये प्रत्याख्यानाद् भाष्यकारप्रयोगादेव शंस्था इत्यादावीत्वाभावः । ध्यायतेः सम्प्रसारणमित्यत्र धीर्ध्यायतेर्वा दधातेर्वेति भाष्योक्तेः क्विपीत्वं भवत्येवेति शंस्था इत्यादि विजन्तमेवेत्यपि केचित् ॥

## न ल्यपि ॥ ६।४।६९ ॥

कथं 'आपीय प्रातरेव' इति मयूरः, पिबतेरनेनेत्त्वनिषेधात् ? उच्यते । 'पीङ् पाने' इत्यस्य रूपम् । 'तेनोद्गीय खलेन' इति तु चिन्त्यमिति भाषावृत्तिः । चिन्ता च—'मयतेरिदन्यतरस्याम्' (६।४।७० ) इत्यतोऽन्यतरस्याङ्ग्रहणस्य सिंहावलोकनन्यायादनुवृत्तेः ॥

---

१. 'अल्लोपस्य' इति मुद्रितम् ।

२. 'संस्थाः' इति मुद्रितम् ।

**न माङ्योगे ।। ६।४।७४ ।।**

कथं 'मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः' । तथा 'मा बालिपथमन्वगाः' इति, माङि । माशब्दे तु 'माङि लुङ्' ( ३।३।१७५ ) इति कालसामान्ये लुङ्[1] न स्यात् ? उच्यते । 'आशंसायां भूतवच्च' ( ३।३।१३२ ) इत्यतिदेशाल्लुङ् । यद्वा त्वमगम इत्यत्र तुशब्दः पुनरर्थे । माशब्दस्य लक्ष्मीवाचिनो नञा बहुव्रीहौ 'गोस्त्रियोरुपसर्जनस्य' ( १।२।४८ ) इति ह्रस्वे 'हे[अम]अलक्ष्मीक ! पुनः प्रतिष्ठां न गच्छेरित्यर्थः । वाल्मीकेः स्वतन्त्रत्वाद्वा । 'ते हि भगवन्तो वाग्विषये स्वतन्त्राः' इत्यनुन्यासः । अन्वगा इत्यत्र अन्वेति सम्बोधनमिति स एव ।।

माङिति । तथा चाडागमोऽप्युक्तः । न स्यादिति । आत्रेयस्त्वाह—प्रकृतसूत्रे माङो निर्देशादङित्यपि माशब्दे सार्वकालिको लुङनुमीयते । ततश्चाडागमोपीति । खण्डितं चैतदिग्धातौ माधवेन । अथ भाषावृत्त्यादौ यदुक्तं चिन्त्यमिति तदेव चिन्त्यते—आशंसायामित्यादिना ।।

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ।। ६।४।७७ ।।**

कथं 'क्रयादिः' ? अङ्गनिमित्ते अजादिप्रत्यये इयङ्विधानाद् ।। ( कथं दुर्धिय इति ) ? उच्यते । अनिर्दिश्यमानस्यापि समासाभ्युपगमात् । एवञ्च श्रवणे धीरस्येति श्रवणधियेति भाषावृत्तिः । तथा 'मन्दधियां सुखप्रतिपत्तये' इति । 'व्रजन्ति ते मूढधियः पराभवम्' इति ।। वातप्रमीशब्दस्य नास्ति यण् । वातवत् प्रमीयते इत्युणादौ माधातोरीप्रत्ययान्तोऽयम् । 'वातप्रमीः' इति सूत्रे निपातितत्वाद् अधातुत्वात् । 'वातप्रमीर्वातमृगः' इत्यमरे साहचर्यात् पुंस्त्वम्, अस्यामिपूर्वत्वे वातप्रमीम् । शसि दीर्घत्वे च वातप्रमीन् । ङौ सवर्णदीर्घत्वे वातप्रमीति सिद्धं पदम् । 'योषिति वातप्रमीः समीरमृगः' इति बलात्[2] स्त्रीत्वे तु कृदिकारात् ङीष् । सौ वातप्रमीः । शसि

१, 'लुङ्स्यात्' इति मुद्रितम् ।

२. ( वात् ) इति मुद्रितः पाठः ।

जसि वातप्रम्यः' इति[1]। ङौ 'ङेराम्' ( ७।३।११६ ) इत्यामि वातप्रम्यामिति। 'द्विचतुष्षट्पदोरगाः[2]' इति लिङ्गकारिका। ततश्च द्विलिङ्गतास्य ॥

दुर्धिय इति। एरनेकाच इति सूत्रे 'गतिकारकपूर्वस्यैवेष्यते' इति भाष्येष्टिः। सपूर्वपदस्य चेद् गतिकारकपूर्वस्यैव यण्, नान्यपूर्वस्येति नियमः। तथा च दुर्ध्यायतीति दुर्धीस्तस्य दुर्धिय इत्यत्र गतिपूर्वकत्वेन यण् कथं नेति प्रश्नः। उत्तरवाक्यं यथामुद्रितं त्वयुक्तं प्रतीयते। अतः 'अत्र निर्दिश्यमानस्य नित्यसमासस्याभ्युपगमात्' इति रूपेण संशोध्यः। उक्तेष्टौ 'गति' इति प्रदिपदोक्तत्वेन यत्र नित्यसमासो गतेः कारकस्य वोत्तरपदेन तत्रैव यण् नान्यत्र। प्रकृते च दुःस्थिता धीर्यस्येति विग्रहे प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोप इति वार्त्तिकेन समासो दुरित्यस्य गतित्वाभावश्चेति न यण् इति तात्पर्यम्। यद्वा समस्ते शब्दस्वरूपे लोपादनिर्दिश्यमानस्यापि स्थितशब्दस्य समासघटकत्वाभ्युपगमादत्र न दुरित्यस्य गतित्वमिति रीत्या यथास्थितो ग्रन्थोऽपि योजयितुं शक्यते। भाषावृत्तिरेरनेकाच इति सूत्रस्य। निपातितत्वादिति। अस्य च प्रत्ययस्य कित्त्वादातो लोपे उपपदसमासे वातप्रमीरिति। अजादौ चास्य दीर्घाज्जसि चेति पूर्वसवर्णदीर्घनिषेधाद् यण्। सवर्णदीर्घत्वे। यणः परत्वादित्यादिः। योषिति पुनर्वातं प्रमीयत इत्यत्रन्येभ्योऽपि दृश्यते इति क्विपि घुमास्थेति चेत्त्वे वातप्रमीशब्दः स्त्रीलिङ्गः। उणादिवृत्तौ मिञ् प्रक्षेपणे इत्यतो व्युत्पादितः. मीञ् हिंसायाम् इत्यतोऽपि केषाञ्चिन्मते। अस्य क्विबन्तत्वेऽपि धातुत्वानपायात् सवर्णदीर्घात् परत्वाद् एरनेकाच इति यणि जसि शशि च वातप्रम्यः, अमि वातप्रम्यम्, ङौ च वातप्रम्यामिति रूपाणि ॥

## मितां ह्रस्वः ॥ ६।४।९२ ॥

कथं 'नियमयति', 'संयमयति', यमोऽपरिवेषणे इति मित्त्वनिषेधात् ? उच्यते। 'यमस्समुपनिविषु च' ( ३।३।६३ ) इत्यप्प्रत्ययान्तान्नियमसंयमशब्दात् 'तत्करोति' इति णिचि रूपमिति धातुप्रदीपः ॥ कथं 'संक्रामयति' 'उपक्रामयति', इत्यादि ? उच्यते। 'वा चित्तविरागे' ( ६।४।९१ ) इति वाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वात् संक्रामयतीत्यादिसिद्धिरिति भाषावृत्तिः। एवञ्च 'स तैराक्रमयामास'

---

१. 'वातप्रमीरिति' मुद्रितमशुद्धम्।
२. 'घिवत् पे दोसाः' इति मुद्रितः पाठोऽशुद्धः।

इति, 'अथ यन्तारमादिश्य धुर्यान् विश्रामयेति सः' इति रघुः, 'निशामय तदुत्पत्तिम्' इति चण्डी। 'शम लक्ष आलोचने' इति चौरादिकाल्लोटि। ज्ञापयितुं बोधयितुमिष्यमाणो ज्ञीप्स्यमान इति 'श्लाघह्नुङ्' (१।४।३४) इत्यत्र वृत्तिः। 'मारणतोषणनिशामनेषु ज्ञा' इति घटादौ पठ्यते। निशामनं चक्षुस्साधनम्। निशामनं ज्ञानमात्रमिति 'श्लाघह्नुङ्' इत्यत्र न्यासरक्षितौ। कथं तर्हि 'ज्ञापयतीति ज्ञापकं ज्ञापनम्' इति? उच्यते। व्यवस्थितविभाषात्वादेव॥ कथं 'कमलवनोद्घाटनं कुर्वते ये' इति मयूरः, तथा 'उद्घाटयति' इति? उच्यते। 'घट सङ्घाते' इत्यस्य चौरादिकस्यामित्वात्॥ कथं 'चालयन् सकलां पृथ्वीम्' इति, 'कम्पने चलिः' इति घटादित्वात्? उच्यते। उच्चाटनेऽत्र चलिरिति, व्यवस्थितविभाषात्वादेव वा। चलयन्निति (वा) पाठः। एवं 'चालयन् सर्वगात्राणि' इति॥

ज्ञापयितुमिनि। सम्प्रति ज्ञापयितुमित्येव पाठः। अत्रत्यो विचारो न्यासपदमञ्जर्यादिषु द्रष्टव्यः॥

## हुझल्भ्यो हेर्धिः॥ ६।४।१०१॥

कथं 'रुदिहि', धिभावप्रसङ्गात्? उच्यते। निर्दिश्यमानस्यादेशा भवन्तीति। इह तु अन्तरङ्गत्वादिटा व्यवधानात्। 'भिन्धकि' इत्यत्र परत्वाद्धिभावः॥

रुदिहीति। धिभावात्परत्वादिडागमे पुनः प्रसङ्गविज्ञानाद्धित्वप्रसङ्ग इति प्रश्नः। व्यवधानादिति। तथा च झल्परस्य हेर्निर्दिश्यमानस्याऽभावान्न धिरिति भावः। धिभाव इति। ततश्चाकज् भविष्यति। यद्वा हकारमात्रस्य स्थानित्वेन धकारमात्रस्य चादेशत्वेन पूर्वत्र समुदायभक्तेनेटा व्यवधानादुत्तरत्र च तदभावादादेशाऽभावभावौ व्याख्येयौ। सूत्रे इकारोच्चारणन्तु उच्चारणार्थम्॥

## श्नसोरल्लोपः॥ ६।४।१११॥

कथं 'निरस्यति'? 'निरनुबन्धकपरिभाषया अस्तेर्ग्रहणात्। (यत्तु? यैस्तु) प्रत्ययविधिविषयेयमित्युच्यते तेषां विकृतनिर्देशाल्लिङ्गान्नास्यतिग्रहणम्। यत्तु रक्षितेनोक्तम्—विकृतनिर्देश उत्तरसूत्रे निर्देशभेदार्थं इति, तत्तु मन्दधियां सुखप्रतिपत्तये॥

प्रत्ययविधिविषयमिति दिव औत्सूत्रभाष्यविरुद्धम्। विकृतनिर्देश इति। विकरणविशिष्टस्य निर्देश इत्यर्थः।

**न शसददवादिगुणानाम् ॥ ६।४।१२६ ॥**

कथं 'वेमुश्च केचिद्रुधिरम्' इति चण्डी, दन्तौष्ठ्यवकारत्वात्। अत्र हि 'ववमुः' इति भट्टिप्रयोगाद् दन्तौष्ठ्यवादिग्रहणमिति रक्षितः। 'ववलिरे वलिरेचितमध्यमाः' इति दन्तौष्ठ्यवादिग्रहणादिति वर्णदेशिनाम्? उच्यते। 'अत एकहल्मध्ये' ( ६।४।१२० ) इत्यत्रानादेशशसददवादिगुणानामिति कर्त्तव्ये योगविभागादस्याऽनित्यत्वमिति केचित् ॥

अनित्यत्वादिति। एतच्च भागवृत्तिमतम्। भाष्यादावदृष्टत्वाद्वेमुरिति छान्दस एवेत्यपरे ॥

**अर्वणस्त्रसावनञः ॥ ६।४।१२७ ॥**

कथं 'श्लथीकृतप्रग्रहमर्वतां व्रजाः' इति माघः, 'मघवद्वज्रलज्जानिदानम्' इति, 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्' इति भाष्यात्? उच्यते। छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्त इति। बहुलवचनाद्वा भाषायाम् ॥

छान्दसं हीति। केचित्तु वार्तिकस्यास्य वनिबन्तमध्योदात्तपरत्वेन बाहुलकाद् औणादिककनिन्प्रत्ययान्तरस्य अर्वन्शब्दस्य भाषायामपि प्रयोगमाहुः। सामान्येन निषेधादयुक्तः प्रयोग इति शब्दरत्नादौ ॥

**पादः पत् ॥ ६।४।१३० ॥**

कथं 'पादे लुठति', एकादेशस्य परं प्रत्यादिवद्भावात्? उच्यते। 'स्थानिवद्भावो भवति विप्रतिषेधेन' इति स्थानिवत्त्वात् ॥

स्थानिवत्त्वादिति। यद्वाऽत्र लोपाभावादेवाकारस्य न पदादेशः ॥

**आतो धातोः ६।४।१४० ॥**

कथं 'क्त्वो ल्यप्', अधातुत्वात्? उच्यते। निपातनाद्, योगविभागाद् वा, एकदेशानुकरणाद्वा, 'आतोऽनापः' इति भाष्याद्वा ॥

भाष्याद्वेति। भाष्ये योगविभागोऽन्ते प्रदर्शितः ॥

## टेः ।। ६।४।१५५ ।।

कथम् 'आशिषयति', आशीश्शब्दे णिचि णाविष्ठवदित्यतिदेशाद् अनेन टिलोपात् ? उच्यते । 'सङ्ग्राम युद्धे' इति सङ्ग्रामयतेरेव सोपसर्गादिति नियमात् केवलादपि 'प्रकृत्यैकाज्' (६।३।१६३) इतीह प्रकृतिभावात् । णिचो व्युत्पत्तिमात्रार्थत्वात् समुदायादाशीःप्रतीतिः । 'प्रातिपदिकाद्धात्वर्थे बहुलम्' इति बहुलवचनाद्वा ।।[1]

सोपसर्गादिति । प्रत्यय इति शेषः । केवलादपि शाश्धातोः क्विप् चेति क्विपि 'आङश्शासः क्वौ' इति वार्तिकाद् ( ६।४।३४ ) इत्वे शीश् शब्दः । उपसर्गयोगेनाशिश् इति ॥

## नस्तद्धिते ।। ६।४।१४४ ।।

कथं ( जनकीयतीति ? उच्यते । अपूर्वस्य भत्वाङ्गत्वाभावप्रसङ्गात् । तदभावस्तु साक्षाज्जातेरविधानात् तिङन्ते प्रादय इति एधते इति क्विपि त 'आरातीयः पथि वीथिवीरवीतः वीथिको विधिः को निषेधः ? ) इति । तथा 'येषां शाश्वतिको विरोधः', 'अव्ययानां भमात्रे टिलोपः' इति वचनात् ? उच्यते । 'दित्यदित्यादित्य' (४।१। ८५) इत्यत्र 'बहिषष्टिलोपश्च' इति वार्त्तिके बहिर्ग्रहणात् तस्यानित्यत्वादिति तत्रैव वृत्तिः ।।

अत्र अरातीय इत्यतः पूर्वंग्रन्थो भ्रष्टः । अरातीय इत्यत्रापि टिलोपः 'अव्ययानां भमात्रे टिलोपः' इति प्राप्तः । ततः परम् 'पथि' इत्यारभ्य 'निषेधः' इत्यन्तो ग्रन्थोऽपि भ्रष्टः । अत्र 'निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः' इति शुद्धं रूपं प्रतीयते । तत्र यद्यपि 'पथि' इति न प्रकृतसूत्रस्य नवाऽस्य वार्त्तिकस्य विषयस्तथापि यद्यरातीय इत्यत्र टिलोपाभावस्तर्हि पथीत्यत्र कथं नेति प्रतिप्रश्नः स्यात् ? उत्तरे तु प्रकृतवार्त्तिकमात्रस्यानित्यत्वेन भस्य टेरित्यस्य तथात्वाभावाट्टिलोपो भवत्येवेति ध्वन्यते । अनित्यत्वादिति । मुखपार्श्वतसोर्लोपश्चेति लोपविधानादप्यनित्यत्वं ज्ञाप्यते ॥

---

१. अस्य सूत्रस्योपन्यासो यस्येति च (६।४।१५८) इत्यतः पूर्वमुचितम् । 'टेः' (६।४।४३) इति सूत्रं यद्यपि वर्त्तते तथापि तन्नोपयोगि प्रकृते । यथापूर्वमुद्रितं तु स्थापितम् ।

## ओर्गुणः ।। ६।४।१४६ ।।

कथं 'धाम स्वायम्भुवं ययुः' इति कुमारः ? उच्यते । 'संज्ञापूर्वको विधिरनित्यः' इति ।। कथं 'भूयान् भूम्नि' इति, इकारलोपस्य स्थानिवद्भावाद् गुणप्राप्तेः ? उच्यते । दीर्घादेशसामर्थ्यान्न गुणः । 'बहोर्नञ्वदुत्तरपदभूम्नि' (६।२।१७५) इति निर्देशाद्वा ।। कथं 'पट्वी' ? उच्यते । 'नस्तद्धिते' (६।४।१४४) इति तद्धितग्रहणानुवृत्तेः ।।

स्वायम्भुवमित्यत्र संज्ञापूर्वकानित्यत्वानभ्युपगमे आर्षत्वं शरणम् । अन्यत्र प्रमाद एव ।।

## यस्येति च ।। ६।४।१५८ ।।

कथम् 'उपाध्यायी', यावता 'इङश्च' (३।३।२१) इत्यत्रोक्तम्—'अपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा ङीष्' इति ङीषि ङीषो बहुलपादीयस्य स्वादित्वबाधाद् भत्वाभावः ? उच्यते । 'वा च ङीष्' इति 'स्त्रियाम्' इति प्रकरणे द्रष्टव्यम्, इह तु प्रसङ्गेनोक्तमिति रक्षितः ।। कथं 'मत्वर्थीयम्' इति, 'रोगाख्यायां ण्वुल् बहुलम्' (३।३।१०८) इत्यत्र 'मत्वर्थाच्छः' इति वार्तिकेन च्छप्रत्ययविधानाद् भत्वाभावात् ? उच्यते । बहुलवचनादेव ।। कथं 'वृक्षे' इति, ङौ अनेन लोपात् ? उच्यते । 'श्यां प्रतिषेधः' इति वचनाद् दीर्घस्य ग्रहणात् । ह्रस्वे हि तपरकरणाद् दीर्घस्य प्राप्तिरेव नास्तीत्यनर्थकः प्रतिषेधः स्यात् । तस्मात् दीर्घस्यैव ग्रहणम् । तपरकरणं तदा मुखसुखार्थमिति रक्षितः ।।

इति शरणदेवविरचितदुर्घटवृत्तौ षष्ठाध्याये चतुर्थः पादः ।।

स्वादित्वबाधादिति । ततः पूर्वमेव विधानादित्यादिः । भत्वाभाव इति । तथा च कथं लोप इति प्रश्नः । श्यामित्यादिवार्त्तिकं प्रकृतसूत्रे । ग्रहणमिति । तथा च दीर्घ एवेकारे यस्येति लोपे न दोषः ।।

इति श्रीनारायणमिश्रविरचितायां दुर्घटवृत्तिविवृतौ षष्ठाध्यायस्य चतुर्थः पादः ।।

इति षष्ठाध्यायः ।।

## अथ सप्तमाध्याये प्रथमः पादः ।।

### युवोरनाकौ ।। ७।१।१ ।।

### अतो भिस ऐस् ।। ७।१।९ ।।

कथं 'मान्यचरेभिर्गन्धवरेभिः' इति बौद्धप्रयोगः ? बहुलग्रहणमिहाभिसम्बध्यते । तेन क्वचिदैस्त्वं न भविष्यति ।।

बहुलग्रहणम् इति । बहुलं छन्दसि (७।१।८) इत्यतः । वस्तुत एवंविधाः प्रयोगा असाधव एव ।।

### टाङसिङसामिनात्स्याः ।। ७।१।१२ ।।

कथम् 'उदधिस्योत्तरे कूले मृतः किमनुशोच्यते' इति वृद्धिः, अत इत्यनुवृत्तेः ? उच्यते । उदधिमिच्छतीति क्यचि 'सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः' इत्यत्र 'सुगित्येके' इति सुगागमे 'अ प्रत्ययात्' ( ३।३।१०२ ) इत्यकारे उदधिस्येति स्यात् । उदधिभावात् । चार्वी बुद्धिस्तत्सम्बन्धादाचार्योऽपि चार्वीतिवत्, अचि ( रा ? वा ) उदधिस्या(वा)नपि पुरुषः स्यादुदधिस्यः । यलोपस्यानित्यत्वादाद्गुणः ।। कथं 'मा मा सखेऽवदन्तस्य सुप्तोऽहं विजने वने' ? उच्यते । अवदन्निति क्रियापदमिदं वदन्ति । अत्र[1] 'नश्छव्यप्रशान्' (८।३।७) इति रुत्वं न भवति, असंहिताश्रयत्वात् ।। कथम् 'अतिजरसस्य भिक्षुस्य कन्था वर्षशत गता' इति कलापवृत्तिः ? उच्यते । असाधुरेवायम् । यद्वा ङसि पूर्वनिपातेन अत इत्यनुवृत्तेरनित्यत्वात् । तेन भिक्षुस्येति । अतिजरं स्यति नाशयति, मूलविभुजादित्वात् कप्रत्ययः, अतिजरसः, तस्य ।। कथं 'दरिद्रस्य' इति ? उच्यते । 'ङ्यापोस्संज्ञाच्छन्दसोर्बहुलम्' (६।३।६३) इति ह्रस्वत्वेनेति तत्र वृत्तिः । सौत्रत्वाद्वा ।।

---

१. 'वा' इति मुद्रितम् ।

कथं 'पुत्रादेकात् पराजयम्' इति। 'ङसिङ्योः'(७।१।१५) इति पूर्वनिपातव्यभिचारादस्यानित्यत्वादिति श्रीकण्ठः। सुदलश्च। 'एकादाकिनिच्चासहाये' (५।३।५२) इत्यत्र कन्लुकौ चानुवर्त्तेते। तत्र महाविभाषया प्रकृतिश्रवणे सिद्धे लुग्विधानं सर्वकार्याभावार्थमिति 'अट्कुपु' (८।४।२) इति सूत्रे रक्षितः। 'शक्नुवन्ति चैकैकशः परस्परसहिताः' इति व्यासेनोक्तसिद्ध्यर्थं 'एकं बहुव्रीहिवत्' (८।१।९) इत्यतिदेशात् 'न बहुव्रीहौ' (१।१।२९) इत्यत्र सर्वनामनिषेधो नात्र द्रष्टव्यः, आतिदेशिके बहुव्रीहौ तस्यानिष्यमाणत्वात्। एतच्च 'आद्यन्तवदेकस्मिन्' (१।१।२१) इति निर्देशात्सर्वादिपाठाच्च ॥

सर्वप्रातिपदिकेत्यादि वार्त्तिकम् अश्वक्षीरसूत्रे। उदधिभावात्ः इच्छाद्वारोदधिसम्धन्धात्। पुंस्त्वोपपत्तये प्रकारान्तरम्—अचीति। मत्वर्थीयश्चायमच्। यलोपस्य = क्यस्य विभाषेति विहितस्य। इतः परमसिद्धत्वादिति प्रमादायातम्। अनित्यत्वात् = वैकल्पिकत्वात्। पूर्वनिपातेनेति। अल्पाच्तरत्वेऽपि ङसो ङसेरेव पूर्वप्रयोगेण, पूर्वनिपातव्यभिचारेणेति यावत्। दरिद्रस्येति। इद्दरिद्रस्य (६।४।११४) इति सूत्र इति शेषः। आतो धातोरित्याकारलोपे दरिद्र इत्यनेन भाव्यमिति प्रश्नः। तत्र = इद्दरिद्रस्येति सूत्रे।

एकादिति। एकस्मादिति युक्तम्। सर्वकार्याभावार्थम् इत्यत्र सर्वनामकार्याभावार्थम् इति युक्ततरम्। शब्दप्रधानत्वाद्वा सर्वनामत्वाभाव इत्यपि बोध्यम्। अनिष्यमाणत्वादिति। सर्वं चैतद् वर्णितं भाष्यवृत्त्यादिषु ॥

### नपुंसकाच्च ॥ ७।१।१९ ॥

कथम् 'अप्रत्याख्येये दधिसुमनसी' इति, परवल्लिङ्गतायां स्त्रीत्वे शीभावाभावात्? उच्यते। असाधुरेवायम्। 'लिङ्गमशिष्यं लोकाश्रयत्वाद्' इति (वा) वाच्यम् ॥

स्त्रीत्व इति। सुमनश्शब्दस्य स्त्रीत्वादित्यादिः। स्त्रीत्वं च 'स्त्रियः सुमनसः' इत्यादिकोशप्रामाण्यात् ॥

### अतोऽम् ॥ ७।१।२४ ॥

कथं 'मकारस्य मकारवचनं मोऽनुस्वारनिवृत्यर्थम्' इति वृत्तिः।

अमोऽम् । वचनं लुङ्निवृत्त्यर्थमिति युज्यते ? उच्यते । अकारसहितो मकारो मकारः । स चामेव । अथवा अकारस्यामिपूर्वत्वेन लुका वा निवृत्तिः । प्रत्ययविशेषात् तत्परित्यज्य मकारस्येत्युक्तम् । अनुस्वारनिवृत्त्यर्थगित्यत्रार्थशब्दो निवृत्तिवचनः अनुस्वारनिवृत्तेर्निवृत्तिरित्यर्थः । लुका ह्यनुस्वारनिवृत्तिः स्यादिति तन्निवृत्तेर्लुकाऽपि निवृत्तिरित्यर्थः । अनुस्वारभाविनि मकारेऽनुस्वारशब्दो वर्तते, यथा सम्प्रसारणभाविनि रेफे सम्प्रसारणशब्द इति 'न सम्प्रसारणे सम्प्रसारणम्' (६।१।३७) इत्यत्र भाष्यम् । यद्वा लुकः प्रकृतत्वाद् 'अनुस्वारनिवृत्त्यर्थम्' इत्यत्र लुको निवृत्तिः स्वशब्दादेव । तन्निवृत्यर्थमित्यर्थः ।।

मकारस्येत्यादिवाक्यं न लभ्यते वृत्तौ । मो राजि० सूत्रे तु लभ्यते । तत्र न प्रश्नावकाशः । प्रकृतसूत्रे त्वथंतोऽसम्बद्धमपि । अथवेत्यादिवाक्यमित्थं पठनीयम्—'अथवा अकारस्यामिपूर्वत्वेन निवृत्तेः प्रत्ययाऽविशेषात् तत्परित्यज्य मकारस्येत्युक्तम्' इति । सत्यसति चाकारे परिनिष्ठितरूपश्रवणे न विशेष इत्यर्थः प्रत्ययाविशेषशब्दस्य । यथामुद्रितपाठे त्वर्थसङ्गत्यर्थं महान् क्लेशः स्यात् । स्वशब्दादेव = निवृत्तिशब्दादेव श्रूयमाणात् ।।

## समासेऽनञ्पूर्वे क्त्वो ल्यप् ।। ७।१।३६ ।।

कथं 'स्वधनं त्यज्य गच्छति' इति ? उच्यते 'वा च्छन्दसि' इति वाच्ये 'क्त्वापि च्छन्दसि' (७।१।३८) इति वचनमसमासेऽपि ल्यबर्थम्, तेन 'अर्च्य देवानागतः' इति 'क्त्वापि च्छन्दसि' इत्यत्र न्यासः । अतश्छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्त इति भाषायामपि सिद्धम् । अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वाद्वा भाषायामसमासे ल्यप् । अन्ये 'धनं सन्त्यज्य गच्छन्ति' इति पठन्ति ।।

## त्रेस्त्रयः ।। ७।१।५३ ।।

कथं 'त्रीणां (मणीमुद्राप्याषु?) गोत्रेषु समागमः' इति (वृद्धिन्दः?), छन्दसि त्रीणामित्येवं भवतीति भाषावृत्तिः ? उच्यते । छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्त इति भाष्यम् ।।

भाषावृत्तौ त्रीणामिति न लभ्यते, काशिकायां पुनर्दृश्यते ।।

## ह्रस्वनद्यापो नुट् ।। ७।१।५४ ।।

कथं 'तनिपतिदरिद्राणाम्' इति ? उच्यते । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' (६।३।६३) इति ह्रस्वत्वे। एतच्च 'इद्दरिद्रस्य' (६।४।११४) इति सिद्धये वृत्तिकृता व्याख्यातम्। यद्वा समाहारैकत्वे ह्रस्वे चैकशेषेण भविष्यति ।।

ह्रस्वे = नपुंसकह्रस्वे । बहुवचनं सङ्गमयति—एकशेषेणेति ।।

## आङो यि ।। ७।१।६५ ।।

कथं 'पुमांस्तत्रानुपालभ्यो देवान्तरित[1]पौरुषः', आङा सहैकादेशस्य परस्प्रत्यादिवद्भावात् नुमो भावात् ? आगमशासनानित्यत्वात् ।।

## उपसर्गात् खल्घञोः ।। ७।१।६७ ।।

कथं 'दुरालभः', दुःखेनालभ्यत इति खलि नुम् स्यात् ? उच्यते । आगमशासनानित्यत्वान्नुमभावः ।। 'निर्लाभा वाणिज्ये' इति प्रादिसमासेन । भावे घञ् । बहुव्रीहिणा वा ।। कथं 'राष्ट्रालम्भः' ? चिन्त्यमिति भाषावृत्तिः ।।

## न सुदुर्भ्यां केवलाभ्याम् ।। ७।१।६८ ।।

कथम् 'अतिसुलभम्', अतिदुर्लभम्' इति ?। उच्यते । प्रादिसमासेन । 'अतेः कर्मप्रवचनीयत्वाद्' इतीह न्यासः ।।

न्यास इति । काशिकादावप्येतल्लभ्यते ।।

## इकोऽचि विभक्तौ ।। ७।१।७३ ।।

कथं 'प्रसूल्वः' (३।१।१४९) इति निर्देशः । द्वन्द्वे एकत्वे ह्रस्वत्वे नुम् स्यात् क्लीवत्वे । 'हलसूकरयोः पुवः' (३।२।१८३) इत्येतद्वदुवङ् स्यात् ? उच्यते । निर्देशादेव । छान्दसत्वान्नोवङ् ।।

दोषान्तरमाह—हलेत्यादिना । निर्देशादिति । आगमशासनाऽनित्यत्वान्न नुमिति न्यासे । छान्दसत्वादिति । छन्दोवत्सूत्राणीति हेतोः ।।

---

१. 'देवतान्तरेभ्योत (?)····' इति मुद्रितम् ।

## श्यपश्यनोर्नित्यम् ।। ७।१।८१ ।।

कथं 'कुर्वन्ती व्यचरत्तदा' इति चण्डी ? आरम्भसामर्थ्यान्नित्ये लब्धे नित्यग्रहणं नित्यमत्रेत्यवधारणार्थम् । तेनान्यत्रानकारान्तात् क्वचिद्विकल्पः । तेन कुर्वती कुर्वन्तीति सिद्धमिति भाष्यम् । उत्तरार्थेऽप्युत्तरत्रैव कृतं स्यात् ।।

अत्र = शप्श्यनोरातः परस्य । अनकारान्तात् = अकारान्तभिन्नाद् । भाष्यमिति । प्रकृतसूत्रभाष्ये तु सान्न्यासिकं नित्यग्रहणमित्युक्त्वाऽस्य निष्प्रयोजनत्वं सूचितम् ।।

## अनङ् सौ ।। ७।१।९३ ।।

कथम् 'अर्जुनस्य सखा कृष्णः कृष्णस्य सखिरर्जुनः' इति भारतम् ? उच्यते । 'नहि व्यासप्रभृतीनधिकृत्याष्टाध्यायी कृता । ते हि भगवन्तो वाग्विषये स्वतन्त्राः' इत्यनुन्यासः । यद्वा सखायं सखित्वं करोतीति णिचि णिलोपे 'अच इः' इति इकारे सखिरिति ।।

सखायमित्येतं भावप्रधानं मत्त्वा विवृणोति—सखित्वमिति ।।

## ऋृत इद्धातोः ।। ७।१।१०० ।।

कथम् 'उद्‌गिरणम्' इति 'इत्त्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन' इति । इत्त्वमपि भवति । एवं 'किरणोस्रमयूखांशु' इति । 'कृपृवृजिमन्दिनिधाञः क्युः' ( उ० सू० २।८१ ) इति वा क्युः ।।

इति शरणदेवविरचितदुर्घटवृत्तौ सप्तमाध्याये प्रथमः पादः ।।

इत्वोत्वाभ्यामिति प्रकृतसूत्रभाष्यवचनम् । इत्वमपि भवतीति न भाष्यादौ दृश्यते ।।

इति दुर्घटवृत्तिविवृतौ सप्तमाध्यायस्य प्रथमः पादः ।।

## अथ द्वितीयः पादः ।।

## सिचि वृद्धिः परस्मैपदेषु ।। ७।२।१ ।।

## एकाच उपदेशेऽनुदात्तात् ।। ७।२।१० ।।

कथं 'प्रवेता', वीभावे कृते स्थानिवत्त्वादुदात्तत्वात् सेट्कत्वाद्-

वयितेति स्यात् ? उच्यते । 'गणस्थमूदन्तम्' इति गणस्थग्रहणं नागणस्थनिवृत्त्यर्थं, किन्तु स्वरूपग्रहणम् । नित्यशब्दान्वाख्याने अस्तेः प्रसङ्गे भवतेः प्रयोग इति । यद्वा 'हनो वध लिङि', 'लुङि च' (२।४।४३) इति बधादेशो यथोदात्तः पठ्यते तथा वीभावोऽपि ।। कथं 'भरितम्', 'लज्जितम्' इति, भृतं, लग्नमिति स्यात् ? उच्यते । भरलज्जाशब्दाभ्यां तारकादित्वादितच् । एवं 'मनीषितुं तु हितम्' इति मनस ईषा मनीषा, तत इतचि मनीषितम् ।।

गणस्थम् = गणपठितं सेडिति विद्यादित्यर्थाभिप्रायेणोत्तरम् । 'वी' इत्यस्य गणपठितत्वाभावान्नेडागम इत्यर्थः । पुनः शङ्कते = गणस्थेत्यादि । निवृत्त्यर्थमित्यतः परमसम्भवादिति शेषः । तथा चेट् प्राप्नोत्येव । समाधत्ते—नित्येति । तथा च प्राजितेति प्रयोक्तव्ये विकल्पेन प्रवेतेत्यपि प्रयोक्तव्यम् इति प्रयोगविपरिणामो वा बुद्धिविपरिणामो वेति नेट् प्रसज्यते । तर्हि शास्त्रविलोपप्रसङ्ग इत्यत आह—यद्वेति । 'तथा वीभावोऽपि' इत्यत्र 'न तथा वीभावोऽपि' इत्युचितम् । तथा चादेशोपदेश एकाच्त्वेऽपि उदात्तत्वाभावेन ( = अनुदात्तत्वेन) नेडागम इति तात्पर्यम् । मनीषेति शकन्ध्वादित्वात्पररूपम् ।।

**श्र्युकः किति ।। ७।२।११ ।।**

कथम् 'उदीर्णरागप्रतिरोधकं जनैः' इति, तथा 'यावत्तावदुदीरितम्' इति ? 'ॠ गतौ' इत्यस्य क्रैयादिकस्योदीर्णमिति । 'ईर गतौ' इत्यस्योदीरितमिति ।। कथं ( 'दैवारुतो वि ? गिलितो रुचकेन' इति, गोर्णं इति हि स्यात् ? उच्यते । गिरतेर्घञर्थे कविधाने इत्वे रपरत्वे च रलयोरेकत्वस्मरणाद् गिल इति निष्पाद्य ततो णिजन्तान्निष्ठायाम् ।।

**श्वीदितो निष्ठायाम् ।। ७।२।१४ ।।**

कथम् 'अत्रार्थे यतितम्' इति, 'यती प्रयत्ने' इत्यस्य यत्तमिति स्यात् ? उच्यते । 'यत निकारोपकारयोः' इत्यस्य णिचोऽनित्यत्वात् ।।

**यस्य विभाषा ।। ७।२।१५ ।।**

कथम् 'आखेटके तया नीतः (शुद्धा तु ?) धा(वि)तः पटः' इति 'सेऽसिचि' (७।२।५७) इत्यादिना नृतेर्विकल्पे 'यस्य विभाषा' इति

निषेधे सिद्धे नृतिधातोरीत्वेनास्यानित्यत्वज्ञापपात् । (न च लक्षण-स्थिता गतावेव ?) एवं 'पतितः' इत्यपि । 'द्वितीया श्रितातीतपतित' (२।१।२४) इति निर्देशाद्वा । एवं 'तनिपतिदरिद्राणाम्' इति विभाषा । 'पत गतौ' इत्यस्य (पातितमिति) रूपम् । 'तनिपति' इत्यादौ नास्य ग्रहणम् अण्यन्तसाहचर्यात् ।।

धावित इत्यत्रेण्निषेधः कथं न, क्त्वाप्रत्यये परे उदितो वेत्यनेनेड्विकल्पादिति प्रश्नः । मैत्रेयानुसारेण समाधत्ते—सेऽसिचीत्यादिना । ईदित्वं हि श्वीदितो निष्ठायामिति निष्ठायामिट्प्रतिषेधार्थम् । यदि प्रकृतसूत्रेण नित्यो निषेधः स्यात्तर्हि ईदित्वं व्यर्थमेवेत्याशयः । न च लक्षणस्थितावगतिरिति पाठ उचितः प्रतीयते । तनिपतीत्यादिवार्त्तिकमुपसङ्ख्यानात्मकं सनीवन्तर्धसूत्रे ।।

## घुषिरविशब्दने ।। ७।२।२३ ।।

कथम् 'उच्चैर्घुष्टं तु घोषणम्' इत्यमरः, अविशब्दन इति निषेधात् ? उच्यते । अलवणेतिवदल्पार्थे नञ्विधानात् ।।

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ।। ७।२।२७ ।।

कथं 'पूर्त्तं खातादिकर्मणि', 'पूरी आप्यायने' इत्यस्य पूर्णमिति निपातनम् ? उच्यते । पॄधातोः 'न ध्याख्यापॄमूर्च्छिमदाम्' (८।२।५७) इति नत्वनिषेधात् ।।

## हृषेर्लोमसु ।। ७।२।२९ ।।

कथं 'हृष्टः पुरुषः' ? 'हृषु अलीके' इत्यस्य लोमस्वनेन विकल्पः । पुरुषादौ 'यस्य विभाषा' (७।२।१५) इति नित्यनिषेधात् ।।

विकल्प इति । उदितो वेति क्त्वाप्रत्यय इड्विकल्पेत यस्य विभाषेति निषेधे प्राप्तेऽनेन विकल्पो लोमसु । अन्यत्र तु इण्निषेध एवेति भावः । तुष्ट्यर्थस्य तु हृषितः पुरुष इत्येव । हर्षित इति तारकादित्वात् ।।

## आर्धधातुकस्येड् वलादेः ।। ७।२।३५ ।।

कथं 'सागरं तर्तुमिच्छति', तरितुम्, तरीतुमिति[1] वा स्यात् ?

---

१. 'ती(र्ण ? र्तु) मिति' इति मुद्रितम् ।

उच्यते । आगमशासनानित्यत्वान्नेट् । तर्त्तुमित्यसाधुरेव ।। कथं 'विश्वस्तः', 'वान्तवृष्टिः' ? आदितश्च' (७।२।१६) इति सकारस्यानुक्तसमुच्चयार्थत्वाद् 'विभाषा भावादिकर्मणोः' (७।२।१७) इति विकल्प इति वृत्तिर्धातुप्रदीपश्च ।।

तरितुमित्यादि । ती(र्णं?र्तुं) मिति मुद्रितं तु नयुक्तम्, इटि वृतोवेति दीर्घात् । अग्रेऽप्येवमेव । विश्वस्त इति । निष्ठायामिटं नेच्छन्ति काशकृत्स्ना इति स्वामिकाश्यपौ । अत्र वृत्तौ निषेध एवोक्तो न विकल्पः । धातुप्रदीपे च विकल्पेनेडुदाहृतः—श्वस्तः, श्वसित इति । तथा चात्र क्रमेणान्वयः । आत्रेयोऽपि विकल्पमाह । वान्त इत्यत्र तु वृत्त्युक्तमेव सर्वसम्मतम् ।।

स्नुक्रमोरनात्मनेपदनिमित्ते ।। ७।२।३६ ।।

क 'चिक्रंसया कृत्रिमपत्रिपङ्क्तेः' इति माघः, क्रमेरनात्मनेपदनिमित्तत्वाद् इट्प्रसङ्गात् ? उच्यते । 'वृत्तिसर्गतायनेषु क्रमः' (१।३।३८) इत्यनुवृत्तेः 'अनुपसर्गाद्वा' (१।३।४३) इति पक्षेऽनुपसर्गे उत्साहेऽर्थे आत्मनेपदनिमित्तत्वात् । नचैवं, यतः 'तेनायं सत्यात्मनेपदे प्रतिषेधो नास्तीति' इति वृत्तिः 'योग्यतामात्रेण नात्मनेपदनिमित्तता' इति न्यासः ? उच्यते । तर्ह्यागमानित्यत्वान्नेट् । ग्रहेर्जिघृक्षयेति पाठ इति भागवृत्तिः । जिघांसयेति वा पाठः । यद्वा आकृत्रिमपत्रिपङ्क्तिमपि चिक्रंसे इत्यर्थः ।।

नचैवमिति । उक्तरूपेणात्मनेपदनिमित्तत्वोपपादनं न युक्तमित्यर्थः । भागवृत्तिरिति । संक्षिप्तसारटीकाया तु जिघत्सयेति भागवृत्तिसम्मतः पाठ उक्तः ।।

जॄव्रश्च्योः क्त्वि ।। ७।२।५५ ।।

कथं 'जॄत्वा', अनेनेट्प्रसङ्गात् ? उच्यते । जॄष्धातोः सानुबन्धकत्वेनाग्रहणादिति न्यासः ।।

जॄत्वेति । जीर्त्वेत्युचितम् । प्रसङ्गादिति । तथा च वृतो वेति दीर्घविकल्पेन जरीत्वा, जरित्वेति भाव्यम् । न्यास इति । आत्रेयस्याप्येतदेव मतम् । मैत्रेयस्तु जॄष्धातोरपि प्रकृते ग्रहणं मत्वा जरीत्वा, जरित्वेत्युदाहृतवान् ।।

उपदेशेऽत्वतः ।। ७।२।६२ ।।

कथं 'पेचिथ' ? उच्यते । 'ऋतो भारद्वाजस्य' (७।२।६३) इति

नियमात् ।। कथं 'तुष्टोथ', 'दुद्रोथ' ? पुरस्तान्निषेधप्रकरणप्रणयनात् प्रतिषेधस्य बलीयस्त्वात् क्र्यादिनियमादिति भाषावृत्तिः ।।

नियमादिति । ऋत एव भारद्वाजस्य नान्येषामनृतामजन्तानामनजन्तानाम् वाऽकारवताम् इति नियमाकारः । विस्तरो न्यासादौ । क्र्यादिनियमादित्यतः परम् नेडिति पूरणीयम् । अधिकं माधवादिग्रन्थेषु द्रष्टव्यम् ।।

**विभाषा गमहनविदविशाम् ।। ७।२।६८ ।।**

कथं 'विदितः समाययौ' इति भारविः, अनेन क्वसौ विकल्पे 'यस्य विभाषा' (७।२।१५) इति निषेधात् ? उच्यते । शब्दपरविप्रतिषेधेन विशिना साहचर्याद् त्रिदेर्लभार्थस्य ग्रहणात् । वेदनं वित्, क्विबन्तात्तारकादित्वादितचि विदित इति तु सुवर्णरेखा ।।

**आने मुक् ।। ७।२।८२ ।।**

कथम् 'अपि शाकं पचानस्य' इति ? उच्यते । आगमानित्यत्वान्न मुगिति न्यासः । 'आतो ङितः' ( ७।२।८१ ) इतीयादेशोऽपि नास्ति, 'आतिदेशिकं कार्यमनित्यम्' इति अनित्यत्वादिति रक्षितः ।।

**त्रिचतुरोः स्त्रियां तिसृचतसृ ।। ७।२।९९ ।।**

कथम् 'एकोऽविस्त्रयो गावः' इति, 'बलीवर्दे च गौः पुमान्' इति अर्धनारीश्वरके दर्शनात् स्त्रीगव्यां तिसृभावात् ? उच्यते । ( पृषक्तेषां निषेधेऽपि शिशुरैन्द्रप्रहरणे पशौ । रश्मौ मूर्खे तु वीरनसि गौः स्त्रीपुरुषयोः ? ) इति विश्वः ।।

विश्व इति । अत्र मुद्रितः पाठो भ्रष्टः । तत्रत्यपाठस्तु—

गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः ।
अर्जुने नेत्रदिग्बाणभूवाग्वारिषु गौर्मता ।। ( २४।१ ) इति ।।

तथा च पुंस्त्वं सुलभमेव । अत्र समस्त एव ग्रन्थः किञ्चिद् व्यत्यस्त इव प्रतीयते ।।

**अदस औ सुलोपश्च ।। ७।२।१०७ ।।**

कथम् 'अमुकः' इति, 'औत्वप्रतिषेधस्साकच्कस्य वा सादुत्वं च' इति औत्वाभावे उत्वे च असुक इति वृत्तौ साधितम् ? उच्यते ।

'जराया जरसन्यतरस्याम्' ( ७।२।१०१ ) इत्यतोऽन्यतरस्यांग्रहणं मण्डूकप्लुतिन्यायेनानुवर्तते । तस्य व्यवस्थितविभाषात्वात् 'तदोस्सः सावनन्त्ययोः' ( ७।२।१०६ ) इति सत्वाभावे 'अदसोऽसेः' ( ८।२।-८० ) इति मत्वोत्वाभ्यां भवितव्यम् ॥

**अचो ञ्णिति ॥ ७।२।११५ ॥**

कथम् 'अतिशायनम्' ? उच्यते । 'अतिशायने तमप्' (५।३।५५) इति निर्देशात् ॥

निर्देशादिति । एतच्च तत्रैव वृत्तौ स्पष्टम् ॥

**अत उपधायाः ॥ ७।२।११६ ॥**

कथं 'वाहनम्' ? उच्यते । 'वाहनमाहिताद्' ( ८।४।८ ) इति निर्देशात् ॥ कथं 'भाण्डे भाराः', 'भडि कल्याणे' इत्यस्य नुमि उपधात्वाभावात् ? 'अण रण भण' इत्यतो 'ञमन्ताड्डः' इति डे बाहुलकाद् वृद्धिः । 'पुच्छभाण्ड' ( ३।१।२० ) इति निपातनाद्वा ॥ कथं 'प्रतिषेधपदम्' इति, घञि वृद्धेः ? उच्यते । 'अनुदात्तं पदमेकवर्जम्' ( ६।१।१५८ ) इति निपातनादिति न्यासः । 'खनो घ च' ( ३।३।-१२५ ) इति घकरणादन्येभ्योऽपि घे पदमिति वा ॥ कथं 'ग्रन्थिमुद्ग्रथयितुं हृदयेशे' इति ? 'ग्रथ दौर्बल्ये' इत्यस्यादन्तस्य चौरादिकस्यानेकार्थत्वात् ॥ कथम् 'अभ्यस्या विद्या', 'समस्या कवेः', ण्यति वृद्धेः ? संज्ञापूर्वकविधेरनित्यत्वाद् बाहुलकाद्वा यत् ॥ कथम् 'उद्यमोपरमौ' ? उच्यते । 'अड उद्यमे' 'यम उपरमे' इति निर्देशात् । 'नोदात्तोपदेशस्य' ( ७।३।३४ ) इति नास्ति, अनुदात्तोपदेशत्वात् ॥

निर्देशादिति । स्पष्टं चैतत्तत्रैव न्यासादौ । भाण्डशब्दो माधवेन भडेर्भामेर्वा डप्रत्ययेन साधितः । भाण्डेति निर्देशेन च दीर्घस्तेनोक्तः । घकरणादिति । प्रत्यये घकारानुबन्धकरणादित्यर्थो न्यासादिमते । माधवप्रभृतयस्तु चकारादित्याहुस्तन्मते घकरणादित्यत्र च-करणात् (=चकाराद्) इति पाठः स्यात् । ग्रथेति । दैवे चौरादिकोऽयं ग्रन्थ बन्धने इति धातुः । माधवादयस्तु ग्रन्थ इति पठन्ति । अस्यैवोपसर्गवशादर्थभेदः शैथिल्यमत्र । दौर्बल्ये स्वयं न पठ्यते कैश्चिदपि । अनेकार्थ-

त्वाद्दौर्बल्ये वृत्तिरिति युक्तम् । अनुदात्तोपदेशत्वादिति । तथा च यद्यर्थनिर्देशो मुनित्रयाऽकृतत्वादप्रामाणिकस्तर्हि वृद्धिरिष्टैवेति पर्यवसितम् ॥

### तद्धितेष्वचामादेः ॥ ७।२।११७ ॥

कथं 'भेषजम्', भिषज(इद)मित्यादिपदवृद्धेः ? उच्यते । 'भेषजात् ञ्यः' ( ५।४।२३ ) इति निर्देशाद्गुणोऽवृद्धिश्च ॥ कथं 'ज्योतिषं शास्त्रम्' इति, 'अधिकृत्य कृते ग्रन्थे' ( ४।३।८७ ) इति अणि वृद्धेः ? उच्यते । संज्ञापूर्वकानित्यत्वादिति सुभूतिः[1] ॥

इति शरणदेवविरचितदुर्घटवृत्तौ सप्तमाध्याये द्वितीयः पादः ॥

भवभूतिरिति मुद्रितम् । अधिकृत्य कृते ग्रन्थे इत्यत्र तु सुभूतिरित्युक्तम् ॥

इति दुर्घटवृत्तिविवृतौ सप्तमाध्यायस्य द्वितीयः पादः ॥

## अथ तृतीयः पादः ॥

### देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥ ७।३।१ ॥

### द्वारादीनां च ॥ ७।३।४ ॥

कथं 'शब्दशक्तिस्वाभाव्याद्' इति, तथा 'स्वाभाविकम्' इति, द्वारादिषु स्वशब्दस्य पाठादैच्प्रसङ्गात् ? उच्यते । 'स्वागतादीनां च' ( ७।३।७ ) इति निषेधात् ॥ कथं 'द्वारिकः' ? स्वरशब्दसाहचर्यादकारान्तस्य द्वारशब्दस्यैजिति दौवारिकः, हलन्तस्य द्वारिक इति ॥

द्वारशब्दस्याकारान्तत्वमपि कोशादिसमर्थितम् । द्वृ वरणे इत्यतो णिजन्तात् पचाद्यचि द्वारमिति रामाश्रमः । न चासौ धातुर्दृश्यते । स्वरेति । स्वरशब्दो द्वारादिषु पठितोऽदन्तः, तत्साहचर्यादित्यर्थः ॥

### हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ ७।३।१९ ॥

कथं 'भावसाध्वसपरिग्रहादभूत् कामसौहृदसुखं मनोहरम्' इति, तथा 'क्षणभिन्नसौहृदः' इति कुमारः, तथा 'सौहृद्यम्' इति, युवादित्वादणि ब्राह्मणादित्वाद्वा ष्यञि अनेनोभयपदवृद्धौ सौहार्दमिति ?

---

१. 'भवभूतिः' इति मुद्रितम् ।

उच्यते । संज्ञापूर्वकस्यानित्यत्वाद् 'हृद्भग' इत्यस्याप्रवृत्तौ आदिवृद्धिरेव । चान्द्रास्तु 'हृद्भग' इत्यत्र प्रतिपदोक्तस्य हृदयपर्यायस्य हृच्छब्दस्य ग्रहणात् 'हृदयस्य हृल्लेख' ( ६।३।५० ) इति हृदादेशस्यादिवृद्धौ साधयन्ति । किन्त्वेतद् 'हृदयस्य हृल्लेख' इत्यादिसूत्रे वृत्तिग्रन्थेन विरुद्धम् । रक्षितस्त्वाह—केचिद् अर्थवत्परिभाषया 'सुहृद्दुर्हृदौ मित्राऽमित्रयोः' (५।४।१५०) इति निपातितस्य सुहृच्छब्दस्य योऽवयवो हृच्छब्दस्तदन्तस्योत्तरपदस्य वृद्धिर्न भवतीति व्याचक्षते । समुदायस्तत्र मित्रवचनोऽत्रयवस्तु निरर्थकः' इति ॥

## अनुशतिकादीनां च ॥ ७।३।२० ॥

कथम् 'आतिशायिकः', अत्रापाठात् ? उच्यते । प्रायिकः प्रत्यय इत्युक्तम् । अतोऽस्य साधुत्वम् । कथं तर्हि 'व्याप्तिमातिशयिकेन रसेन' इति घोषः ? उच्यते । सूत्रकारादिमतेन ॥ कथं 'पुरीमाजातशात्रवीम्' इति माघः, अत्रापाठात् ? उच्यते । आकृतिगणत्वाद् भविष्यतीत्येके । एवं 'चतस्रो विद्याश्चातुर्वैद्यम्' इति । असाधुरेव वा ॥

प्रायिक इति आकृतिगणत्वादस्योक्तम् । सूत्रकारादिमतेनेति । तन्मत आकृतिगणत्वाभावात् । असाधुरेवेति न युक्तम्, स्वयमेव पूर्वं साधुत्वबोधनात्, वर्धमानादिसम्मतत्वाच्च ॥

## हनस्तोऽचिण्णलोः ॥ ७।३।३२ ॥

कथ वृत्रघ्न इदं 'वार्त्रघ्नम्', अनेन तत्वभावात् ? उच्यते । धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति वृत्तिः ॥

वृत्तिरिति । धातोरिति प्रकृत्य विहिते प्रत्यये कार्यं भवति । प्रकृते तु तस्येदमित्यण् प्रतिपादिकं प्रकृत्येति न तकारादेश इत्यर्थः । अधिकं न्यासादौ ॥

## नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ ७।३।३४ ॥

कथं 'वमथुर्वम आमज्वरः', 'अनाचमिकमिवमीनामिति वक्तव्यम्' इति निषेधाभावात् ? उच्यते । संज्ञापूर्वकानित्यत्वात् । एवं 'गमकत्वाद्' इति च । आम इति चौरादिकस्य णिचि वृद्धौ तत्र मित्त्वं

नास्तीति वृत्तिः ॥ कथं 'विश्रामस्थितिहेतवो न गणिता बन्धूपमाः पदपाः', 'विश्रामाज्जायते बलम्' इति ? उच्यते । 'अनाचमिकमिवमीनाम्' इत्यत्र केचिच्छ्रमिवमी पठन्तीति रक्षितः । ये तु न पठन्ति तेषां विश्रम इति । [1]तथा च माघः—'विश्रमार्थमुपगूहमजस्रम्' इति । 'श्राम निकेत कुण गुण चामन्त्रणे' इति चौरादिकस्य वा । 'सूर्यं-विश्रामभूमिः' इत्याद्यन्याप्यमेवेति वृत्तिः ॥ कथम् 'उपरमोद्यमम्' इति ? यमिरमी अनुदात्तौ । 'अड उद्यमे', 'यम उपरमे' इति शिष्ट-प्रयोगात् । अथ मुनित्रयविलक्षणत्वादस्याप्राधान्यम् । [1]तर्हि'यथालक्षणमप्रयुक्ते' इति उपराम उद्याम इत्येव भवतीति भर्तृहरिणा भागवृत्तिकृता चोक्तम् ॥

वम इत्यत्र वाम इत्येव वृत्तिकारादिमतेन । वमथ्वर्थे तु न दृश्यते । णिचीति । णिच्च द्वितीयधात्वधिकार(३।१।९१)विहितत्वाभावात् न कृद् इति तस्मिन् परे न वृद्धिनिषेधः । मित्त्वाद्ध्रस्वत्वं च न, 'नाऽन्ये मितोऽहेतौ' इत्यनेन मित्त्वनिषेधादिति भावः । रक्षित इति । वर्धमानस्तु प्रयोगदर्शनाद् वृद्धिमाह विकल्पेन । भागवृत्तिकारो नित्यं वृद्धयभावमाहेति संक्षिप्तसारटीकायाम् । विश्रामेत्यस्य साधुत्वमुक्तवान् स इति तन्त्रप्रदीपे । श्रम निकेतेत्यादि । अत्र केत-ग्राम-कुण-गुण-धातवो मैत्रेयेण, सङ्केत-ग्राम-कुण-गुणाश्च माधवेन पठिताः । तत्र ग्राम इत्यस्य स्थाने श्राम इति पाठान्तरं ग्रन्थकृतो मते प्रतीयते । मूले चैवमेव संशोध्यम् । मुनित्रयविलक्षणत्वात् = मुनित्रयोक्तत्वाभावात् । अप्राधान्यम् = अप्रामाण्यम् । उत्तरयति—तथा = एवं सति । यल्लक्षणमिति मुद्रितोऽपपाठः । घञर्थकविधानेऽपि उद्यमादयः सिध्यन्ति ॥

## इसुसुक्तान्तात् कः ॥ ७।३।५१ ॥

कथम् 'आकस्मिकः', अकस्माच्छब्दादध्यात्मादित्वाट्ठञि [2]कादेशात् ? उच्यते । 'येषां च विरोधः शाश्वतिकः' (२।४।९) इति निर्देशादस्यानित्यत्वात् । अकस्मादिति तकारान्तोऽयं विभक्तिप्रतिरूपको निपात इति वा । अविभक्त्यन्तस्य जश्त्वेन दकारान्तादपि ॥

---

१. 'तथा 'यल्लक्षण....' इति मुद्रितम् ।

२. 'इका....' इति मुद्रितमशुद्धम् ।

निपात इति। तथा चाङ्गत्वाऽभावान्न तदुत्तरस्य ठस्य कादेशः। इकादेशस्तु भवत्येव, ठञोऽङ्गत्वनिमित्तत्वात्॥

## चजोः कु घिण्ण्यतोः ॥ ७।३।५२ ॥

कथं 'वेदिसम्मार्जदक्षा' इति कुमारः, घञि कुत्वात्? 'घञर्थे कविधानम्' इति कः। वेदिं सम्मार्ष्टीति कर्मण्यण्, वेदिसम्मार्जी चासौ दक्षा चेति कर्मधारये पुंवत्त्वाद्वा॥ कथम् 'अविद्यः पुरुषः शोच्यः' इति, ण्यति घञि च कुत्वात्? उच्यते। 'अजिव्रज्योश्च' (७।३।६०) इति चकारस्यानुक्तसमुच्चयार्थत्वात्। 'न क्वादेः' (७।३।५९) इति योगविभागादिति कश्चित्। 'ण्य आवश्यके' (७।३।६५) इति वा शोच्यसिद्धिः॥ कथम् 'आलोचः', 'लोचृ दर्शने' इत्यतो घञि कुत्वात्? उच्यते। 'लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः' इति चौरादिकाद् एरचि। एरजन्तानां तु आर्धधातुक इत्यस्य विषयसप्तमीत्वं लब्धम्। अतः परसप्तमीपक्षे अच्। विषयसप्तम्यां तु पचाद्यच्। एवं 'प्रपञ्च'-शब्दः। 'पचि व्यक्तीकरणे' इति भौवादिकाद्वा॥ कथं 'काचाः शिक्यमृद्भेददृग्रुजः' इत्यमरः? 'कच बन्धने' इत्यतः स्वार्थे णिचि एरचि। चकाराद्वा॥

समाध्यन्तरम्—कर्मण्यणिति। कश्चित् = पुरुषोत्तमादिः। अत्र पदमन्वयेऽपि द्रष्टव्या। पचाद्यजिति। अयमाशयः—णेरनिटि इत्यत्र आर्धधातुके इत्यधिक्रियते। तस्य च परसप्तमीत्वे प्रत्ययोत्पत्तेरनन्तरमेव णिलोप इति णिजन्तादेरज् भवति। विषयसप्तमीत्वे तु प्रत्ययोत्पत्तेः पूर्वमेव णिलोपे इवर्णान्तत्वाभावाण्णिजन्तस्य धातोस्ततो नैरज् अपि तु पचाद्यजेवेति। प्रपञ्चशब्देऽपि पूर्ववदेव एरच् पचाद्यज् वा। चकाराद्वेति। अजिव्रज्योश्चेत्यत्र चकारादन्यत्रापि कुत्वनिषेधः कार्य इत्यर्थः। वस्तुतस्तु काचशब्दो हलश्चेति घञा व्युत्पाद्यः। कुत्वं तु न क्वादेरिति निषिध्यते॥

## इषुगमियमां छः ॥ ७।३।७७ ॥

कथं 'प्रतीच्छिष्याम्यहं प्रीत्या' इति चण्डी, शिति छत्वविधानात्? उच्यते। इच्छां प्रतिगतः प्रतीच्छः। तद्वदाचरिष्यामीति प्रतीच्छशब्दादाचारक्विबन्ताल्लृट्॥ 'कथं निर्गच्छन्नकाले चतुर्थी न पतति' इति,

तुकि कर्तव्ये बहिरङ्गस्य छत्वस्यासिद्धत्वात् ? उच्यते । 'नलोपः सुप्स्वर' (८।२।२) इत्यत्र तुग्विधिग्रहणेनास्यानित्यत्वज्ञापनात् ॥

तुकि इति । छे च इति सूत्रेणेत्यादिः । ज्ञापनादिति । तत्फलं तु एषा, द्वे इत्यादौ त्यद्याद्यत्वाऽसिद्धयभावेन टाप्सिद्धिः, प्रतीदीन्नेत्यत्र चाल्लोपस्याऽसिद्धत्वाभावेन हलि चेति दीर्घसिद्धिरित्यादिरिति स्पष्टं तत्रैव वृत्तिन्यासादिग्रन्थेषु ॥

**पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसीदाः ॥ ७।३।७८ ॥**

कथं 'व्यतिपपे', एशादेशे पिबादेशः स्यात् ? उच्यते । 'वर्णे यत् स्यात् तच्च विद्यात्तदादौ' इति 'लिटस्तझयोरेशिरेच्' ( ३।४।८१ ) इत्यत्र न्यासः । अन्यथा शेशब्दमेव विदध्यात् ॥

वर्ण इति । अयमर्थः—प्रकृतसूत्रे ष्ठिवुक्लम्याचमां शिति इत्यतः शितीत्यनुवर्त्तते । शिदित्यत्र कर्मधारयः—शश्चासाविच्चेति । तथा च प्रकृतादेशस्य वर्णनिमित्तकत्वेनेत्सञ्ज्ञकशकारादावेव प्रत्यये तद्भाव इति ऐशादेशे न प्रवृत्तिरिति ॥

**पुगन्तलघूपधस्य च ॥ ७।३।८६ ॥**

कथं 'ष्ठीवनं' 'सीवनं', गुणसद्भावात् दीर्घत्वाभावात् ? उच्यते । पृषोदरादित्वादगुणो दीर्घश्च । चन्द्रगोमी त्वेतत्सिद्धये 'ष्ठिविसिव्योर्दीर्घश्च' इति सूत्रं पठितवान् ॥ कथं 'भेत्ता' ? उच्यते । क्नुसनोः कित्त्वं ज्ञापयति प्रकृतिप्रत्ययादिसंयोगे तत्प्रत्ययनिमित्ते कार्ये गुरुसंज्ञा नाश्रीयते ॥ कथं 'तुलयति स्म विलोचनतारकाः' इति माघः, 'तुल उन्माने' इत्यस्य गुणभावात् ? उच्यते । 'घञर्थे कविधानम्' इति कप्रत्ययान्तात् तुलाशब्दात् तुलया परिच्छिनत्तीति णिचि । एवं 'तुलना' ॥ कथं 'लिखनम्' इत्यादि ? उच्यते। संज्ञापूर्वकानित्यत्वात् । यद्वा कुट आदिः कुटादिः, कुट् आदिर्यस्येति कुटादिः । तत एकशेषे 'गाङ्कुटादिभ्यः' ( १।२।१ ) इति निर्देशेन ङित्त्वभावः । ( 'कृष विलेखने' इति निर्देशात् ? ) एवं च 'लेखको लेखो लेखिनी' ॥ कथं 'लेखनी' इति ? उच्यते । आतिदेशिकं कार्यमनित्यमिति ङित्त्वाभावाद् गुणः 'कृष विलेखने' इति निर्देशात् ॥

दीर्घश्चेति। विकल्पेनेति माधवादयः। तेन पक्षे ष्ठेवनं सेवनमित्यपि भवतः। नाश्रीयत इति। स्पष्टं चैतद्वृत्त्यादौ। कप्रत्ययान्तादिति। चिन्तिपूजि-सूत्रस्थचकारस्यानुक्तसमुच्चयार्थकत्वादङ्प्रत्ययान्तः तुलाशब्द इति पदमञ्जरी ॥

लेखकलेखलेखिनीशब्दा ण्वुल्घञ्णिनिप्रत्ययान्ता इति नात्र ङित्वातिदेशः। एतद्विषये गाङ्कुटादिसूत्रेप्युक्तम् ॥

## अतो दीर्घो यञि ॥ ७।३।१०१ ॥

कथं 'जयन्ति ते सदा सन्तः' इति न्यासः, अन्तादेशाकारैकादेशस्य पूर्वं प्रत्यन्तवत्त्वेऽनेन दीर्घात्, परं प्रत्यादिवत्त्वे सार्वधातुकत्वात्? उच्यते। 'उभयत आश्रये नान्तादिवद्' इति निषेधात्। एवं तर्हि नान्तादिवत्त्वं, किन्त्वेकदेशविकृतत्वात् सार्वधातुकत्वे भविष्यति। न चैवमुभयत आश्रय इत्यस्य वैयर्थ्यम्। वृक्षावित्येतदर्थत्वात्। एकादेशस्य पूर्वं प्रत्यन्तवत्त्वे प्रातिपदिकावयवत्वात् सुप्त्वम्,[1] परं प्रत्यादिवत्त्वात् 'सुपो धातु' (२।४।७१) इत्यादिना लुक् स्यात्। अन्तवत्त्वाभावान्न भवति। न चात्रैकदेशविकृतत्वम्? उच्यते। अस्या लिङ्गं समानवचन-निर्देशः। तत्रावर्णान्तत्वात् 'सुपि च' (७।३।१०२) इति दीर्घत्वं प्राप्तमेव। एवंविधे एकदेशविकृतपरिभाषया न प्रवर्तितव्यमित्यत्राप्येतदेव लिङ्गम्। 'अन्येभ्योऽपि दृश्यन्ते' (३।२।७५) इति निर्देशो वा ॥

अन्तवत्त्वेनेति। अदन्ताङ्गत्वादिति शेषः। 'न्ति' इत्यस्य यञादित्वेऽपि सार्वधातुकत्वाभावात्कथं दीर्घ इत्यत आह—परमित्यादि। उभयत इति। युगपदेव पूर्वान्तवत्त्वं परादिवत्त्वं च नेष्टमिति भावः। तथा चात्र पूर्वान्तवत्त्वं परादिवत्त्वं च नेष्टमिति भावः। तथा चात्र पूर्वान्तत्वे यञादिसार्वधातुकाभावः, परादिवत्त्वे चादन्तत्वाभाव इति न दीर्घप्रसङ्गः। एवं तर्हीति। अन्तीत्यस्यैकदेश अकार एव पर-रूपेण विकृत इत्यतः 'न्ति' इत्यस्य सार्वधातुकत्वं यञादित्वं चेति कथं न दीर्घ इति भावः। उभयत आश्रयण इत्यस्य व्यर्थत्वापत्त्या एकदेशविकृतन्यायोऽनादरणीय इत्याशङ्कां निरस्यति—न चेत्यादिना। न भवति इति। लुगिति शेषः। अत्र = औकारे। वृक्ष् इत्यस्यादन्तत्वं त्वेकदेशविकृतन्यायेनैव। समानवचननिर्देशः = मूलशब्दसदृशशब्दोच्चारणम्। अत एवाऽर्थाधिकविकारे नायं न्याय इति

---

१. 'सुपः। परं....' इति मुद्रितः पाठः।

प्रामाणिकाः। तत्र राम+य इत्यादौ नास्य प्रयोजनमित्याह—तत्रेत्यादिना। ननु तथापि न्ति इत्यस्यानेन कथं न सार्वधातुकत्वं येन दीर्घापत्तिः स्यादित्याशङ्कायामाह—एवंविध इत्यादि। निर्देशः = अकृतदीर्घोच्चारणमित्यर्थः॥

## सुपि च ॥ ७।३।१०२ ॥

कथं 'वृक्षाय', यभावे सन्निपातलक्षणपरिभाषया दीर्घाभावात्? उच्यते। 'कष्टाय क्रमणे' (३।१।१४) इति निर्देशादस्या अनित्यत्वात्॥

सन्निपातेति। अदन्तत्वनिमित्तको यादेशोऽदन्तत्वविघातकस्य दीर्घस्य निमित्तं न स्यादिति भावः। कष्टायेत्यादि। कृति तुग्ग्रहणमप्यनित्यत्वज्ञापकम्॥

## ओसि च ॥ ७।३।१०४ ॥

## आङि चापः ॥ ७।३ १०५ ॥

कथम् 'अखट्वेन', ह्रस्वेऽप्याबन्तत्वादनेनैत्वं स्यात्, तथा चातिखट्वव्यावृत्तये 'हल्ङ्या'दिसूत्रे दीर्घग्रहणं क्रियते? उच्यते। आप इत्याकारप्रश्लेषाद्दीर्घान्तादेवैत्वमिति भाष्यम्। अत एवातिखट्वादित्यादौ याड् न भवति॥

दीर्घग्रहणमिति। एतेनाखट्व इत्यस्याबन्तत्वं ह्रस्वत्वेऽपि स्थानिवत्त्वेन वर्त्तत एवेति सूचितम्। अन्यथा दीर्घग्रहणं व्यर्थं स्यात्। भाष्यमिति। स्थानिवत्सूत्रे भाष्ये 'ङ्याब्ग्रहणेऽदीर्घः' इति वार्त्तिकं प्रत्याचक्षाणेन भाष्यकृता 'प्रश्लिष्टनिर्देशात्सिद्धम्' इत्युक्तम्। तस्योपलक्षणत्वमिति स्पष्टमुद्योतादौ। एतेन हल्ङ्याप्सूत्रे दीर्घग्रहणं व्यर्थमित्यपि सूचितम्॥

## ह्रस्वस्य गुणः ॥ ७।३।१०८ ॥

कथं 'सुतनु! सत्यमलङ्करणाय ते' इति माघः, 'सुतनु! जाहिहि कोपम्', तथा 'वरतनु! सम्प्रवदन्ति कुक्कुटाः' इति च, अनेन गुणप्राप्तेः। 'ऊङुतः' (४।१।६६) इति मनुष्यजातिविवक्षायामूङि 'अम्बार्थनद्योर्ह्रस्वः' (७।३।१०७) इति न वाच्यम्। अनूङन्तस्यापि दर्शनात् 'सुतनो! स्तनौ च दयितोपगमे'? उच्यते। 'कृपिचमितनिधनिसर्जिखर्जिभ्य ऊः' इति ऊप्रत्ययान्तस्तनूशब्दोऽप्यस्ति। स्त्रियां 'मूर्त्तिस्तनुस्तनूः' इत्यमरः। तत्प्रयोगे 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वविधान-

सामर्थ्यान्न गुण इति । यदि हि स्यात् अम्बार्थानां ह्रस्व इत्युक्त्वा नदीह्रस्वयोर्गुण इति कृतं स्यादिति भागवृत्तिः । ननु 'नद्यृतश्च' (५।४।१५३) इति कपात्र भाव्यम् ? उच्यते । समासान्तविधेरनित्यत्वात् । अन्ये ह्रस्वान्तस्य संज्ञापूर्वकानित्यत्वाद् गुणाभावमाहुः । अत एव 'कुतस्त्यं भीरु! यत् तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे' इति भट्टिः। जयमङ्गलायां (च नाश्च + + ? चानूङन्तस्य) रूपं, 'सपदि वारिधरारवभीरवः' इति माघेऽनूङन्तस्य प्रयोगात् ।। कथं 'हे कर्तृ कुल !' परत्वाद् गुणेन भाव्यम् ? उच्यते । बलीयस्त्वाल्लुकः पूर्वविप्रतिषेधाच्च लुकि 'न लुमता' (१।१।६३) इति प्रत्ययलक्षणप्रतिषेधेन सम्बुद्धिपरत्वाभावात् ।। कथं तर्हि 'हे वारे !' 'हे सुनो !' 'इकोऽचि विभक्तौ' (७।१।७३) इत्यत्राचीत्यनेन 'न लुमता' इत्यस्यानित्यत्वज्ञापनात् ।।

भागवृत्तिरिति । काशिकाकारादयोऽप्येवमेव मन्यन्ते । स्याद् गुण इष्ट इति शेषः । अन्ये = जयमङ्गलाकारादयः । अनूङन्तस्येति । ऊङ्प्रत्ययान्तस्य ह्रस्वान्तस्यापि स्त्रियां कोशादौ प्रसिद्धेः । भागवृत्त्याद्यभिमतं समाधानमाह— बलीयस्त्वादिति । तत्त्वं च लुको नित्यत्वेन, तच्च गुणापेक्षया कृताऽकृतप्रसङ्गित्वेन । लोपापेक्षया च परत्वेन लुको बलीयस्त्वम् । पूर्वविप्रतिषेधश्च गुणस्यानिष्टत्वाल्लुकश्चेष्टत्वात् । कृताऽकृतप्रसङ्गित्वं गुणस्य निराचष्टे—न लुमतेत्यादिना । ज्ञापनादिति । भ्यामादौ सत्यपि नुमि नलोपेन सम्बुद्धेश्च लुकाऽपहृतत्वेन प्रत्ययलक्षणाभावान्नुमो निवृत्तावचीति व्यर्थं सज्ज्ञापकम् । तथा च सम्बुद्धौ प्रत्ययलक्षणप्राप्तं नुमं वारयितुमचीति सार्थकम् ।।

### ऋतो ङिसर्वनामस्थानयोः ।। ७।३।११० ।।

कथं 'कर्तॄणि ब्राह्मणकुलानि', परत्वादनेन गुणप्रसङ्गात् ? उच्यते । पूर्वविप्रतिषेधेन नुम् भविष्यति ।।

पूर्वविप्रतिषेधेनेति । तथा च वार्त्तिकम्—'वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन' इति । तथा च पूर्वान्तवता नुमा व्यवधानान्नऋदन्तत्वमङ्गस्येति गुणाभावः ।।

### घेर्ङिति ।। ७।३।१११ ।।

कथं 'वारिणः', नुमः परत्वाद् गुणप्राप्तेः ? उच्यते । 'शलालुनो-

ऽन्यतरस्याम्' ( ४।४।५४ ) इति निर्देशात्, पूर्वविप्रतिषेधात् ।।

पूर्वविप्रतिषेधादिति । द्वितीयं समाधानमुपरिष्टाद् व्याख्यातम् ।।

**सर्वनाम्नः स्याड्ढ्रस्वश्च ।। ७।३।११४ ।।**

कथम् 'अनन्तरायाः प्राप्तेः', नञ्समासे सर्वनामत्वात् ? उच्यते । अविद्यमानमन्तरं यस्या इति बहुव्रीहौ कृते निषेधः ।।

निषेध इति । न बहुव्रीहौ इति सूत्रेणेत्यादिः ।।

**ङेराम्नद्याम्नीभ्यः ।। ७।३।११६ ।।**

कथमिटः 'क्त्वायां विकल्पः सिद्धः' इति 'क्लिशः क्त्वानिष्ठयोः' ( ७।२।५० ) इत्यत्र वृत्तिः ? उच्यते । क्त्वाशब्दस्याजादौ क्वचित् पाठः क्रियते ।।

**इति शरणदेवविरचितदुर्घटवृत्तौ सप्तमाध्याये तृतीयः पादः ।।**

क्वचिदिति । अत एव न्यासे 'क्त्वाप्रत्यये विकल्पः....' इति पठितम् ।।

इति दुर्घटवृत्तिविवृतौ सप्तमाध्यायस्य तृतीयः पादः ।।

**अथ चतुर्थः पादः ।।**

**णौ चङ्युपधाया ह्रस्वः ।। ७।४।१ ।।**

**केऽणः ।। ७।४।१३ ।।**

कथं 'तूष्णींशीलस्तु तूष्णीकः' इत्यमरः, तथा 'कुर्वतेऽपि हि तूष्णीका नाम गम्भीरचेतसः । लघवो घोषयन्त्येव न कुर्वन्ति कदाचन', 'शीले को मलोपश्च' इति के कृते ह्रस्वप्राप्तेः ? उच्यते । 'न कपि' (७।४।१४) इत्यत्र नेति योगविभागः कार्यः ।। कथम् 'एकः', 'इण्मीका' इति के गुणे च ह्रस्वप्राप्तेः ? उच्यते । 'केऽचः' इति 'केऽटः' इति वा कर्तव्ये अण्ग्रहणात् पूर्वेण णकारेण प्रत्यहारादिति न्यासः । चत्वार्यण्ग्रहणानि पूर्वेण णकारेणेति भाष्याच्च । न चात्र नाऽणिति । 'आशीष्कः' एवं 'गीष्का'[1] इत्यत्र विसर्जनीयत्वषत्वादेरसिद्धत्वात् प्राप्तेश्चान्तरतम्यात्, न तु सावर्ण्यात्, 'नाज्झलौ' (१।१।१०) इति सावर्ण्यनिषेधात् ।।

---

१. अत्र मातृकापाठः गणपतिशास्त्रिसंशोधितपाठश्चायुक्तौ ।

शीले क इति वार्त्तिकमकच्सूत्रे। योगविभाग इति। भाष्यकारप्रयोगाद्वा ह्रस्वाभावः। मलोपसमर्थ्यात्र ह्रस्वः, अन्यथा ठमेव विदध्यादिति रामाश्रमः। अणन्ताद्विहिते के एव ह्रस्वविधानान्नेत्यपि मतम्। अत्र मूले 'केऽट इति वा' इत्यंशो भ्रमादापतितः, भाष्याद्यनुक्तत्वात्, अयुक्तत्वाच्च। अयं विचारो ऌण्सूत्रे भाष्ये द्रष्टव्यः। चत्वारीति। पञ्चाऽण्ग्रहणानि—उरण् रपरः, अणुदित्सवर्णस्य चाऽप्रत्ययः, ढ्रलोपे पूर्वस्य दीर्घोऽणः, केऽणः, अणोऽप्रगृह्यस्येति। तत्र अणुदित्सूत्रादृतेऽन्यानि चत्वारीत्यर्थः। अत्र = के परे। नाऽणिति। परणकारेणाण्ग्रहणे तदघटकाऽण् न लभ्यत इति नेति भावः। हेतुमाह—आशीष्केत्यादिना। असिद्धत्वादिति। तथा च आशीर् का, गीर् का इत्यत्र के परेऽण् सुलभः। अनयोः परेणाण्ग्रहणेऽपि न दोष इत्याह—प्राप्तेरित्यादिना। आन्तरतम्यात्प्राप्तिः, प्रकृते च रेफस्यान्तरतमो ह्रस्व एव नास्ति, कथं प्राप्तिः? सावर्ण्यादृकारः प्राप्नोतीत्याशङ्कायामाह—न त्विति। तथा चात्र दोषाऽभावेऽपि एकः, गोका, नौका इत्यादौ ह्रस्ववारणाय पूर्वेणाण्ग्रहणं प्रकृते कर्त्तव्यमेवेति निष्कर्षः॥

## एतेर्लिङि ॥ ७।४।२४ ॥

कथम् 'अभियात्, परियाद्' इति वृत्तिः। उपसर्गेण सहैकादेशे-एत्युपसर्गयोरविभागात्। अन्तादिवद्भावैकदेशविकृतत्वं नास्तीति, 'उभयत आश्रये' इत्यस्य वा (नं समास?) इति ज्ञापकात्। अत एव 'भक्तिनम्रः परीयाः' इति मेघः? उच्यते। 'ज्ञापकसिद्धं न सर्वत्र' इत्येकदेशविकृतद्वारेण विशेषादेशाद्ध्रस्वः॥

अभीयात्, परीयात्, अभियात्, परियादिति वा पाठो काशिकायां नास्ति। न्यासेऽभीयादिति प्रतीको वर्त्तते, सवर्णदीर्घत्वेऽकृते ह्रस्व इत्यपि च तत्र दृश्यते, तथापि प्रकृतो ग्रन्थः अभियात्, परियादिति पाठमङ्गीकृत्य प्रवृत्तः। अतो ह्यत्राभीयादिति रूपेण मुद्रितो दीर्घपाठो हेयः। ह्रस्वानुपपत्तिं प्रतिपादयति—उपसर्गेणेत्यादिना। अन्तादिवद्भावेनाणो लाभ एकदेशविकृतानन्यत्वाच्च अभ् इत्यादेरुपसर्गत्वलाभो नास्ति, अभीयादित्यादिप्रसिद्धतरप्रयोगानुरोधेनात्रैकदेशविकृतन्यायाऽप्रवृत्तेः। परादिवद्भावान्तादिवद्भावौ च न सम्भवत इत्याह—उभयत इति। विशेषादेशात् = अभ् इत्यादेरुपसर्गत्वाभ्युगमात्। यथा वृक्षावित्यादौ वृक्ष् इत्यस्याङ्गत्वं तथा प्रकृतेऽपीत्याशयः। परे त्वभियादित्यादेराशीर्लिङि प्रामादिकत्वमेव मन्यन्ते। दुर्घटवृत्तिरप्यत्रांशतः खण्डितेति न निर्णयः कर्तुं शक्यो यद्यपि तथापि यथापाठं व्याख्याता वृत्तिः कथञ्चित्॥

**अकृत्सार्वधातुकयोर्दीर्घः ।। ७।४।२५ ।।**

कथं 'प्रायः पुण्यवतां देशे शरदियं प्रावृषायते', हलन्तत्वात् ? उच्यते । हलन्तादर्शआदित्वादचि प्रावृषाशब्दात् साध्यम् । 'कालप्रभाता शरदा प्रावृषा तु जलार्णवा' इति संसारावर्त्तः ।।

प्रकारान्तरमाह—कालेत्यादिना ।।

**रिङ् शयग्लिङ्षु ।। ७।४।२८ ।।**

कथं 'जागर्यते', ध्रियते जागर इत्यादौ रिङ्गुणयोः सावकाशत्वे परत्वाद्रिङ् स्यात् ? उच्यते । पूर्वविप्रतिषेधाद् धातुपारायणे जागर्यंत इत्युक्तम् ।।

इत्युक्तम् इति । कान्तन्त्रसूत्रेऽप्येतत् समर्थितमिति व्यक्तं माधवादिग्रन्थेषु । धातुप्रदीपेऽपि जागर्यंत इत्युदाहृतम् ।।

**गुणोऽर्त्तिसंयोगाद्योः ।। ७।४।२९ ।।**

कथं 'संस्क्रियते' ? उच्यते । सुटो बहिरङ्गत्वादसिद्धत्वाद् अभक्तत्वाच्चेति वृत्तिः ।।

बहिरङ्गत्वं च सुटो सम्+कृ इत्युभयाश्रितत्वेन गुणस्य चैकपदाश्रितत्वेन अन्तरङ्गत्वमिति गुणे कर्त्तव्ये सुटोऽसिद्धत्वेन संयोगादित्वाभावात् । पूर्वं साधनेन पश्चादुपसर्गेण योग इति पक्षे समाधानमिदम् । पक्षान्तरे त्वाह—अभक्तत्वाद् चेति । अङ्गाधिकारेऽङ्गावयवत्वमभक्तस्य सुटो नेत्याशयः ।।

**ह्रस्वः ।। ७।४।५९ ।।**

कथम् 'ऊचतुः', एकादेशस्यान्तवत्त्वाद्ध्रस्वप्राप्तेः ? उच्यते । बहिरङ्गत्वादेकादेशस्येति रक्षितः ।।

ऊचतुरिति । किति लिटि परत्वात्सम्प्रसारणे कृते द्वित्वम् अन्ते च दीर्घं इति प्रक्रिया । पूर्वपरापेक्षत्वाद्दीर्घो बहिरङ्गः, अभ्यासमात्रापेक्षत्वाच्च ह्रस्वोऽन्तरङ्ग इति ह्रस्वे कर्त्तव्ये दीर्घोऽसिद्धः ।।

इति श्रीनारायणमिश्रविरचितायां दुर्घटवृत्तिविवृतौ सप्तमाध्यायस्य चतुर्थः पादः ।।

**भवतेरः ।। ७।४।७३ ।।**

कथम् अस्तेर्भूभावे कृते 'बभूव' इति, भौवादिकनिर्देशात् ? उच्यते । भूसामान्यनिर्देशोऽयम् । तच्च यया कयाचिद्विभक्त्या निर्देष्टव्यमिति भवतिना निर्दिष्टम् । भुव इति न कृतं वैचित्र्यार्थम् ।।

इति शरणदेवविरचितदुर्घटवृत्तौ सप्तमाध्याये चतुर्थः पादः ।।

## अथाष्टमाध्याये प्रथमः पादः ।।

### सर्वस्य द्वे ।। ८।१।१ ।।

### नित्यवीप्सयोः ।। ८।१।४ ।।

कथम् 'एकशः' इति, अनेन द्वित्वप्राप्तेः ? उच्यते । शसा वीप्साया अभिधानात् ।। एवं 'पदान्येकैकशस्तिङाम्' इति, प्रयोगमुखी, तथा 'एकैकशः संहता वा' इति कामन्दकीयं न घटते । 'एकैकशो देहि' इति भाष्यं च 'सर्वस्य द्वे' इत्यत्र ? एवं सति 'तान्येकवचनद्विवचनबहुवचनान्येकशः' (१।४।१०२) इति निर्देशादद्वित्वं, भाष्यप्रामाण्याद् द्वित्वं च ।।

### उपर्यध्यधसस्सामीप्ये ।। ८।१।७ ।।

कथम् 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः', सामीप्याभावाद् द्वित्वानुपपत्तेः ? उच्यते । उपरिबुद्धीनामुत्तरलबुद्धीनामुपरि ऊर्ध्वमीश्वरबुद्धयश्चरन्तीत्यर्थः । नाऽतो द्वित्वम् ।।

उपर्युपरीति कर्मणि द्वितीयेति सूत्रेऽपि व्याख्यातम् ।।

### प्रकारे गुणवचनस्य ।। ८।१।१२ ।।

कथं 'भीतभीत इव शीतमयूखः' इति भारविः, इवशब्देन सादृश्यस्योक्तत्वाद् द्वित्वाभावात् ? उच्यते । 'आधिक्ये द्वे भवतः' इति वार्त्तिकेनात्र द्वित्वं, भीतत्वाधिक्यं द्वित्वेनोच्यते, यथा 'दर्शनीयदर्शनीयाद्य रोचते' इत्यत्र दर्शयीय(ता)या आधिक्यम् । तदेव[1] द्विर्वचनात् प्रतीयत इति भाषावृत्तिः ।। कथं 'नवं नवं प्रीतिरहो करोति' इति माघः, अनेन द्विरुक्तौ 'कर्मधारयवदुत्तरेषु' (७।१।११) इति कर्मधारयवत्त्वात् सुब्लुक्प्राप्तेः, यथा माघ एव 'नवनवा वनवायुभिरादधे', 'प्रीतये[2]

१. 'सदेव' इति मुद्रितम् ।

२. 'प्रियतमे' इति मुद्रितमशुद्धम् ।

नवनवत्वमियाय' ? उच्यते । अकारप्रश्लेषोऽत्र द्रष्टव्यः । तदयमर्थः—प्रीतिरनवं चिरन्तनमपि नवं [1]करोतीत्यहो आश्चर्यमेतत् ।। कथं 'मन्दं मन्दं नुदति पवनः' इति मेघः, तथा 'मन्दं मन्दं स्पृशति हरिणीशङ्कया साहसाङ्कम्' ? उच्यते । 'तस्य परमाम्रेडितम्' (८।१।२) इति महासंज्ञाकरणेनात्र द्वित्वं कल्पनीयम् । 'खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र, क्षीणः क्षीणः परिलघु पयः' इति मेघः ।।

भाषावृत्तिरिति । आधिक्ये द्वे भवत इति वार्त्तिकं भाष्यादौ न दृश्यते । तथाप्याम्रेडितेतिमहासंज्ञाकरणादेतल्लभ्यत इत्युक्तं न्यासादौ । अत्र चेवशब्दस्योत्प्रेक्षार्थकत्वेन प्रकारस्यानुक्तत्वात्प्रकृतसूत्रेण द्विर्वचने न क्षतिरिति विभावनीयम् । सुब्लुगिति । बाहुलकाद्वा कर्मधारयवद्भावावे लुग्वारणीयः । पदमञ्जर्यां त्वत्र वीप्सायां द्विर्वचनमुक्तम् । अकारप्रश्लेष इति ।

'अनेकशः संस्तुमप्यनल्पा नवं नवं प्रीतिरहो करोति' इत्युत्तरार्धे अकारप्रश्लेषः सुकरः । एवं 'प्रीतये नव.....' इत्यत्रापि ।

मन्दं मन्दमिति । अत्र नित्यवीप्साऽभावात्कथं द्वित्वम्, प्रकृतसूत्रेण द्वित्वे तु कर्मधारयवद्भावात्पूर्वपदविभक्तिर्लुप्येतेत्याशयेन प्रश्नः । तस्येत्यादि । तथा चात्रापि आधिक्य एव द्वित्वमिति न कर्मधारयवद्भावप्रसङ्ग इत्याशयः ।।

**द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ।। ८।१।१५ ।।**

कथं 'द्वन्द्वं कलहयुग्मयोः' इत्यमरः, तथा 'चार्थे द्वन्द्वः' इति ? उच्यते । योगविभागादिति भाषावृत्तिः ।।

भाषावृत्तिरिति । काशिकादावप्युक्तोऽयमर्थः ।।

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ।। ८।१।२० ।।**

कथं 'गेये केन विनीतौ वाम्' इति, अभिहिते कर्मणि प्रथमान्तत्वात् षष्ठ्यादेरभावात् ? उच्यते । एकदेशप्रयोगोऽयम् । यथा भीमो भीमसेनः, तथा युवामित्येकदेशोऽयं वामिति । द्वितीयाग्रहणं कर्मविभक्त्युपलक्षणं वा । प्रमादोऽयं वा ।।

इति शरणदेवविरचितदुर्घटवृत्तौ अष्टमाध्याये प्रथमः पादः ।।

१. 'तनोति' इति मुद्रितम् ।

एकदेशप्रयोग इति। एतच्च मतं रघुटीकायां हेमाद्रिचारित्रवर्धनादिभिरपि निर्दिष्टम्। अन्त्येन च दूषितमपि, युवामित्यत्र पदद्वयाभावेन वामित्यस्य तदेकदेशत्वानौचित्यात्। कर्मविभक्तिः प्रथमाऽपि भवति, अभिहिते कर्मणि प्रथमाविधानात्। तथा च प्रथमायामपि भवत्यादेश इति भावः। प्रमादपाठोऽयमिति। कृष्णभट्टादयस्तु वामिति युवामित्यर्थे विभक्त्यन्त्यप्रतिरूपकमव्ययमित्याहुः। शेखरकारेणाप्यनुमोदितं तत्। षष्ठीचतुर्थ्यादिविभक्तीनां व्युत्क्रमनिर्देशाद्वा प्रथमायामप्यादेश इत्यपि मतम्। 'गेये को नु विनेता वाम्', 'गेये कोऽत्र विनेता वाम्' इत्यादयः पाठभेदा अपि व्याख्यातृभिरुपदिष्टाः॥

इति दुर्घटवृत्तिविवृतावष्टमाध्यायस्य प्रथमः पादः॥

## अथ द्वितीयः पादः॥

### पूर्वत्रासिद्धम्॥ ८।२।१॥

कथं 'वृक्षः', रोरुकारस्येत्त्वे कर्तव्ये रुत्वस्यासिद्धत्वात्? उच्यते। 'रोरुकारस्यानुनासिकत्वप्रतिज्ञानसामर्थ्यादित्संज्ञायां कर्तव्यायां नासिद्धम्' इति 'उपदेशे' (१।३।२) सूत्रे रक्षितः। न, तदनुनासिकत्वप्रतिज्ञानम् 'अतो रोरप्लुतादप्लुते' (६।१।११३) इति 'हशि च' (६।१।११४) इत्यत्र च सानुनासिकस्य रोः परिग्रहो यथा स्यात्, तेन तरुवनमित्यत्र रुशब्दस्य मा भूदित्येवमर्थम्? एवं तर्हि उकारमकृत्वा रेफस्यैवानुनासिकत्वं प्रतिज्ञातं (स्यात्) यथा र(जस्य?षाभ्या)मित्यत्र व्यञ्जनस्य स्वरितत्वम्॥ कथं 'प्रागियं' 'घृतस्पृगयं', 'क्विन्प्रत्ययस्य कुः' (८।२।६२) इत्यस्यासिद्धत्वात्? उच्यते। 'स्रग्दिगुष्णिगञ्चु' इति 'प्राग्रीश्वरान्निपाताः' (१।४।५६) इति निर्देशात्॥ कथम् '(अर्थ+य?)रजोपमा' इति, यलोपस्यासिद्धत्वात्? उच्यते। अकारान्तोऽयं रजशब्दः 'रजवत् [1]परिकीर्तिम्' इति विश्वः। रज इव रेणौ इत्यर्थः। 'नोपधायाः' (६।४।७) इति निर्देशादसिद्धत्वानित्यत्वाद्वा॥

असिद्धत्वादिति। त्रिपादीस्थत्वेनेत्यादिः। एतत्प्रतिक्षिप्त—नेत्यादिनाऽर्थ-

१. 'रजचरजादमिति विश्वः (?) रज इव (ऊतौ?)' इति मुद्रितम्।

मित्यन्तेन। प्रतिसमाधत्ते—एवं तर्हीत्यादिना। प्रतिज्ञातमिति। तेनैवोत्वविधौ नेतरस्य ग्रहणमित्युपपद्येतेति भावः। ननु अनुनासिकत्वं व्यञ्जनेषु ञमङणनेष्वेव प्रसिद्धमित्याशङ्क्याह—रषाभ्यामित्यादि। असिद्धत्वादिति। झलां जशोऽन्ते (८।२।३९) इति जश्त्वे कर्त्तव्य इत्यादिः। यलोपस्याऽसिद्धत्वादिति। आद् गुणः (६।१।८७) इति गुणे कर्त्तव्ये त्रिपादीस्थस्य लोपः शाकल्यस्य (८।३।१९) इत्यस्याऽसिद्धत्वात्। अकारान्त इति। तथा चाऽकारान्तवर्गे मेदिन्यामपि—

'रजो रेणौ परागे स्यादार्त्तवे च गुणान्तरे' इति। इत्यर्थं इति। 'रजः परागे रेणौ तु रजवत् परिकीर्त्तितम्' इति विश्वप्रकाशानुसारेण रेणौ रज इत्यकारान्तः शब्द प्रयुज्यत इति सिद्ध्यति॥

सान्तस्यैव रूपमित्याह—नोपधाया इत्यादिना। अत्र 'नः' इति षष्ठ्यन्तम्। तत्रोपधाशब्दयोगे सत्यवसानत्वनिवृत्तौ विसर्गस्याऽपि निवृत्तिरिति यकारादेशे लोपः शाकल्यस्येति यलोपे न उपधायाः इति स्थितावाद्गुणः कृतः। तथा चात्र न पूर्वत्रासिद्धमिति प्रवर्त्तते इति स्पष्टम् असिद्धत्वमनित्यत्वं चास्य शास्त्रस्य। वस्तुतस्तु सौत्रत्वादकारस्योच्चारणार्थत्वेनाऽविभक्तिकत्वाद्वा निर्देशस्यास्याऽनित्यत्वकल्पनमयुक्तमित्यकारान्तरजशब्दमादायैव समर्थनीयोऽयं प्रयोगः॥

## कृपो रो लः ॥ ८।२।१८ ॥

कथं 'क्लृप्ता'? उच्यते। 'लुटि च क्लृपः' (१।४।९३) इति निर्देशाद् ऋकारस्य लृत्वम्॥ कथं तर्हि 'कृपा'? 'कृपेः सम्प्रसारणं च' इति भिदादिपाठाल्लाक्षणिकत्वात्। कृपाणकर्पटकर्परादयस्तु उणादित्वात् सिद्धाः॥

ऋकारस्य लृत्वमिति। यद्यप्येकदेश एव विकारो ऋकारावयवस्य रेफस्य लृकारावयवो ल् इत्येवं रूपस्तथापि वर्णैकदेशयोर्निष्कृष्य निर्देशो न सम्भवतीति समुदायस्य समुदाय आदेश उक्तः। अधिकं भाष्यवृत्त्यादिषु। लाक्षणिकत्वादिति। ऋकारस्येत्यादिः। उणादित्वादिति। तस्य च बलुलवचनान्न लत्वमिति शेषः॥

## धि च ॥ ८।२।२५ ॥

'धे सलोपः सिचो लोपश्चकाद्धीति प्रयोजनम्' इत्येके। सामान्येनेति सर्वे। एवञ्च कथं पयो धीयते 'पयोधिः', अनेन सलोपात्? उच्यते। अन्तरङ्गत्वान्निमित्तनिमित्तिनोरेकपदे विधानात्। व्यवस्थितविभाषानुवृत्तेरिति भाषावृत्तिः॥

धे सलोपोऽनेन विहित इत्यस्य धे परे सिचो लोप इत्यर्थं इति पूर्वार्द्धं व्याख्येयं श्लोकवार्त्तिकस्य। भाष्यादौ तु लोपं प्रति स्थानिनोऽपि विवक्षया सप्तम्या 'धिसकारे सिचो लोपः' इति पठितम्। सर्वे = भाष्यकारादयः। तथा चैतन्मते चकाधीत्येव भवति। अत्र पक्षे शङ्कते—कथमित्यादिना। समाधत्ते—अन्तरङ्गत्वादिति। पयो धीयते इत्यत्र निमित्तनिमित्तिनोर्भिन्नपदस्थत्वेन पदद्वयाश्रितसलोपापेक्षयैकपदाश्रयस्य रुत्वस्यान्तरङ्गत्वादित्यर्थः। ततश्चोत्वं तस्य च स्थानिवत्त्वेन न लोपः अल्विधित्वात्। व्यवस्थितेत्यादि। अचि विभाषेत्यतो विभाषानुवृत्तेर्व्यवस्थितत्वान्न लोप इत्यादि स्पष्टं न्यासादावपि॥

## चोः कुः॥ ८।२।३०॥

कथम् 'अल्पाच्तरम्', तथा 'अत्यल्पाच्त्वाद्' इति 'आयनादि' (७।१।२) सूत्रे न्यासः, कुत्वप्राप्तेः? उच्यते। अल्पाच्तरनिर्देशादेव। कुत्वविधौ 'झलि सडीति वक्तव्यम्' इति वा। सडिति 'सनः सकारादारभ्य आ महिङो ङकारात्॥ कथम् 'आञ्जीत्'[1]? परसवर्णस्याऽसिद्धेः[2]। 'एवं निरुपपदस्य क्रुञ्चेः क्विनि कुत्वं न, 'युजि कुञ्चाञ्च' इति निर्देशादिति भाषावृत्तिः॥

झलि सडीति। परेश्च घाङ्कयोः (८।२।२२) इति सूत्रे भाष्ये पठितम्—'सडि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि' इति। तस्यैवायं संग्राहको वचनविशेषो वृत्तौ पठितः। अत्र सलोपनिर्देशाद्वार्त्तिकमतेऽपि चकाधीत्येव भवति। अत्र निपातनादिति समाधानमेव वरम्, वार्त्तिकस्य भाष्ये प्रत्याख्यातत्वात्।

आञ्जीदिति। ञकारस्य झलि परे कथं न कुत्वमिति प्रश्नः। समाधत्ते—परसवर्णेत्यादिना। नकारोपधोयं धातुः, तत्र नकारस्यानुस्वारे (८।३।२४) परसवर्णे (८।४।५८) च ञकारः। कुत्वे कर्त्तव्ये परसवर्णस्यासिद्धत्वात् ञकाराभावे कुत्वाभाव इति। भाषावृत्तिरिति। काशिकादावप्ययमर्थः स्फुटः॥

## व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः॥ ८।२।३६॥

कथं 'परिव्राट्', व्रजेरत्रापाठात्? उच्यते। 'परौ व्रजेः षश्च पदान्ते' इति 'अन्येभ्योऽपि दृश्यते' (३।२।१७८) इत्यत्रोक्तम्। उणादौ च सूत्रमिति रक्षितः॥

१. 'मथमथमाजोश' इति मुद्रितं 'मञ्जुशिञ्जीरमञ्जितम्' इत्यादि संशोधनं च नोचितम्।
२. 'परसवर्णाद्वा सिद्धः' इति मुद्रितमशुद्धम्।

### झलां जशोऽन्ते ।। ८।२।३९ ।।

कथं 'जश्त्वं', शकारस्य जश्भावात् ? उच्यते । 'झलां जश् झशि' ( ८।४।५३ ) इति निर्देशात् । व्रश्चादिनापि न षत्वं, धातुग्रहणानुवृत्तेः । श्चुत्वं च नास्ति, 'शात्' (८।४।४४) इति निषेधात् ।। कथं 'बभौ मरुत्वान्' इति भट्टियमके ( न हनम्मरुत्वान् ? पूर्ववन्मतुप् ) इति जयमङ्गला, अनेन जश्त्वात् ? उच्यते । 'तसौ मत्वर्थे' ( १।४।१९ ) इत्यनेन भसंज्ञया पदसंज्ञाया बाधितत्वात् ।।

मरुत्वानित्यत्र झय इति वत्वम् ।।

### रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।। ८।२।४२ ।।

कथम् 'आर्त्तः', 'उपार्त्तः' ? उच्यते । 'उपसर्गादृति धातौ' (६।१।९१) इति वृद्धेर्बहिरङ्गत्वात् ।। कथं 'निमित्तम्' इति, मिदेर्नत्वभावात् ? उच्यते । 'तस्य निमित्तम्' (५।१।३८) इति निर्देशात् ।।

### क्विन्प्रत्ययस्य कुः ।। ८। २।६२ ।।

कथं 'दृग्भ्यां', दृशेः क्विपि कुत्वम् ? उच्यते । प्रत्ययग्रहणसामर्थ्यात् क्विन्प्रत्ययो यस्माद् दृष्ट इति बहुव्रीहौ अन्यप्रत्ययान्तादपि पदान्ते कुत्वमिति भागवृत्तिः ।। कथं तर्हि 'रज्जुसृड्भ्याम्' ? उच्यते । 'नशेर्वा' ( ८।२।६३ ) इति विभाषया सृजेर्न कुत्वमिति न्यासः ।। कथं 'विश्वसृग्विधिः' इत्यमरः ? व्यवस्थितविभाषात्वात् सृजेश्च कुत्वभावः । प्रसिद्धपदे तु न्यङ्क्वादित्वात् कुत्वमत्रोक्तम् । भाषावृत्तौ तु क्वचिदेवान्यप्रत्ययान्तस्य कुत्वमुक्तं सामर्थ्यादिष्ट्या प्रसिद्धेः ।।

भागवृत्तिरिति । भाष्यादावप्ययमर्थः स्पष्टः । विश्वसृगिति । विश्वसृडिति प्रसिद्धः पाठः । अत्राऽपि ग्रन्थे उपसर्गे घोः किरित्यत्रैवमेव पठितम् ।।

### रोऽसुपि ।। ८।२।६९ ।।

कथम् 'अहोवचनविन्यासः पठ्यते न च बुद्ध्यते', अनेनाहर्भागवद् रेफादेश उत्वाभावात् ? उच्यते । अहोरूपस्य निर्माणमिति पाठः कार्यः । अत्र 'रूपरात्ररथन्तरेषूपसङ्ख्यानं कर्तव्यम्' इति रेफं बाधित्वा रुत्वविधानात् ।।

अहोवचनेत्याद्युद्धरणं कुत इति न ज्ञायते। परमेतत् प्रतीयते यदत्र अहो इति निपातो न त्वहन्शब्दस्य रूपमिति। तत्र च शङ्कासमाधाने अनर्थके ॥

**र्हलि च ॥ ८।२।७७ ॥**

कथं 'ष्ठीवनं' 'सीवनम्', हल्परत्वाभावात्? उच्यते। पृषोदरादित्वाद् गुणाभावो दीर्घश्च। 'ष्ठिविसिव्योर्दीर्घश्च' इति चान्द्रसूत्रम् ॥

ष्ठीवनमित्यादि पुगन्तसूत्रे व्याख्यातम् ॥

**उपधायां च ॥ ८।२।७८ ॥**

कथं वीधातोः 'विव्यतुर्विव्युः' इति। न चानेन दीर्घे ह्रस्वो भविष्यति, पूर्वत्रासिद्धत्वाद्? 'अचः परस्मिन्' (१।१।५७) इति स्थानिवत्त्वाद् हल्परत्वाभावात् ॥ कथं चतुर इच्छति 'चतुर्यिता' इति, अनेन दीर्घः स्यात्? उच्यते। असुपीत्यनुवृत्तस्य षष्ठ्यन्तेन विपरिणामात् सुब्धातोर्नेति सम्बन्धात् सुब्धातोर्न भवति, गीर्भ्यामिति सुप्यपि भवतीति भाष्यम् ॥

**इति शरणदेवविरचितदुर्घटवृत्तौ अष्टमाध्याये द्वितीयः पादः ॥**

विव्यतुरित्यत्रेयङं बाधित्वा एरनेकाच इति यण्। स्थानिवत्त्वादिति। न पदान्तेत्यनेन दीर्घविधौ तन्निषेधस्तु न, 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्' इत्यनेन निषेधविषयपरिगणनात्। पूर्वत्रासिद्धीयत्वान्निषेधश्च यदीष्टस्तर्हि अङ्गाधिकारविहितत्वेन प्रत्ययाश्रितस्य यणो बहिरङ्गत्वेन प्रकृत्याश्रयस्य च दीर्घस्यान्तरङ्गत्वेन यणोऽसिद्धत्वं बोध्यम्। उक्तं परिगणनं पूर्वत्रासिद्धीयनिषेधविषयमपीत्यपरे।

चतुर्यितेति। इच्छार्थकक्यजन्तात्तृच्, इडागमः, अतो लोपः, क्यस्य विभाषेति लोपविकल्पादुपधाभूतस्य रेफस्य यकारपरत्वेन हल्परत्वात् कथं नोपधाभूतस्य उकारस्य दीर्घ इति प्रश्नः। अत्र प्रत्ययाश्रितत्वेन बहिरङ्गस्यातो लोपस्य प्रकृत्याश्रयत्वेनान्तरङ्गे दीर्घे कर्त्तव्येऽसिद्धत्वं वृत्त्यादावुक्तम्। भाष्योक्तं समाधानन्त्वाह— असुपीत्यादिना। सुप्यपि इति। सप्तम्यन्तस्य षष्ठ्यन्ततया विपरिणामात्सुपि परेऽपि भवतीत्यर्थः। एतच्च पुरुषोत्तमानुसारेण। भाष्ये तु सप्तम्यन्तस्याऽसुपीत्यस्य पञ्चम्या विपरिणाम उक्तः। तथा च सुपः परो यो हल् तत्परयोः र्वोर्दीर्घो नेत्यर्थः। चतुर्यितेत्यत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्य यकारस्य सुपः परत्वमिति न दीर्घः, गीर्भ्यामित्यत्र तु तदभावेन दीर्घो भवतीति बोध्यम् ॥

**इति दुर्घटवृत्तिविवृतावष्टमाध्यायस्य द्वितीयः पादः ॥**

## अथ तृतीयः पादः ।।

### मतुवसो रु सम्बुद्धौ छन्दसि ।। ८।३।१ ।।

### पुमः खय्यम्परे ।। ८।३।६ ।।

कथं 'पुंकाण्डम्' इति, अनेन रुत्वभावात् ? उच्यते । असाधुरेवायम् । पुंस्काण्डमिति पाठः ।।

### नश्छव्यप्रशान् ।। ८।३।७ ।।

कथं 'महाँ हि यत्नस्तव देवदारौ' इति ? उच्यते । महान् हि यत्न इति पाठः ।।

### खरवसानयोर्विसर्जनीयः ।। ८।३।१५ ।।

कथं 'रथातिगाः', रेफात् (पूर्वस ? पर)वर्णाभावाद् अवसानाऽविषयत्वाद् रेफस्य विसर्जनीयाभावात् ? उच्यते । रेफेण पदस्य विशेषणे रेफान्तस्य पदस्य विसर्जनीयः । अनुन्यासकारस्तु अवसानस्यापि बौद्धं परत्वमाश्रितवान् । विसर्जनीय इति कालापानां बिन्दुद्वयस्य संज्ञा ।।

बौद्धं परत्वमिति । तथा चात्रावसान इत्यपि परसप्तमीति भावः ।।

### लोपः शाकल्यस्य ।। ८।३।१९ ।।

कथं 'गवित्याह', वलोपप्रसङ्गात् ? उच्यते । पदान्तत्वाभावादिति 'सम्बुद्धौ शाकल्यस्य' ( १।१।१६ ) इत्यत्रानुन्यासः ।।

### नश्चापदान्तस्य झलि ।। ८।३।२४ ।।

कथं 'कुवलयं वलयन् मरुदाववौ, इति माघः । वलयन्निति पदान्तनकारस्यानुस्वाराद्यमकम् । न चानुस्वारव्यवधानाद् व्यपेतयमकम्, अव्यपेतयमकप्रकरणात् ? उच्यते । व्यञ्जनस्य यमके अव्यवधायकत्वात् वलयन्नित्येवमेवास्तु ।।

### कुप्वोः ᳲकᳲपौ च ।। ८।३।३७ ।।

कथं 'भास्करः' अनेन ᳲकादेशात् ? उच्यते । 'दिवाविभानिशा-

प्रभाभास्कर' ( ३।२।२१ ) इति निपातनात् । भाषावृत्तौ तु भास्कर-शब्दः कस्कादिषु पठ्यते ॥

**इदुदुपधस्य चाऽप्रत्ययस्य ॥ ८।३।४१ ॥**

कथम् 'कान्तः सर्वगुणोपेतो बाले दुःखेन लभ्यते' इति कण्ठाभरणम्, हे बाले ! दुःखेन लभ्यत इत्यर्थः ? उच्यते । 'सुख दुःख तत्क्रियायाम्' इति विसर्जनीयोपधो धातुः पठ्यते । तस्येदं रूपम् ॥ कथं 'मातुः करोति' ? कस्कादिषु भ्रातुष्पुत्रशब्दपाठाद् एकादेशनिमित्तादिणः परस्य विसर्जनीयस्य षत्वं नास्तीति भाष्यम् ॥

धातुरिति । कण्ड्वादिष्विति शेषः । विसर्जनीयेति । तथा चोच्चारणसामर्थ्यान्नात्र षत्वम् । भाष्यमिति । समस्तोऽयं सन्दर्भो भाषावृत्तेर्गृहीतः ॥

**तिरसोऽन्यतरस्याम् ॥ ८।३।४२ ॥**

कथं 'तिरस्कृत्य जराभिभाविना' माघः, (कथं) 'गौरीमुखतिरस्कारलज्जयेव न वर्धते' इति, गतिग्रहणानुवृत्तेः । गतित्वं च 'तिरोऽन्तर्धौ' (१।४।७१) इत्यन्तर्धौ ? उच्यते । अन्तर्धिग्रहणमसन्निधानोपलक्षणार्थं द्रष्टव्यम् । तिरस्कारे चासन्निधानं भाव्यते । केचिदिह गतिग्रहणं नानुवर्तयन्तीति भाषावृत्तिः ॥

**षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ॥ ८।३।५३ ॥**

कथं 'श्रियः पतिः श्रीमति शासितुं जगद्' इति ? 'वा छन्दसि' ( ६।१।१०६ ) इत्यनुवृत्तेः ॥ कथं तर्हि 'वाचस्पतिरुवाच' इति ? उच्यते । क्वचिच्छान्दसा अपि भाषायां प्रयुज्यन्ते । कस्कादिषु वा द्रष्टव्यम् । एवं 'दिवस्पतिः' ॥

अनुवृत्तेरिति । तथा च न लोकेऽस्य प्रवृत्तिः । यदि लोके न प्रवर्तेत इत्यभ्युपेयते तर्हि कथं लोके सत्वमिति शङ्कते–कथमित्यादिना ॥

**आदेशप्रत्यययोः ॥ ८।३।५९ ॥**

कथं 'प्रियस्य', एकारस्य कण्ठतालव्यत्वात् । 'यो ह्युभयोस्स्थाने निष्पद्यते लभतेऽसौ प्रत्येकमपि व्यपदेशम्' इति कण्ठ्यत्वात् कण्ठ्येन

सावर्ण्यादिकारग्रहणेन ग्रहणात् षकारः स्यात् । न च प्रयत्नभेदः । 'अ अ' ( ८।४।६८ ) इति संवृतोऽप्यकारो विवृतः प्रतिज्ञायते । 'एङौ विवृततरौ' इति प्रकर्षदोषो नास्ति, जातौ विवृतत्वाश्रयादिति रक्षितः । न चैवं गौरित्यत्र सम्बुद्धिलोपः स्यात् । 'एओङ्' इति ङकाराद् एङैचोस्सावर्ण्याभावात् ? उच्यते । व्यक्तौ सावर्ण्याभावान्न षत्वम् । लिङ्गं चात्र 'अङ्गस्य' ( ६।४।१ ) इति । अवश्यं चैतत् । अन्यथा दासीष्टेत्यत्र घत्वं स्यात् । वयस्यास्विति निर्देशान्न 'नाज्झलौ' (१।१।१०) इति निषेधः, अगृहीतसवर्णानामचां प्रतिषेधवचनात् । अयं (च) न्यासोऽसङ्गतः स्यात्—'अत्राप्येवंक्रमेण ,षत्वाभावाद् इण्ग्रहणाद्' इति न्यासः ।। कथं 'निंस्से', 'नुंविसर्जनीय' (८।३।५८) इत्यनुवृत्तेः षत्वभावात् ? उच्यते । प्रत्येकं व्यवधानाभ्युपगमात् । 'पुंस्सु'इत्यत्र न भवति, नुंस्थानिकानुस्वारोपलक्षणार्थत्वात् ।।

प्रकर्षदोष इति । तेन च अकारैकारयोः सावर्ण्याभाव इत्यापादनीयम् । ङकारात् = ङकारेण पृथक्प्रत्याहाराश्रयणात् । व्यक्तौ = आक्षरसमाम्नायिके वर्णे । सवर्णसंज्ञाकाले ग्रहणकशास्त्रस्यालब्धात्मकत्वाच्चैतदुपपद्यते । प्रकर्षदोषश्चात्र सावर्ण्यबाधकः । व्यक्तिनिष्ठं सावर्ण्यमावश्यकमत्रेत्याह—अवश्यमिति । घत्वमिति । जातिपक्षाश्रयेण सावर्ण्ये स्वीकृते यथा अकारहकारयोः सावर्ण्यं प्राप्तम् तथा आकारहकारयोरपि । तत्र चाद्यस्याक्षरसमाम्नायिकत्वेन नाज्झलाविति सावर्ण्ये प्रतिषिद्धेऽपि अन्त्यस्य न प्रतिषिध्येत, नाज्झकलाविति सूत्रेण आक्षरसमाम्नायिकानामगृहीतसवर्णानामेव प्रतिषेध्यत्वात् ! आकारस्य च तथात्वाऽभावात् । आक्षरसमाम्नायिकानामेव प्रतिषेधस्तु नाज्झलाविति प्रतिषेधशास्त्रविषयप्रकल्पनोत्तरजायमानसवर्णसंज्ञासूत्रार्थबोधोत्तरकालिकत्वेनाणुदित्सूत्रार्थबोधस्य प्रतिषेधशास्त्रार्थावबोधसमयेऽलब्धात्मकत्वात् । एवञ्च आकारहकारयोः सावर्ण्ये दासीष्टेत्यादावाकारस्य हकारसवर्णतया दादेर्धातोर्घ इति घत्वमापद्येत, तत एव इणत्वेन च सकारस्य मूर्धन्यापत्तिश्च । अतो न आकारहकारयोः सावर्ण्यम् । अत एव वयस्यासु मूर्ध्नो मतुबित्यादयो निर्देशा आकारात्परस्य सस्य मूर्धन्याभावं प्रतिपादयन्त उपपद्यन्ते । तदेवं व्यक्तौ = अक्षरसमाम्नायोपदिष्टवर्णे सावर्ण्यमिति सिद्धे अकारैकारयोर्न सावर्ण्यम्, एकारस्य विवृततरत्वात् । ततश्च अकारादुत्तरस्य सस्य न षत्वम् । जातिपक्षेऽणुदित्सूत्रमपि न कार्यमित्यपि

बोध्यम् । वत्रस्यास्त्रित्यत्र वेलास्त्रिति पाठकल्पनं तु गणपतिशास्त्रिणो नावश्यकम् । अगृहोतेत्यादि सवर्णदोर्घसूत्रस्थन्यासग्रन्थतो दर्शितम् ॥

**उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ॥ ८।३।६५ ॥**

कथम् 'दुःस्थः', सुस्थः', 'सुस्थितः' ? उच्यते । उपसर्गप्रतिरूपकत्वादिति भाषावृत्तिः ॥ कथम् 'अतिस्तुतम्' इति ? 'अतिरतिक्रमणे च' (१।४।९५) इति पूजातिक्रमणयोः कर्मप्रवचनीयत्वात् ॥

**अवाच्चालम्बनाविदूर्ययोः ॥ ८।३।६८ ॥**

कथम् 'अवष्टब्धः' ? उच्यते । 'ष्टभि स्कभि प्रतिबन्धे' इत्यस्य सुषामादित्वात्, 'अवष्टब्धनिष्टब्धौ च' इति वचनाद्वा ॥

अवष्टब्धः = प्रतिबद्धः ॥

**अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥ ८।३।९७ ॥**

कथं 'सव्येष्ठाः', 'सव्येष्ठारौ', 'परमेष्ठी' ? औणादिका एते सुषामादिषु ज्ञेया इति भाषावृत्तिः ॥

सव्येष्ठा इति । सव्ये तिष्ठतीति विग्रहे 'दिवेर्ऋः' इति 'नयतेर्डिच्च' इति डिति चानुवर्त्तमाने 'सव्ये स्थछन्दसि' इति तिष्ठतेर्ऋप्रत्यये डित्त्वाट्टिलोपे समासे, तत्पुरुषे कृतीत्यलुकि प्रथमैकवचने अनङि दीर्घे सव्येष्ठा इति भवति । 'परमेस्थः किच्च' इति इनिप्रत्ययस्य कित्त्वादातो लोपे प्रथमैकवचने सौ चेति दीर्घे परमेष्ठीति निष्पद्यते । अत्र च प्रकृतसूत्रे स्थ इति स्वरूपग्रहणात् 'स्थास्थिन्स्थॄणामिति वक्तव्यम्' इति वचनात्षत्वमिति काशिका । सुषामादिष्विति । एतच्च न्यासेऽपि ॥

**सात्पदाद्योः ॥ ८।३।१११ ॥**

कथं 'तनुषे तनुषेकमनङ्गम्' इति वासवदत्ता, सेस्सकारस्यानेन षत्वनिषेधात् ? उच्यते । अपपाठ एवायम् ॥ कथम् 'त्रिष्टुप्', 'अनुष्टुप्', षत्वलक्षणाभावात्, 'स्तुभु स्तम्भ' इत्यस्य सोपदेशत्वात् ? सुषामादित्वादिति । क्वचित् प्रतिस्तब्धः ॥ कथं 'निष्टब्धाश्छात्राः' इति । निपूर्वस्य स्तम्भेरिति वर्णदर्शनात् । नि (पू ? पूं) र्वान्निपातनं च ।

तथा च चान्द्रं सूत्रम्—'निःप्रतिभ्यां स्तम्भेः' इति । 'खर्परे शरि वा लोपो वक्तव्यः' । निरस्सकारविसर्जनीयलोपाः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ अष्टमाध्याये तृतीयः पादः ॥

भाषावृत्त्याद्यनुसारेण समाधत्ते—निर्पूर्वस्येत्यादिना । निरो रेफस्य विसर्गे, तस्य च लोप इत्येकम्, लोपाभावपक्षे वा शरीत्यनेन विसर्गस्य विसर्गे 'विसर्गसहितमेकम्, उभयाभावे सत्वे चैकमिति निष्टब्यः, निःष्टब्धः, निष्ष्टब्धः इति रूपत्रयमित्याह—निरस्सकारेत्यादिना ॥

इति दुर्घटवृत्तिविवृतावष्टमाध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः ॥

### रषाभ्यां नो णः समानपदे ॥ ८।४।१ ॥

### पूर्वपदात् संज्ञायामगः ॥ ८।४।३ ॥

कथं 'पौलस्त्यो नरवाहनः', अनेन णत्वभावात् ? उच्यते । क्षुभ्नादेराकृतिगणत्वात् । एवं 'दुर्नामा दीर्घकोशिका', 'पुनर्नवा तु शोफघ्नी', 'श्रीधनः शास्ता मुनिः', 'स्वर्भानुः', 'चित्रभानुः' इत्यादि साध्यम् ॥

### वाहनमाहितात् ॥ ८।४।८ ॥

कथं 'धनदो नरवाहनः' इति, अनेन णत्वविधानात् ? उच्यते । अनाहितवाचित्वात् नरशब्दस्य, क्षुभ्नादिपाठाद् वा । एवं 'पूर्वपदाद्' (८।४।३) इत्यपि न प्रवर्त्तते ॥

एवम् = क्षुभ्नादिपाठे स्वीकृते सति ॥

### प्रातिपदिकान्तनुम्विभक्तिषु च ॥ ८।४।११ ॥

कथं 'प्रेन्वनम्', नुमाश्रयणत्वात् ? उच्यते । साहचर्यात् प्रत्यासत्तेर्वा प्रातिपदिकाद्विहितस्य नुमो ग्रहणात् । नैतदस्ति 'प्रेण्वनम्'-इत्यनुपदकारेण नुम उदाहरणमुपन्यस्तं तन्न स्यात् ? उच्यते । मतभेदो द्रष्टव्यः । प्रेन्वनमित्याद्यसमासो वा, उपसर्गप्रतिरूपकत्वात् । इह पूर्वपदादिति वर्त्तते ॥ कथं 'प्रपक्वानि'[1], 'क्षत्रिययूनाम्' इति ? उच्यते । क्षुभ्नादित्वादिति भाषावृत्तिः ॥

---

१. 'प्रकानाः ?' इति मुद्रितः पाठोऽशुद्धः ।

यद्यपि मुद्रितपुस्तक इदं सूत्रं कुमति च इत्यस्यानन्तरं दृश्यते तथापि काशिकाद्यनुरोधेनात्रैव स्थापितमस्माभिः। क्रमश्च परिपालितो भवत्यनेन। प्रेन्वनमित्यत्र पूर्वनकारस्यानेन प्राप्तिः। उत्तरनकारस्य च इजादेः सनुम इत्यनेन प्राप्तं णत्वं नुम्ग्रहणस्य तत्राप्यनुस्वारोपलक्षणत्वेन वारितं न्यासादौ। वर्त्तत इति। तथा चेन्वनमित्यस्य समासचरमावयवत्वाऽभावेन नोत्तरपदत्वमिति न णत्वप्रसङ्गः॥

## एकाजुत्तरपदे णः ॥ ८।४।१२ ॥

कथं 'ब्रह्मघ्नमपि चण्डालम्' इति ? उच्यते। क्षुभ्नादित्वात्। 'हादेशे कुव्यवाये नेष्यते' इति तु भाष्यम् ॥

अत्र 'णादेशो (घ) व्यवाये नेष्यते' इति संशोधितमुद्रितः पाठोऽयुक्तः। यथाभाष्यं तु स्थापितमस्माभिः॥

## कुमति च ॥ ८।४।१३ ॥

कथं 'दुष्खेन भोजयितुमाशयिता शशाक' इति माघः ? उच्यते। 'षात् पदान्तात्' ( ८।४।३५ ) इति निषेधात्। क्षुभ्नादित्वादिति सुभूतिः ॥ कथम् 'शास्त्रवाक्यानि' इति 'उपदेश' (१।३।२) सूत्रे वृत्तिः, तथा 'तूर्याङ्गानाम्' इति 'द्वन्द्वश्च'[1] ( २।४।२ ) इति सूत्रे वृत्तिः, तथा 'चन्द्रगोमिनाम्' इति ? क्षुभ्नादित्वात् ॥

दुष्खेनेत्यत्र इदुदुपधस्येति षत्वम्। दुःखेनेति तु प्रसिद्धः पाठः। एवञ्च दुस् इति सान्त उपसर्गोऽत्र, न रेफान्तः, रेफस्थानिकविसर्गस्य हयवरट्सूत्रभाष्योक्तरीत्या सत्वाभावात्। अतस्तस्य दुःखेनेत्येव भवति ॥

## उपसर्गादसमासेऽपि णोपदेशस्य ॥ ८।४।१४ ॥

कथं 'दुर्नीतम्', 'दुर्नयम्' इति ? उच्यते। उपसर्गप्रतिरूपकत्वादिति भाषावृत्तिः। यद्येवं 'षात् पदान्तात्' (८।४।३५) इत्यत्र 'षादिति किम्' इत्युक्त्वा 'निर्णयः' इत्युक्तम्, तद्व्याहन्यते ? न। तत्रोपसर्गग्रहणं भविष्यति ॥

भाषावृत्तिरिति। सम्प्रति तु तत्र 'कथं दुर्नयः ? क्षुम्नादित्वाद्' इति पाठः। इत्युक्तमिति। भाषावृत्ताविति शेषः। आचार्यान्तरस्याप्यत्र सम्मतिः॥

---

१. ( तीर्थज्ञानमिति ? ) 'द्वन्द्वे च' ( १।१।३१ ) इति मुद्रितमशुद्धम्।

**कृत्यचः ।। ८।४।२९ ।।**

कथं 'प्रख्यानम्', 'प्रध्यानम्' इति, अनेन णत्वात् ? उच्यते । 'वमोर्वा' ( ८।४।२३ ) इत्यतो वाग्रहणमनुवर्तते मण्डूकप्लुतिन्यायेन, तस्य व्यवस्थितविभाषात्वात् ।।

**इजादेः सनुमः ।। ८।४।३२ ।।**

कथं 'प्राङ्गणे पान्तु युष्मानूष्माणम्' इति मयूरः, इजादेरेवेति नियमात् णत्वाभावात् ? 'अङ्गणमिति पृषोदरादित्वाण्णत्वम्' इति धातुप्रदीपिका । अन्ये त्वत्र णत्वं नेच्छन्त्येव । 'अङ्गणं चत्वराजिरे' इत्यमरे अपपाठ एव । शतकेऽपि प्राङ्गने इत्येव पाठः । 'अचलाङ्गन-मङ्गने' इति माघानुप्रयोगः ।।

नियमादिति । प्रेङ्खनमित्यादौ कृत्यच इत्येत्र सिद्धे सति पृथग्योगारम्भस्य नियमार्थत्वमुक्तम् ।।

**पदान्तस्य ।। ८।४।३७ ।।**

कथं 'कृतकर्मणः' इति, लुप्तविभक्तौ प्रत्ययलक्षणत्वेन णत्व-निषेधात् । 'उत्तरपदत्वे चापदादिविधौ' इति निषेधात् । 'पदव्य-वायेऽपि' ( ८।४।३८ ) इत्यत्र हि माषकुम्भवापेनेत्यादिसिद्धये रक्षितेनोक्तम्—'सात् पदाद्योः' ( ८।३।१११) इत्यत आरभ्य यो विधिः स सर्वः पदादिविधिः' इति । एवञ्च विधिरित्यस्योपलक्षणार्थत्वात् 'षात् पदान्तात्' ( ८।४।३५ ) इत्यत्र सप्तमीसमासाश्रयणाल्लभ्यते । तद्धि 'सुसर्पिष्केण' इत्येतदर्थम् । तच्चैवं भवति नान्यथा । ततश्चाणत्वं पदादिविधिरेवेति ? उच्यते । 'भावकर्मणोः' ( १।३।१३ ) इति निर्देशात् । तद्वदत्र ।।

कृतं कर्म येनेतिविग्रहे समासे सुब्लुकि कृतकर्मन् इत्यत्र नकारस्य णत्वे प्राति-पदिकत्वे द्वितीयायां बहुवचने प्रकृतं रूपम् । तत्र प्रत्ययलक्षणेन कर्मन्नित्यस्य पदत्वे नकारस्य पदान्तत्वमिति णत्वं कथम् ? न लुमतेति निषेधस्तु न, पदत्वस्य सुबन्तधर्मतयाऽङ्गधर्मत्वाऽभावेन तदप्रवृत्तेरिति प्रश्नाशयः । पदादिविधिं वर्जयि-त्वोत्तरपदस्य पदत्वे कर्त्तव्ये प्रत्ययलक्षणं कथं न प्रतिषिध्यत इति प्रतिपृच्छति-

उत्तरपदत्व इति । न च णत्वनिषेधस्य पदादिसम्बन्धित्वम् न वा विधित्वमित्यपदादिविधित्वेन प्रकृतवार्त्तिकेन प्रत्ययलक्षणप्रतिषेधः स्यादिति प्रतिप्रश्नार्थः । अत्र निषेधादित्यतः परं न णत्वनिषेध इति पूरणीयं प्रतिप्रश्नवाक्ये । एतन्निरस्यन्नाह—पदव्यवायेऽपीत्यादि । माषाणां कुम्भो माषकुम्भः, तस्य वापो माषकुम्भवाप इत्यत्र कुम्भशब्दस्य प्रत्ययलक्षणेन पदत्वमाश्रित्य पदव्यवायेऽपीति णत्वनिषेधः । पदादिविधित्वाच्च उत्तरपदत्व इति प्रत्ययलक्षणनिषेधो नेति रक्षिताशयः । तथा च निषेधेऽपि पदादिविधित्वस्याङ्गीकाराद्विधिशब्दस्यो पलक्षणत्वं पर्यवस्यतीति पदान्तस्येत्यपि निषेधः पदादिविधित्वेन गृह्यत इति युक्तः कृतकर्मणेत्यादौ निषेध इति तात्पर्यं सन्दर्भस्यास्य लभ्यत इति । अयमर्थः—पदस्यान्त इति षष्ठीसमासे सुर्पिषुशब्दस्यापि प्रत्ययलक्षणेन पदत्वमाश्रित्य सुसर्पिष्केणेत्यत्रापि षात् पदान्तादिति णत्वनिषेधः प्राप्तः, तद्वारणाय पदे (परे) अन्त इति सप्तमीसमास आश्रितः । अयं च निषेधस्यापि पदादिविधित्व एवोपद्यते । अन्यथा 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधे सुसर्पिष् इत्यस्य पदत्वमेव नेति षष्ठीसमासेऽपि निषेधाप्रवृत्तिः । वस्तुतस्तु स्वादिष्वसर्वनामस्थाने इत्यनेन पदत्वात्प्रत्ययलक्षणप्रतिषेधेऽपि सप्तमीसमास आवश्यकः । तथा चास्य पदादिविधित्वाभावेऽपि न क्षतिरिति विभावनीयम् । भावकर्मणोरिति कर्तृकर्मणोरित्यादेरुपलक्षणम् ॥

## स्तोः श्चुना श्चुः ॥ ८।४।४० ॥

कथं 'शत्रून् जयति' ? उच्यते । असंहितायां भविष्यति ॥ कथम् 'अल्पाच्तरम्' इति ? उच्यते । 'नञ्स्नञौ भवनाद्' इति निर्देशादिति 'अल्पाच्तरम्' इत्यत्र रक्षितः ॥ कथम् 'जश्त्वम्' ? 'शात्' ( ८।४।४४ ) इति प्रतिषेधान्न श्चुत्वम् । 'व्रश्च' ( ८।२।३६ ) इत्यादिना च न षत्वं, धातुग्रहणानुवृत्तेः ॥ कथं 'मज्जति', 'लज्जते', 'झलां जश् झशि' ( ८।४।५३ ) इति सस्य दकारे तस्यानेन जकारो न युक्तः, पूर्वत्रासिद्धत्वात् ? उच्यते । 'मज्जिनशोर्झलि' ( ७।१।६० ) ? इति निर्देशादिति न्यासः । यद्वा 'गाङ्कुटादि' ( १।२।१ ) सूत्रे रक्षितेनोक्तम्—'निशाशब्दस्य निश्भावे 'झलां जशोऽन्ते' (८।२।३९) इति जकारे सप्तमीबहुवचनस्य श्चुत्वेन तालव्ये शकारे जकारस्य चर्त्वेन चकारे निच्शु इति रूपम् । 'शश्छोऽटि' ( ८।४।६३ ) इति

छकारे निच्छु इति रूपम्' इति। तथात्रापि श्चुत्वेन दन्त्यस्य तालव्यशकारव्यक्तौ तस्य जश्त्वेन दकारे पुनः श्चुत्वेन तस्य जकारे मज्जतीत्यादि। यथा 'चिणो लुक्' (६।४।१०४) इत्यत्र वृत्तौ अकारितरामित्यत्र लुकि पुनस्तयोर्लुक्[1] नास्ति 'असिद्धवदत्राभात्' (६।४।२२) इति। यद्वा झशि जश्त्वस्यासिद्धत्वात् श्चुत्वेन सस्य शकारः। तस्य जश्त्वेन जकार इति भाषावृत्तिः॥

अल्पाच्तरमित्यत्र कुत्वाभावश्च पूर्वमेवोक्तः। पूर्वत्राऽसिद्धत्वात् = श्चुत्वे कर्त्तव्ये जश्त्वस्याऽसिद्धत्वात्। अत्र 'मस्जिनशोर्झलि' इति मुद्रितः पाठः 'भृज्जतीनां क्ङिति च' इत्येवं रूपेण गणपतिशास्त्रिसंशोधितश्च व्यर्थ एव, न्यासकारमते 'मज्जिनशोर्झलि' इत्यस्यैव सूत्रपाठात्। स्पष्टं चेदं प्रकृतसूत्रन्यासे। कश्चित्त्वाह- 'न मुने' इत्यत्र नेति योगविभागान्नाऽसिद्धत्वम्। योगविभागश्चायं लण्सूत्रे कैयटेनोक्तः। भृज्जतीनामित्यादिनिर्देशश्चात्र मानम्। मुद्रितपुस्तके'....ताल-व्यशकारव्यक्तौ पुनश्चुत्वेन तस्य जकारे....' इति पाठोऽसंगतत्वादुपेक्षितोऽस्माभिः। पुनः श्चुत्वे कर्त्तव्ये जत्वस्याऽसिद्धत्वं कथं नेति शङ्कां समाधत्ते दृष्टान्तमुखेन—यथेत्यादिना। यथा 'अकारितराम्', 'अहारितराम्' इत्यादौ तिङस्तकारयोः चिणो लुगिति लुकि सति पुनस्तरप्तमप्तकारयोस्तेनैव लुक् कथं नेति प्रश्ने असिद्धवत्सूत्रेण द्वितीये चिणो लुकि कर्त्तव्ये प्रथमस्य चिणो लुकोऽसिद्धत्वं विषयभेदाल्लक्षणभेदमाश्रित्योक्तं तथा प्रकृतेऽपि सस्य श्चुत्वविधायकं दस्य च श्चुत्वविधायकं लक्षणं भिद्यते। तथा हि—पूर्वं सस्य जश्त्वेन दकारे तस्य श्चुत्वे कर्त्तव्ये जश्त्वस्याऽसिद्धत्वेऽपि सस्य श्चुत्वेन शकारे तस्य जश्त्वेन दकारे पुनः प्रवर्त्तमानं श्चुत्वशास्त्रं विषयभेदाद् भिन्नमित्यस्मिन् कर्त्तव्ये जश्त्वस्य नाऽसिद्धत्वमिति। परमत्र यथामुद्रितरक्षितग्रन्थोपयोगं न पश्यामः। मन्यामहे, क्वचित्स्खलनं जातमिति। तयोः = तरप्तमब्घटकतकारयोः। अत्र च पक्षे विषयभेदाल्लक्षणभेदेऽपि देशभेदे प्रमाणाभावः प्रक्रियागौरवं चेति समाधानान्तरमाह—यद्वेति॥

### ष्टुना ष्टुः॥ ८।४।४१॥

कथं 'षड्धा', 'षोढा'? उच्यते। पृषोदरादित्वान्नित्यं ष्टुत्वम्, उकारो वेत्येके। तेन षोढा, षड्ढा इति। उभयं विकल्पितमित्यपरे। तेन षड्धेति न्यासरक्षितौ॥

---

१. 'तयोर्लुक्' इत्यत्र 'तरपो लुक्' इति संशोधनमयुक्तम्।

षोढेति । 'षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च, धासु वा' इति वार्त्तिकद्वयं पृषोदरादिसूत्रे ( ६।३।१०९) पठितम् । एके = कैयटादयः । अपरे = रक्षितादयः । हरदत्तेन च धासु वेति वार्त्तिकव्याख्यायाम् 'उत्वस्यायं विकल्पः । उत्वपक्षे तु ष्टुत्वं नित्यमेव भवति' इत्युक्तम् । तत्रोत्तरवाक्येनोत्वाभावपक्षे ष्टुत्वमपि नेति प्रतीयते—षड्धेति भवति । एतच्च न युक्तमिति नागेशादयो मन्यन्ते, अन्यथा सन्नियोगशिष्टन्यायेनैव सिद्धे पृथग्वचनारम्भवैयर्थ्यापत्तेः । 'धासु वेति वक्तव्यम्, इति विवरणभाष्ये ष्टुत्वस्य पृथग्विधानानर्थक्यादित्यर्थः । वार्त्तिकस्य पृथग्वचनादित्यर्थस्तु न सम्यक् । न्यासरक्षिताविति । अत्र न्यासे तु 'उत्वस्यैवायं विकल्पः, ष्टुत्वं तु नित्यमेव भवति' इति द्वितीयवार्त्तिकव्याख्यायामुक्तत्वान्नैतन्न्यासमतमिति प्रतीमः । अत एवैतदनन्तरं 'षोढा, षड्धा' इति प्रतीकपाठोऽपि लेखकप्रमादायातः, 'षोढा, षड्ढा' इति तु युक्तः । षड्दधातीत्यर्थे धात्रो धेटो वा स्त्रियां कप्रत्यये तु षड्धेत्येव भवति, 'धासु' इति बहुवचननिर्देशादिति स्पष्टं भाष्यादौ ॥

## खरि च ॥ ८।४।५५ ॥

कथम् 'अस्ति', अनेन सकारस्य तकारप्रसङ्गात् ? उच्यते । 'सः स्यार्धधातुका'दन्यत्र सस्य 'खरि च' ( ८।४।५५ ) इति तकारो न भवति । अन्यथा 'आर्धधातुके इति किम् ? वस्से, आस्से' इत्ययुक्तं स्यात् । ज्ञापकसमुच्चये तु 'उदःस्थास्तम्भोः पूर्वस्य' ( ८।४।६१ ) इति ज्ञापकान्न सकारस्य 'खरि च' इति चर्त्वेन तकार इत्युक्तम् । प्रकृतिचरां प्रकृतिचरो भवन्तीति सकारस्य सकार एवेत्यर्थः ॥

सः स्यार्धधातुक इति सूत्रम् (७।४।४९) । ज्ञापकादिति । खरि चेति चर्त्वेनैव तकारलाभादिदं व्यर्थमेव स्यादित्यर्थः ॥

## वा पदान्तस्य ॥ ८।४।५९ ॥

कथं 'पुम्वद्' इति, वकारस्य दन्त्यौष्ठ्यत्वात् परस्य सवर्णो वकारो नास्ति ? उच्यते । अन्तःस्था द्विप्रभेदाः । तेन सानुनासिको वकारो युक्त एव । ततश्च पुवँ्वत् पुंवदिति भवति । एवञ्च प्रमादलिखितं च तत् ॥ यदि दन्त्यौष्ठ्येन परसवर्णपक्षे वकार एव सानुनासिको भवति, ततश्च पुवँ्वत् पुंवदिति स्यात् । अतः[1] पुंवदस्ती-

१. 'यतः' इति मुद्रितम् ।

त्यर्थविवक्षायाम् क्विपि तस्य साधनं विहितं, तत्सन्दि(ग्धमि)ति ? उच्यते। 'बद स्थैर्ये' इत्यस्मात् क्विप्। पवर्गबकारादित्वात् सेत्स्यति ।।

पुम्वदिति। मकारस्यौष्ठ्यस्थानिकत्वेन दन्त्यौष्ठयवकारमवर्णत्वाभावादिति प्रश्नार्थः। अत्र 'कथं पुंवद्' इति मुद्रितः पाठोऽशुद्धः, तत्र प्रश्नानुदयात्। पुरुषोत्तमादिमतेन समाधत्ते—अन्तःस्था इत्यादिना। विवक्षायामिति। अपीतिशेषः। तत् = पुम्वत्। तस्य = पुम्वदित्यस्य। परसवर्णं इत्यादिः ।।

## झरो झरि सवर्णे ।। ८।४।६५ ।।

कथम् अष्टधातौ भवद्भ्याम्-प्रस्तावे 'अनचि च' ( ८।४।४७ ) इति द्वित्वे कृते एकदकारलोपोऽनेनोक्तः, अत्र वृत्तौ हल्ग्रहणानुवृत्तेः। प्रत्युदाहरणं च वाग्ग्मीति द्रष्टव्यम्। तथा च 'वाचो ग्मिनिः' ( ५।२।१२४ ) इत्यत्र भाषावृत्तिः—'द्विगुकारनिर्देशो वाग्ग्मी' इति। अवश्यं हल्ग्रहणानुवृत्तिर्ज्ञेया। अन्यथा 'ढो ढे लोपः' ( ८।३।१३ ) इत्यपार्थकमेव स्याद्, अनेनैव तु लोपसिद्धेः ? उच्यते। लेखकप्रमाद एव सः। यद्वा केचिद्धलनुवृत्तिं नेच्छन्ति। वाग्मीति एकगकारो दृश्यते। ढलोपश्च नियमार्थ एव स्यात्। व्यावृत्तिश्च लिड्डौकत इत्यादौ ।।

इति शरणदेवविरचितदुर्घटवृत्तौ अष्टमाध्याये चतुर्थः पादः ।।

दुर्घटवृत्तिः समाप्ता ।।

हल्ग्रहणेति। हलो यमामित्यतो हल इत्यनुवृत्तेर्हलः परस्य झरः सवर्णे झरि परे लोपः स्यादित्यर्थः काशिकायामुक्तः। प्रकृतसिध्यर्थं वाग्मीति द्विगकारकं रूपं प्रमाणयति—तथा चेति। काशिकायामपि द्विगकारकमेव रूपं दृश्यते। दीर्घादाचार्याणामित्यनेन पाक्षिके द्वित्वनिषेधेऽपि पक्षान्तरे तच्छ्रवणं भवत्येव। लोपसिद्धेरिति। लीढम्, गूढमित्यादावित्यादिः। लेखकोऽष्टधातुकर्त्ता, न लिपिकरः। यदि हलनुवृत्तिर्नेह तर्हि प्रकृतलोपेनैव लीढमित्यादिसिद्धेः ढो ढे लोप इति व्यर्थमित्याशङ्कायामाह—नियमार्थ एवेति। ढकारे परे यदि प्रकृतो लोपः स्यात्तर्हि ढकारस्यैव नान्यस्य। फलं तु लिड्ढौकत इत्यादौ डकारलोपाभावः ।।

यच्छैशवेऽधिगमितं गुरुणा जनित्रा
स्मृत्वा तदेव रचिता विवृतिस्तथापि।

कालात्ययेन सुलभे स्मृतिसम्प्रमोषे
युक्ता नवेति हृदयं परिशङ्कितं मे ॥ १ ॥
तत्सम्प्रदायपरिपूतमिहोचितं किम्
किम्वेतरन्निगदितं मतिविभ्रमेण ।
शब्दानुशासनविशेषविधानविज्ञाः !
तन्मानमत्र ननु तत्र भवन्त एव ॥ २ ॥
कच्चिद् यदीयमपदार्थकदर्थितत्वा-
द्वावर्जयेन्न सुधियां हृदयं तथापि ।
यस्येशितुः सकलशब्दमयं शरीरं
तस्याऽर्चनाय रचना न निरर्थिकेति ॥
एवं विभाव्य नयनाऽब्धिनभोदृगङ्के (२०४२)
सम्वत्सरे शिवपुरे नृपविक्रमस्य ।
ईशप्रसादवशतो विवृतिं समाप्य
प्रत्यर्पयामि गुरवे गुरुपूर्णिमायाम् ॥ ३-४ ॥
ग्रन्थार्थमात्मसात्कृत्वा सकाशाद् विवृतेः पुनः ।
स्वस्वप्रज्ञाऽनुसारेण शिष्यैर्वादः प्रवर्त्यताम् ॥ ५ ॥

इति श्रीनारायणमिश्रविरचितायां दुर्घटवृत्तिविवृतावष्टमाध्यायस्य चतुर्थः पादः ॥

# व्याख्यातसूत्रवार्त्तिकानुक्रमणी

——

# उद्धृतग्रन्थग्रन्थकारसूची

——

१. सुवर्णरेखस्य कियन्ति पद्यानि सुभाषितग्रन्थेषु दृश्यन्ते। मन्ये तस्यैव कृतिरियं स्यात्। अथवा 'सुवर्णरेखः' इत्यस्य स्थाने प्रमादादाकारान्तः शब्दः प्रयुक्तः।

## उद्धरणाऽनुक्रमणी



---

१. 'सलिलमन्वेषमाणो मुहुर्मुहु····' इति पाठः किन्नरमिथुनाऽप्राप्तौ निर्विण्णस्य चन्द्रापीडस्य वर्णने दृश्यते ।

२. अर्थाः पादरजःसमा गिरिनदीवेगोपमं यौवनम्
मानुष्यं जलविन्दुलोलचपलं फेनोपमं जीवितम् ।
धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनम्
पश्चात्तापहतो जरापरिणतः शोकाग्निना दह्यते ।। इति भर्तृहरिसुभाषितसंग्रहे सङ्कीर्णश्लोकेषु ३८३ तमं पद्यम् । मित्रलाभे तु वृत्तिस्थ एव पाठः ।

१. अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकम् ॥ चाणक्यशतके ५७

२. दृष्टे चन्द्रमसीत्यादिरूपेणेदं सुभाषितरत्नभाण्डागारे पृ० १२६, प० ७२ ।

१. पुण्डरीकोपचारप्रसङ्गे पाठान्तरमिदम् ।

२. किं मे वक्त्रमुपेत्य चुम्बसि बलान्निर्लज्ज लज्जा न ते
वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त निर्वञ्चसे ।
क्षीणाऽहं तव रात्रिजागरवशात्तामेव याहि प्रियां
निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ॥

इति श्रृंगारतिलके दशमं पद्यम् ।

३. कश्चित्कष्टं किरति करकाजालमेकोऽतिमात्रं गर्जत्येव क्षिपति विषमं वैद्युतं वह्निमन्यः ।
सूते जातं जवनमपरस्तेन जानीहि तावत् किं व्यादत्से विहग वदनं तत्र तत्राऽम्बुवाहे ॥
इति पूर्ण पद्यं सुभाषितरत्नकोशे ३३।५८ ।

४. उज्ज्वलदत्तस्योणादिसूत्रवृत्तौ पृ० १५१, भाषावृत्यर्थविवृतौ च भागवृत्तिस्थमिदं पद्यमित्युक्तम् ।

१. अत्रार्थे'स्थूणोर्णे स्त्रीयोगे स्तो गृहशशपूर्वयोर्नपुंसकता'इति वररुचिर्लिंगविशेषविधौ पद्यम् ।

२. 'स पातु विश्वमद्यापि यस्य मूर्ध्नि नवः शशी' इति पूर्वार्द्धसहितमिदं पद्यं सुभाषित-रत्नकोशे ४।३५ धर्मपालस्येति दृश्यते ।

३. प्रविश झटिति गेहं मा बहिस्तिष्ठ कान्ते ग्रहणसमयवेला वर्त्तते शीतरश्मेः ।
तव मुखमकलङ्कं वीक्ष्य नूनं स राहुर्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय ॥ इति शृंगार-तिलके षष्ठं पद्यम् । सुभाषितरत्नभाण्डागारेऽपि २।७५, पृ० ७९

४. 'चकम्पे तीर्णलौहित्ये तस्मिन्' इति रघुवंशे ४।८१ पाठो दृश्यते । मन्ये तस्यैव पाठभेदोऽयम् ।

१. जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ।
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ इति पूर्णं पद्यं सुभाषितरत्नभाण्डागारे, पृ० ११०, प० ९३ । काव्यप्रकाशादावपि दृश्यते ।

२. 'जीर्णमन्नं प्रशंसन्ति·····' इति पाठो भाण्डागारे, पृ० ४०३, प० ४१७ ।

---

१. ग्रामेऽस्मिन् पथिकाय नैव वसतिः पान्थाऽधुना दीयते
रात्रावत्र विवाहमण्डपतले पान्थः प्रसुप्तो युवा ।
तेनोद्गीय खलेन गर्जति घने स्मृत्वा प्रियां यत् कृतम्
तेनाऽद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥ इति सुभाषितरत्नकोशे ४९।२४;
सुभाषितरत्नभाण्डागारेऽपि पृ० २१७, प० १२ ।

२. प्रभुभक्तश्च शूरश्चेत्यादि चाणक्यशतके पद्यम्—६९ ।

३. कैवर्तकर्कशकरग्रहणच्युतोऽपि जालान्तरे निपतितः शफरो वराकः ।
दैवात्ततो विगलितो गिलितो बकेन वामे विधौ वद कथं व्यवसायसिद्धिः ॥
इति सुभाषितरत्नभाण्डारगारे ३७७ पृष्ठे ८३ पद्यम् ।

१. 'नाथ त्वामनुयाचे प्रसीद विजहीहि संगरारम्भम्' इति पाठः सुभाषितरत्नकोशे ४१।१५ दृश्यते। एतदनुसारेण मूलपाठोऽपि संशोध्यः।

२. इदं पद्यं चारित्रवर्धनादिभिः १३ सर्गस्य १५-१६ पद्ययोर्मध्ये पठितम्
निस्त्रिंशकल्पस्य निर्धजलानामेषा तमालद्रुमराजिनीला।
दूरादरालभ्रु विभाति वेला कलंकलेखामलिनेव धारा॥ इति।

३. 'निप्रतेः स्तव्ध.' इति वर्तमानः पाठः।

४. नीचं समृद्धमपि सेवति नीच एव दूरेण तं परिहरन्ति पुनर्महान्तः। शाखोटकं यधुरपक्व फलैरुपेतं सेवन्ति वायसगणा नतु राजहंसाः॥ सु० रत्नभाण्डागारे ४१९६६।

५. शरदि न वर्षति गर्जति वर्षति वर्षासु निस्स्वनो मेघः।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव॥
सु० रत्नभाण्डागारे, पृ० ३०५, प० ११६

---

१. अङ्गिरःस्मृतौ ४० पद्ये पत्याविति पाठः ।

२. वासः शुभ्रमृतुर्वसन्तसमयः पुष्पं शरन्मालती
धानुष्कः कुसुमायुधः परिमलः कस्तूरिकाऽस्त्रं धनुः ।
वाणी तर्करसोज्वला प्रियतमा श्यामा वयो नूतनं
मार्गः शाम्भव एव पञ्चनऊया गीतिः कविर्विल्हणः ॥
इति सुभाषितरत्नभाण्डागारे ५१९ पृष्ठे १०४७ पद्यम् ।

३. एतदन्ते 'चान्द्राः' इति पठ्यते । सम्प्रति चान्द्रव्याकरणे नोपलभ्यते ।
अमरकोषे ३।१।९५ लभ्यते । मन्ये 'चान्द्राः' इति 'चाऽमरः' इत्यस्यैव पाठभ्रंशः ।

४. लालयेत् पञ्च वर्षाणि दशवर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥ चाणक्यशतके ११ पद्यम् ।

५. नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः इति पञ्चतन्त्रे ३।१३६ ।

१. अयं पाठोऽयुक्त इत्युक्त्वा पुरुहूतद्विष इति पठति जयमङ्गलाकारोऽत्र ।
२. छन्दोमञ्जर्यादौ पिङ्गलसूत्रमिदमित्युक्तम् सम्प्रति तत्र नोपलभ्यते ।

१. यदि नाम कुले जन्म तत्किमर्थं दरिद्रता ।
दरिद्रत्वेऽपि मूर्खत्वमहो दुःखपरम्परा ॥ इति भाण्डागारे, पृ. ३३१, प० १८ ।

२. यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यश्चरन्तीं गां निवारय ॥
इति भाण्डागारे व्यासस्य, पृ. ३६२, पं. २, तत्रैव, पृ. ४८७, पं. २१६

---

१. भवितव्यं यथा येन नासौ भवति चान्यथा ।
नीयते तेन मार्गेण स्वयं वा तत्र गच्छति ॥
इति सु० भाण्डागारे ३७५ पृष्ठे ३४ पद्यम् ।

२. रमा जलधिजेन्दिरा इति पुरुषोत्तमीयत्रिकाण्डशेषे पाठः सम्प्रति ।

३. लभन्ते कथमुत्थानमस्थानं गुणिनो गताः ।
दृष्टः किं क्वापि केनाऽपि कर्दमात् कन्दुकोद्गमः ॥ इति पद्यं सुभाषितरत्नकोषे ४२।२६.

---

१. त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव मुक्ता स्थली
विश्रामस्थितिहेतवो न गणिता बन्धूपमाः पादपाः ।
बालापत्यवियोगकातरमुखी त्यक्ताऽधर्ममार्गे मृगी
मृग्यन्तः पदवीं तथाप्यकरुणा व्याधा न मुञ्चन्ति माम् ॥ इति पद्यं धर्मपालस्येति सुभाषितरत्नकोषपरिशिष्टे, पृ० ३३१ । क्वचित् मुक्तापीडस्येत्यपि दृश्यते ।

२. इषुवर्षमित्यादि पठ्यते मल्लिनाथेन ।

१. तन्वङ्गीनां स्तनौ दृष्ट्वा शिरः कम्पयते युवा ।
तयोरन्तरसंलग्नां दृष्टिमुत्पाटयन्निव ॥ पद्यमिदं पाणिनेरिति सुभाषितरत्नकोशे १६।५० दृश्यते ।

२. सुभाषितरत्नकोशे १९।१६.

३. त्वं सोदरस्या० इति जयमङ्गलासम्मतः पाठः ।

१. सुतनु जहिहि मौनं पश्य पादानतं मामिति च अमरुकस्य ३९ पद्यम् । सुभाषितरत्न-भाण्डागारे १५६ पृष्ठे ३२ पद्यं चादावेवमेव लभ्यते ।

२. अदाता पुरुषस्त्यागी धनं सन्त्यज्य गच्छति ।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥ इति भाण्डागारे, पृ० ३३९, पं० २

३. चान्दसूत्रमिदमिति वृत्तिकृत् । सम्प्रति तत्र नोपलभ्यते ।

४. धिग् धिक् तान् समयान् परिश्रमरुजो धिक्ता गिरो निष्फलाः
यत्रामूं न भवन्ति वल्लणगुणोत्खातामृतप्रीतयः ।
रोम्णां नृत्यभुवो विलोचनपयःपूराऽब्धिचन्द्रोदयाः
साहित्यप्रतिगण्डगर्वगलनग्लानिक्रियाहेतवः ॥ इति वल्लणस्येति सुभाषितरत्नकोशे ५०।६॥